क नु भवसि महात्मन्! ब्रूहि कष्टासवोऽमी
त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ति॥ १३ (ढ)

अत्र कविनिबद्धानुरागिवाला वक्री। अस्याः प्रौढ़ोक्तौ शब्दप्रत्यक्षानुभव-रूपं प्रमाणत्रयं परस्परव्याहतमपि सर्व्वमेव प्रमाकरणम्। न क्वापि तावत्प्रामाण्यमिति वस्तु, तेन च त्वं व्यापकोऽसीति वस्तु, तेनैकस्य सर्व्वानुगतत्वाद्विरोधे विरोधालङ्कारो व्यतिरेको वा। 'क नु भवसी'ति प्रश्नेन सन्देहालङ्कारः, तेन 'महात्मन्नि'ति कदाचिद्यदि न ब्रूषे, तदा कपटी त्वमिति हेत्वलङ्कारः। तेन 'कष्टासवोऽमी त्वदनुसरणपान्थाः कण्ठ एव भ्रमन्ती'ति, प्राणास्त्वदनुसरणे तव पश्चाद्गमने पान्थाः पथिकाः सन्तस्त्वदासमशक्य स्वस्थानन्यत्क्षा कण्ठ एव भ्रमन्ति। अत्र यद्यपि लोकव्यवहारदृष्ट्यैकवस्तुनोरेकस्मिन् क्षणे स्थलत्रय-वर्त्तित्वस्यासम्भवेन तज्ज्ञानस्यासम्भवात् प्रौढ़ोक्तिस्तथाप्यचिन्त्यैश्वर्य्ये श्रीकृष्ण एकक्षणे स्थलत्रयवर्त्तित्वं नासम्भवमित्याह—अस्याः प्रौढ़ोक्ताविति। प्रमाणत्रयं परस्परव्याहतं, एकक्षणे स्थलत्रयवर्त्तित्वस्य प्रमात्मकज्ञानजननेऽसमर्थमपि सर्व्वमेव प्रमाणत्रयं प्रमाकरणम्। क्वापि न कस्यापि वस्तुनोऽसम्भवः, अतो न क्वाप्यप्रामाण्यमिति वस्तु अङ्गं वस्तुरूपमेको भेदः। पुनस्तेन व्यापकत्वरूपवस्तुनैकस्य परिच्छिन्नस्य सर्व्वत्रानुगतत्वविरोधेन विरोधालङ्कारः। यद्यपि परमेश्वरत्वेन नायं विरोध (७) इत्याच्यते, तथापि व्यतिरेकालङ्कारस्तु भवत्वेवेत्याह—व्यतिरेको वेति। एतादृशः पुरुषोऽन्यो नास्तीति पुरुषान्तरातिशयोऽयमिति व्यतिरेकालङ्कार इत्यर्थः। तथा च वस्तुव्यङ्गोऽलङ्कार इति द्वितीयो भेदः। तेन सन्देहालङ्कारेण—तथा च मत्संदेहनिवर्त्तकं वाक्यं यदि न ब्रूषे तदा त्वं न महात्मा किन्तु कपटीति हेत्वलङ्कारः। तेनालङ्कारव्यङ्गोऽलङ्कार इति तृतीयो भेदः। तेन हेत्वलङ्कारेण मत्प्राणाः कण्ठ एव घूर्णन्ते, अतो निर्णीय कथ्यतामिति वस्तु व्यङ्ग्यम्।

---

(ढ) पद्यमेतत् कविकर्णपूरगोस्वामिनो गुरोः सुगृहीतनाम्नः श्रीमदाचार्य्यश्रीनाथस्य। अयमेवावस्थाविनिवेशः प्रेमोन्माद इति वैष्णवैर्गीयते। श्रीराधाभावभावितानां श्रीकृष्णचैतन्यचरणानां नीलाचलवर्त्तिनामियमेवावस्था तच्चरितेषु प्रकटिता। एवमपि लोके नायकनायिकादयः स्वदयितानासदन्यादिग्रहणायापरनिर्द्दिष्टदेशादिमार्गेण तथा तदात्मीयतो संवादसङ्गावाद्याकाङ्क्षन्ते, पश्चाच्च विरहव्याकुलाः 'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि च सा' इत्यादि जल्पितमालपयन्तः मनःसु, अन्विष्यन्तोऽपि नाप्नुवन्तः स्वभवने स्वस्मिन्नेव वा प्रतिनिवर्त्तन्ते।

---

(७) 'यदि परमेश्वरत्वे नाय विरोधः' इति (क) पुस्तके, 'यद्यपि परमेश्वरत्वेन चायं विरोध' इति (ख) पुस्तके पाठः।

मदमधः स्वस्थानं त्यक्तवन्त एव निर्णयमन्त्राला कण्ठ एव घूर्णन्ते, अतो निर्णीय कथ्यतामिति वस्तु । इदं पद्यमस्मद्गुरोः—इति कविनिबद्धवक्तृप्रौढोक्तियतुर्दं ।

**शब्दार्थोभयभूरेक एव— ४५ का**

शब्दार्थोभयशक्त्युत्थो ध्वनिरेक एव । केषाञ्चिन्मतेऽत्रापि वस्त्वलङ्कार-सद्भावादनेकविधत्वं स्यात्, तन्निरासाय 'एव'कारः । किन्तु तन्मतम् न सङ्गच्छत इति न तेन लिखिष्यमाणभेदादाधिक्यमपि भेदानाम् । (ग)

यथा—

अशेषसन्तापहरो जनुर्भृतां सदाबलाकामदमेदुरद्युतिः ।
त्विषाञ्चयैर्माधव ! जीवनप्रदो भवान् भुवं श्यामयते घनो नभः ॥ १४

परमतेऽत्रापि वस्त्वलङ्कारसद्भावः (त) । यथा वा—

तथा चालङ्कारध्वनिः वस्त्विति चतुर्थो भेदः । एवं चत्वेकस्मिन्नेव श्लोके चतुर्थो भेदो द्रष्टव्यः । अतएवैतन्नूपद्यं कवेरतिशयशक्तिद्योतकमिति ज्ञेयम् ।

तन्मतं न सङ्गच्छत इति न, अपि तु सङ्गच्छत एव (घ) । तेन तन्मते लिखिष्यमाण-भेदादपि भेदानामाधिक्यमपि बोध्यम् ।

उभयशक्त्युद्भवस्य ध्वनेरुदाहरणमाह—अशेषेति । हे माधव ! भवांस्त्विषाञ्चयैः कान्ति-समूहैर्भुवं श्यामयते श्यामां करोति, मेघस्तु त्विषाञ्चयैराकाशं श्यामयते । "सदामदबला-कामदश्यामो स्निग्धद्युतिश्चेति तथाभूतो भवान्, मेघोऽपि बलाकया बकपङ्क्त्या शोभा-जन्यमदो यस्य तथाभूतश्यामो स्निग्धद्युतिश्चेति । मेघपक्षे जीवनं जलम् । अत्र मेघ-श्याम्योपमानालङ्कार एव व्यङ्ग्यः न तु वस्त्वन्तरम् । न चोपमालङ्कारो 'बलाका'-'जीवना'दिश्लिष्टपदस्य शब्दशक्त्युद्भवः, तथा देहधारिणामशेषसन्तापहर इति परिवृत्तिसहविशेषणपदस्यार्थशक्त्युद्भवत्वादुभयशक्त्युद्भवत्वं ज्ञेयः । परमतेऽत्रापि कान्त्या श्यामीकरणरूपवस्तुसद्भावः, सौकर्येण तदुभयशक्त्युद्भवस्योदाहरणान्तरमाह (त)—यथा वेति ।

---

(ग) अत्रोभयशक्त्युत्थध्वनेरनेकविधत्वं पूर्वतरप्रसिद्धालङ्कारिकपक्षमतानुसारिणा कविकर्णपूरेण न स्वीक्रियत इति मूले कारिकायाः 'केषाञ्चि'दिति पदं निर्देशात्, 'कि'न्त्विति तत्र प्रयोगाच्चोपपद्यते । तथाप्यत्रार्थिकं ग्रन्थकारानभीष्टमपि मतं प्राचीनोक्त्यनुसारिभिः टीकाकृद्भिरुभयपक्षावलम्बनेनैव ज्ञातमवस्थापयितुं चेष्टितमिति द्रष्टव्यम् । सर्वत्रैव मतान्तरस्य ग्रन्थकारानुमतत्वमिति यत्र केचिदूचुः, न तथा वेद । यदाहुरुद्योतकाराः काव्यप्रकाशटीकायाम्—'एतेन शब्दार्थयोरन्यतरस्य व्यञ्जकत्वेऽपरस्यापि सहकारित्वेनोक्तत्वात् सर्वत्रैवोभयशक्तिमूलत्वमित्यपास्तं, योऽर्थो व्यञ्जकस्तद्बोधकशब्दस्य, यः शब्दो व्यञ्जकस्तद्बोध्यार्थस्यापि व्यञ्जकत्वमिति तदाशया'दिति ।

(त) केषाञ्चिन्मते उभयशक्त्युद्भवे ध्वनावपि वस्तुनो वस्तुनोऽलङ्कारस्य च, अलङ्कारा-

मध्वन्तकृत् सुमनसामामोदैर्घ्राणतर्पणः ।

राधाद्यपरपर्य्यायो माधवः कस्य न प्रियः ॥ १५

## वाक्येऽष्टादशधा त्विमे । ४६ का

इमेऽष्टादशधा ध्वनयो वाक्ये भवन्तीत्यर्थः । अष्टादशधात्व तु—अविवक्षितस्य वाच्यस्य द्वौ भेदावर्थान्तरसंक्रमितमत्यन्ततिरस्कृतश्चेति । विवक्षितवाच्यस्य षोड़श—असंलक्ष्यक्रमव्यङ्ग्य एकः, संलक्ष्यक्रमव्यङ्ग्याश्च पञ्चदश । तत्र शब्दशक्त्युद्भवौ द्वौ, अर्थशक्त्युद्भवा द्वादश, उभयशक्त्युद्भव एकः ।

## वाक्य एव द्विशक्त्युत्थः—४७ का

शब्दार्थोभयशक्त्युद्भवो ध्वनिर्वाक्य एव । 'इह कुंदावणमज्झे' (२य किरणे ६ श्लोकः) इत्यादि तदुदाहरणम् ।

काचिद्वनसुन्दरी गुरुजनशङ्कया श्लेषेण स्वसखीमाह—हे सखि । माधवो वैशाखः कस्य न प्रियः, पक्षे श्रीकृष्णः । मधोश्चैत्रस्यान्तकृत्, वैशाखस्य प्रथमदिनारम्भ एव चैत्रस्यान्तदर्शनादिति ; अन्यपक्षे मधुनाम्नो दैत्यस्यान्तकृत् । सुमनसां स्वोक्तपुष्पाणामामोदैर्गन्धैर्घ्राणं तर्पयतीति, पक्षे शोभनं मनो यासान्तासां सुन्दरीणामामोदैः खीयाङ्गगन्धैर्घ्राणं तर्पयतीति । 'राधादि'शब्द एवापरपर्य्यायो यस्य सः, 'वैशाखे माधवो राध' इत्यभिधानात्, पक्षे राधाया एवाद्यः प्रथमः, परः श्रेष्ठः, पर्य्यायः परिचरणमनुरक्तिर्यस्य सः । अत्रापि वैशाखकृष्णयोरुपमालङ्कारो व्यङ्ग्यः—स च परिवृत्त्यसह-'मधु''सुमनः' 'राध'पदव्यङ्ग्यत्वाच्छब्दशक्त्युद्भवः, तथा परिवृत्तिसह'मानसामोदघ्राणतर्पण'दिविशेषणपदजन्यार्थव्यङ्ग्यत्वादर्थशक्त्युद्भवश्च ।

वाक्य इति—परस्परान्वितिमत्पदनिचयघटितत्वं वाक्यत्वम् । तथाच पूर्वोक्तानि सर्वाण्येवोदाहरणानि वाक्य एव दत्तानि, न तु स्वतन्त्रैकैकपद इति भावः । अष्टादशप्रकाराणां गणनामाह—अष्टेति । षोडशप्रकाराणां विवक्षितवाच्यानां गणनामाह—असंलक्ष्यक्रमेति । पञ्चदशप्रकाराणां संलक्ष्यक्रमव्यङ्ग्यानां गणनामाह—तत्र शब्दशक्त्युद्भवे इति । तेषां ध्वनीनां मध्ये शब्दार्थोभयशक्त्युद्भवो ध्वनिस्तु वाक्य एव सम्भवति, न तु पदे ।

---

वस्तुतोऽलङ्कारस्य चेत्यादिकया दिशा ध्वनेरनेकविधत्वं सम्भवति । तन्मते 'अधीष्वसन्तापहर' इत्यादौ श्लेषालङ्कारबलेनोपमा व्यङ्ग्या, ततश्च 'सन्तप्तानां त्वमसि शरणं' मिति श्लोकव्यस्य मेघस्येव सर्वाभीष्टपूरकत्वरूपं वस्तु ध्वनितम् । तत्तु गौणत्वेनैव भवतीति 'कष्टेनैवात्र' टीकाश्रिता । एवमेव द्वितीयोदाहरणस्यालङ्कारमात्रव्यङ्ग्यस्याप्यवतारणमिति टीका तदुद्भावनम् । वस्तुतस्तूदाहरणद्वयमेवैकवाक्यमित्युद्दिष्टमिति, अतो टीकायां 'स्वीक्रियते' इति पदात् पश्चात् 'इति' पदस्य निरर्थकत्वं इति प्रतिभाति ।

## पदे सप्तदशापरे । ४८ का

उभयशक्त्युत्थं विनाऽपरे सप्तदश पदेऽपीत्यर्थः । तथा च—

Dhvanyaloka— under III.

'पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।
एकेनैव प्रसूनेन नवेवोद्यानकेतकी ॥' इति (घ)

तत्र दिङ्मात्रमुदाह्रियते ।

पार्षदाः पार्षदा यस्य लक्ष्मीर्लक्ष्मीः कृपा कृपा ।
अवतारोऽवतारश्च स देवः केन सेव्यते ॥ १६

अत्र द्वितीय'पार्षदा'दिशब्दा निरन्तरपार्श्वस्थत्वनिरपायत्वनिरुपाधित्व-जन्ममरणभावरहितत्वेष्वर्थान्तरेषु संक्रमिताः ।

तदुदाहरणमिति—तेषामष्टादशप्रकाराणामुदाहरणमित्यर्थः ।

उभयशक्त्युद्भवं विनाऽपरसप्तदशप्रकाराणां पूर्व्वं वाक्य उदाहरणानि दत्तानि, पदेऽप्युदाहरणानि सम्भवन्तीत्याह—उभयेति । ननु यत्किञ्चित्पदध्वनिना वाक्यसमुदाये (10) कथन्तु चमत्कारस्तत्राह—पदेति । पदद्योत्येन ध्वनिना सुकवेर्भारती काव्यरूपा वाणी भाति यथोद्याननवा नवीना केतक्येकेनैव पुष्पेण भाति । केतकीपुष्पस्य नवीनत्वमात्रादेव शोभातिशय इति भावः ।

तत्र पदे । पूर्व्वोक्तलक्षणामूलध्वनिभेदस्यार्थान्तरसंक्रमितवाच्यस्य केवलपद उदाहरणमाह—पार्षदा इति । अत्र द्वितीय'पार्षद'पदस्य सदा पार्श्वस्थितत्वे लक्षणा, तथा चान्येषां पार्षदापेक्षया भगवत्पार्षदस्य सर्व्वोत्कर्षो ध्वनितः इति लक्षणामूलो ध्वनि

(घ) यत्रैकस्य पदस्य शक्तेः प्राधान्यमन्येषामानुगुण्यमात्रं तत्र पदाश्रयता ; यत्र तु विभिन्नपदानां क्रियाकारकभावापन्नानां शक्तेस्तुल्यता, तत्र वाक्याश्रयतेति विवेकः । एकस्यैव पदस्य परिच्छिन्नत्वादल्पत्वेऽप्युभयोर्युगपदसम्भवादुभयशक्तिमूलभेदस्य वाक्यव्यतिरेकित्वे सम्भवः, अतः पदप्रकाशश्चोनिगाध्वनयः सप्तदशैव । तथा पूर्व्वोक्तो व्यतिरेकतया विविक्तिविशिष्टाष्टादशैव एवमवगन्तव्या, यदुक्तं ध्वन्यालोकेऽप्युद्योतपरिकर-श्लोकोदाहरणेन (३।२) :—'पदानां स्मारकत्वेऽपि पदमात्रावभासिनः । तेन ध्वनेः प्रभेदेषु सर्व्वेष्वेवास्ति रम्यता ।' एतदुक्तं पद्यं ध्वन्यालोकस्थितपद्यस्य व्याख्यानमिवोपतिभाति । मुद्रितध्वन्यालोकपुस्तके पाठोऽन्यथा दृश्यते—'विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी । पदद्योत्येन सुकवेर्ध्वनिना भाति भारती ।' एवंविधपाठस्तु 'रूपकादयलंकारैर्भूषणैरेव कामिनी'त्यादि ।

(10) 'वाक्यसमुदाये' इति (क) (ख) पुस्तकयोः पाठः ।

तवानुकम्पा तु तवैव शोभते ममापि दौर्ज्जन्यमहो ! ममापि हि ।
रतिर्मे दीर्घा मम, दीर्घमेव ते प्रेम, प्रियाऽहं तव क्षमा ! किं ब्रुवे ॥ १७

अत्रानुकम्पा अननुकम्पा, दौर्ज्जन्यमदौर्ज्जन्यं, न दीर्घा दीर्घा, दीर्घं अदीर्घं, प्रिया अप्रियेत्यत्यन्ततिरस्कृतम्—इत्युभयं पदगतम् । 'फलमपि फलं माकन्दाना'मित्यादौ ( ३य किरणे १म श्लोके ) 'सौभाग्यमेतदधिक'मित्यादौ ( ३य किरणे ३य श्लोके ) चोभयोर्व्वाक्य एव विश्रान्तिरिति भेदः । (१)

एकस्मिन्नेव 'पार्षद' पद उत्कर्षाद्यर्थेन संक्रमितत्वादर्थान्तरसंक्रमितत्वं ज्ञेयः । एवं द्वितीय'लक्ष्मी'पदेनानपायित्वे लक्षणा—तया च भगवत्सम्पत्तिरेवानपायिनी, अतः सर्व्वोत्कृष्टेति ध्वनिः । द्वितीय'रूपा'पदेन निरुपाधित्वे लक्षणा, तया च भगवद्रूपमेव सर्व्वोत्कृष्टमिति ध्वनिः । द्वितीया'वतार'पदेन जन्ममरणाभावराहित्ये लक्षणा—तया च भगवदवतार एव सर्व्वोत्कृष्ट इति ध्वनिः ।

अत्यन्ततिरस्कृतवाच्यस्य केवलपद एवोदाहरणमाह—तवेति । काचिन्मानिनी श्रीकृष्णं प्रति सोल्लुण्ठवचनमाह—तवानुकम्पा त्वया तवैव शोभते । अत्रा'नुकम्पा'पदस्याकृपायां विपरीतलक्षणा, तया च कठोरत्वदोषेण त्वं दुष्ट इति ध्वनिः । वाच्यार्थस्य तिरस्कारः स्पष्ट एव । 'दौर्ज्जन्य' पदस्य सौजन्ये विरुद्धलक्षणा, तया च स्वस्योत्कर्ष इति ध्वनिः । मम रतिर्मे दीर्घा विरुद्धलक्षणया दीर्घेत्यर्थः । तव प्रेम दीर्घं विरुद्धलक्षणयाऽदीर्घमित्यर्थः । तवाहं प्रियेत्यत्र 'प्रिया'पदस्याप्रियायां लक्षणा, तया च मम निकटे तवागमनमनुचितमित्युपालम्भो ध्वनिः । 'फलमपि फलं माकन्दाना'मिति पूर्व्वोक्तोदाहरणस्य द्वितीय 'फल'पदस्याधरापेक्षया निन्द्यत्वध्वनौ 'सह तुलयितुं' वेनैतेषां न किञ्चन

(१) 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' इति न्यायेनात्र विपरीतलक्षणासमाश्रयणा'दनुकम्पा'दिपदेभ्य इष्टार्थबोधः । तस्मादतिनिष्ठुरस्त्वं, भक्ते त्वदेकशरणे च मयि न ते क्षमावेश इत्यतो इच्छानिष्टमनाचरतो मम पूर्व्वजन्मदुष्कृतधारेयात्मतिरस्कारश्च । एवमेव 'रविसंक्रान्तसौभाग्यस्तुषारावृतमण्डलः । निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥' इति रामायणपद्ये, 'या निशा सर्व्वभूतानां तस्यां जागर्त्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥' इति श्रीमद्भगवद्गीतापद्ये च पदत एव विरुद्धार्थप्रतीतिः, अतस्तत्रत्य एव ध्वनिरित्यलम् । एवमपि 'तं वन्यं' इत्याद्यनन्तरोदाहृते पद्ये तादृग्गुणैकगोचरत्वाद्योतकानां 'वन्दे'त्यादिपदानामेव प्राधान्यम्, अन्येषान्तु तदुपकारित्वमेवेति मुख्यतः पदमूल एव व्यपदेशः 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायात् । 'त्वन्मञ्जुमन्दहसितं श्वसितानि तानि सा वै कलङ्कविधुरा मधुरानन्दश्री'रित्यादिपर्यन्ततराजन्तश्लोक इवेहापि सर्व्वनामपदानां व्यञ्जकता बोध्या ।

तं वअणं सो एफंसो तं रूअं तं सरीरसोरब्भं ।

तें अहरमहुरिमाणो दाणिं हालाहलं जाअं ॥ १८

अत्र 'तदा'दिपदान्यनुभवगोचरानर्थान् प्रकाश्य पूर्व्वममृतवदासीत् सर्व्व-मिति वस्तु प्रकाशयन्तीति पदगतो ध्वनिः ।

शब्दशक्त्युद्भवो यथा—

मुग्धे ! पद्मिनि ! कुलजे ! मा कार्षीरत्र विश्वासम् ।

अनवस्थितोऽतिमदतः सोऽयं साक्षादनेकपः क्षण्यः ॥ १९ ॥

अत्र 'नैकप'शब्द एकार्थोऽपि कविनिबद्धवक्तृप्रौढ़ोक्तिवशादनेकार्थतां गतः सन् 'मुग्धे' इत्यादि सम्बोधनत्रयार्थेन साधनेन साध्यं स्वगतमनवस्थत्वादिकम्—यथा त्वं मुग्धा, अयमनवस्थितः, त्वं कुलजा, अयमतिमदः, त्वं पद्मिनी, अयमनेकपो हस्तीत्यर्थत्रयं बोधयति । अनेकं पातीति, अनेकेन पिवतीति च,—'पद्मिनी'ति नायिकाविशेषः, कमलिनीति च । त्वं कुलजा, अयमनेकं पिवतीति मत्तश्च, तेनात्र विश्वासं मा कार्षीर्यतोऽतिमदतोऽनवस्थितः । मदो दानं गर्व्वश्च, तेनास्य सङ्गात् करिसङ्गादिव पद्मिन्यास्तव विमर्द्दो भविष्यतीति वस्तु, तेन चानवस्थितत्वेनातिमदत्वेन चायन्त्वामवश्यं मर्द्दयिष्यतीति

मुग्धते इति वाक्यान्तरस्यापेक्षा वर्त्तते ; एवमन्येषां न्यूनतावोधकस्य 'अधरोऽधर' इति वाक्यस्यापेक्षा वर्त्तते, अतो न तत्र केवलपदमात्रे ध्वनिरिति । 'सौभाग्यमेतदधिक'मिति पूर्व्वोक्तोदाहरणस्य'सौभाग्या'दिपदानां विवक्षितत्वथया प्रेमशून्यत्वरूपध्वन्यर्थबोधे 'न खर्व्विते भवतामथवस्य मार्गे' इत्यादि वक्तृवाक्यानामपेक्षा वर्त्तत इति न पदमात्रे ध्वनिः ।

अभिधामूलध्वनेः प्रभेदस्य शब्दशक्त्युद्भवस्य पदमात्रे क्रमेणोदाहरणद्वयमाह—तं वअणमिति । तद्वचनं स स्पर्शस्तद्रूपं तच्छरीरसौरभ्यम् । तेऽधरमधुरिमाण इदानीं हालाहलं जातम् । अत्र वाक्यान्तरापेक्षां विना केवल'तत्'पदेनैव वचनादीनाममृततत्वं ध्वनितम् । 'आश्रमाते विमलहृदय' इति (३य किरणे ४ श्लोके) पूर्व्वोक्तपद्ये प्रसिद्धचन्द्रादानिरेका-लङ्कारध्वनावनेकवाक्यानामपेक्षा अस्त्येवेति ।

मुग्ध इति—हे मुग्धे । अत्र त्वयो विश्वासं माकार्षीर्यतोऽयमनवस्थितो भ्रष्ट इत्यर्थः । एवमतिमदादनेकपो महाहस्ती च । नन्वनेकप'शब्दोऽनेकजनपालनकर्त्तरि रूढ़िरेव, तेन कथमनयत्रानुपपत्त्या तस्य हस्तिबोधकत्वमित्यत आह—अत्रेति । अत्रानेकोऽप्यर्थः कविनिबद्धवक्तृप्रौढ़िवशात् सम्भवतां प्राप्नोति, अतोऽनेकप'शब्दस्य हस्तिज्ञापकत्वं नासम्भव-मिति बोध्यम् । मुग्धे इत्यादीनि—हे मुग्धे । हे पद्मिनि । हे कुलजे । इति सम्बोधनानां

वस्त्वन्तरञ्च । हस्तिसाधर्म्यादुपमालङ्कारः, अनवस्थित इति हेत्वलङ्कारः, अनेकस्य भर्त्तेति स्वभावोक्त्यलङ्कारः—इत्यलङ्कारव्यञ्जकः शब्दशक्त्युद्भवः पदगतः ।

पदगतार्थशक्त्युद्भवः स्वतःसम्भवी यथा—

णिहुअणकथाहिं धण्णा णिअपरिवारं सुहावेंति ।

अप्पाणं पि ण हु तदा सुमरइ दाणिं भणाहु किं भोदी ॥ २०

अत्र न ता धन्यास्त्वमेव धन्या, तासां सखीभ्यो वयमतिसुखिन्यः ; त्वदानन्दावेशादेव वयमकथनेऽप्यानन्दभाजः, तासु तत्कथयैवेति 'धन्या'पदगतः स्वतःसम्भवी । अपरे तूह्याः, ग्रन्थगौरवभयादोदास्यन्ते । वाक्यगताः पूर्व्वमेव कियन्तो दर्शिताः ।

मुग्धत्वमश्लिनीत्व (११) कुलजात्वरूपार्थत्रयेण साधनेन साधनत्रयेण श्रीकृष्णगतमनवस्थितात्वाद्यर्थत्रयं साध्यं यथासंख्येन बोधयति । तथाहि तव मौग्ध्यं विलोक्यैव तस्य धार्ष्ट्यं प्रादुर्भवन्ति, न तु सर्व्वदा धृष्टः । एवं तव कुलजात्वमाकर्ण्यैव मत्तो भवति, न तु सदा मत्तः । एवमन्यत्रापि त्वं मुग्धा, अयमनवस्थितो धृष्टः । 'अनेकप'शब्दस्य व्युत्पत्त्या नानार्थत्वमेव बोधयति—अनेकमिति । अनेकवधूजनं पाति स्वाङ्गसङ्गदानेन रक्षतीति व्युत्पत्त्या 'अनेकप'शब्दा'नेकवधूपति'शब्दयोस्तुल्यार्थत्वा'दनेकप'शब्देनानेकवधूपतिः श्रीकृष्णो बोध्यः । एवमनेकमधरं पिबतीति व्युत्पत्त्याऽपि कामोन्मत्तः कृष्ण एव बोध्यः । तथाऽनेकेन स्त्रीपुत्रादिना पिबतीति व्युत्पत्त्या हस्ती बोध्यः—मत्तहस्तिनः स्वभाव एषायं यत् स्त्रीपुत्रादिभिः सहैव जलं पिबति, तान् पाययति च । यद्वाऽनेकाभ्यां मुखशुण्डाभ्यां पिबतीति । हस्तिपक्षे मदो दानं मदजलमित्यर्थः, कृष्णपक्षे मदो गर्व्वः । तेन चेति—तेन वस्तुरूपव्यङ्ग्येनेत्यर्थः । अनवस्थितत्वेन धूर्त्तत्वेनातिमत्तत्वेन च हेतुनाऽयं श्रीकृष्णस्त्वां न त्यक्ष्यति, किन्त्ववश्यं मर्द्दयिष्यत्येवेति वस्त्वन्तरं व्यङ्ग्यम् । अनवस्थितत्वेन हेतुना भाविमर्द्दनस्यानुमानाद्धेत्वलङ्कारस्य व्यङ्ग्यः । वस्तुतस्तु श्रीकृष्णोऽनेकस्य जगतो भर्त्तेत्यनेकपशब्देन स्वभावोक्त्यलङ्कारस्य बोध्यः । पदगत इति—अत्र परस्परान्वितपदद्वयघटितवाक्यं विनैव केवल'मश्लिनी'पदेन केवला'नेकप'पदेन च तत्तदर्थबोधो जायत इति भावः ।

णिहुअणेति—निधुवनकथाभिर्धन्या निजपरिवारं सुखापयन्ति । आत्मानमपि न हि तदा स्मरति इदानीं भणतु किं भवती ॥ 'निधुवन'शब्दो नायिकानायकयोः सम्भोगवाची ।

---

(११) 'मुग्धात्वमश्लिनीत्वे'त्यादि (ख) (क) पुस्तकयोः पाठः । गुणवचनत्वविवक्षायां पुंवद्भावः, समर्थत्वे 'मुग्धा'पदेन तज्जातीयस्त्रीभावबोधकत्वं न भवेति विशेषः, तदा 'मुग्धात्वे'त्यादिरेव पाठः ।

पञ्चविंशत्ततो भेदाः — ४६ का

ततोऽष्टादशभिः सप्तदशभिश्चेत्यर्थः।

—प्रबन्धेऽप्यर्थशक्तिभूः। ५० का

अर्थशक्त्युद्भवो द्वादशविधो ध्वनिः प्रबन्धेऽपि।

सप्तचत्वारिंशदतः— ५१ का

अतो हेतोः सप्तचत्वारिंशद्भवति। प्रबन्धे दिङ्मात्रमुदाह्रियते—

सव्वंति गंधे वि ण वे जणाणं णवप्पसूआ अघला ह्हि गाओ।

ण तेण दोसो ण पमप्पसंगो अण्णे वहूओ तुह विसवेंति ॥ २१

अत्र वधूभिः प्रेषिता श्वश्रूधात्र्या नप्त्री तासां श्वश्रूं प्रति कथयति। तच्छ्रुत्वा सापि जरती तामाह—

करेमि किं णत्तिणि धत्तिआए वअस्सरीं लंभिअ विसवेंहि।

तुह्माण सव्वं मह गोहणादिधणं जणाओ वि सुहं च दुक्खं ॥ २२ (घ)

न ता धन्याः इति—तासां प्रेम्णोऽल्पप्रमाणत्वेन सम्भोगजन्यानन्दस्याप्यल्पप्रमाणत्वम्। तथा च तासां सम्भोगसमये देहाद्यनुसन्धानसत्त्वात् सखीनामग्रे तत्समयोचितचेष्टानां कथनं सम्भवति, तत्र त्वानन्दानां सम्मर्देनात्मानुसन्धानमेव नासीत्, कुतः सखीनामग्रे विश्रम्भवार्ताकथनसम्भावनापि अनस्ताभ्यो सखीभ्यः सकाशाद्वयमतिसुखिन्यः। अत्र वाच्यविशेष केवल 'धन्या'पदेन स्वत सम्भवी ध्वनिर्बोध्यः। अपरे कविप्रौढोक्तिकविनिबद्धवक्तृप्रौढोक्त्यादयो ध्वनयः पदनिष्ठाः स्वयमेवोह्याः। वाक्यगता ध्वनयस्तु पूर्वं कियन्त एव दर्शिताः, न तु तत्रापि विस्तरः कृतः।

---

(घ) 'धत्तिआए' इति प्राकृते स्वार्थिकः 'क'प्रत्ययः। युष्माकमित्यर्थे 'तुम्हाण,' 'तुम्हाणं' 'तुह्माण' 'तुह्माणं' इत्यादि प्रयोगाः प्राकृतरूपावतारे लक्षिताः, अतो नासाधुत्वम्। एवमपि 'कुमरेण उत्तं' इति चतुर्थपादस्थल्लनोपपत्तौ सन्ध्यभावो न दोषाय 'बहुल'मिति तन्त्रेण संहिताविभागे निर्दिष्टात्। प्रबन्धेऽत्र श्रीकृष्णानयनस्याविषयभावितात्योऽनेन समवायत्रयाणां मनोरथमपूर्वं स्थापयतुं ध्वनितम्। स च भगवान्दोदकुशलतया नवनीतभित्तरिति च वर्ण्यते। तथा च 'नवनीतमेषयक्चिरः परः पुमाननमेनमवाप्य वल्लवीपतिविषयः। नवनीतकीर्तिरमरैरपि स्वयं नवनीतभित्तरधुना न चिन्त्यते' इति श्रीविरूपमङ्गलपट्टे तनूपगदशोक्तिः। अत्रापि तत्रौ 'यदपाङ्गनिम्नभावोद्भूतरनिचयाभावालङ्कारायो निर्दिष्ट', न च प्राक्प्रतिपादितया दिग्गामीषां निष्कार्यमभिनन्दनोऽत्र—वस्तुतस्तु नामीषां सर्वेषां ध्वनिष्वत्र समावेशादिकमपवन इति ज्ञेयम्।

सुदुप्पओहा मह सव्वगाओ पुत्ता विदूरे किमहं करेमि।

विलोअणादो तुह णंदणस्स सुदुप्पओहा वि सअंपओहा ॥ २३

इति जरत्युत्तरान्ते गोष्ठेश्वरीं गत्वा तया यदुक्तं तत् कथयति—

एव्वं क्खु ताए भणिदा गदाहं वएसरीं उत्तवदी समत्थं।

उत्तेण ताए कुमरेण उत्तं गोसंप्पओहो मम ण क्खु होइ ॥ २४

इति चतुःसंवादप्रबन्धे वधूभिः सख्यसम्भ्रमेनार्थमुपायमनवेक्ष्य मातरपि वत्स-दुःप्रदोहगोदोहाभावप्रसङ्गः स्वयं प्रति विज्ञापितः। अत्रापह्नुतिनामालङ्कारः,[12] तया च दोहोपायश्चिन्तयित्वा हे धात्रिकानप्त्रि। गोष्ठेश्वरीं गत्वा विज्ञापयेत्युत्तरं ज्ञातमित्युत्तरालङ्कारः। तत्र 'सुदुःप्रदोहा मम सर्व्वगाव' इति स्वभावोक्तिरलङ्कारः। 'विलोकना'दित्यादिनाऽतिशयोक्तिः, तया च

तत इति —तथा च पूर्व्वोक्तवाक्यागताऽऽदेशाभिसयोभयप्रत्यक्षध्वनेस्तु केवलमहत्तत्वा-सम्भारश्च: महाभारतप्रशस्तिश्च मिलित्वा पञ्चविंशश्लेदाः सिद्धा इति भावः। चतुर्भिः पञ्चभिर्वा श्लोकैः सिद्धा या काव्यगाकथा सा प्रबन्धः (न)। तत्रार्थशक्त्युद्भवे द्वादशविधो ध्वनिः सम्भवति।

चहंतीति—सहन्ते गन्धमपि न वै जनानां नवप्रसूता सवत्सा हि गावः। न तेन दोहो न पयःप्रवृत्तं चार्थ्यं। वध्वस्तौ विज्ञापयन्ति।

करेमीति—करोमि किं नप्त्रि। धात्र्या व्रजेश्वरीं सत्यं विज्ञापय। शुश्रावे सर्व्वं मम गोधनादिधनं जना अपि सुखञ्च दुःखम्। सुदुष्प्रदोहा मम सर्व्वगावः पुत्रा विदूरे किमहं करोमि। विलोकनात्तव नन्दनस्य सुदुःप्रदोहा अपि स्वयंप्रदोहाः।

जरत्या उत्तरान्तरं गोष्ठेश्वरीनिकटं गत्वा तत्सर्व्वं कथितं, पश्चात्तया गोष्ठेश्वर्या यद्यदुक्तं तत् सर्व्वं पुनर्वधूनिकटे आगत्य धात्रा नप्त्री कथयति—एवमिति। एवं खलु तया भणिता गताऽहं व्रजेश्वरीसुत्तवती समस्तम्। उक्तेन तया कुमारेणोक्तं गो-संप्रदोहो मम न खलु भवति। गोशब्दः प्रभातकालवाची।

(न) चतुर्भिः पञ्चभिर्व्वेत्युपलक्षणम्—तच्च प्रकृतोदाहरणानुकूलमिति नानर्थक्यापातः। एवमपि प्रकाशकृदुदाहृते महाभारतीयकर्णपूर्व्वस्थयुधिष्ठिरगोमायुसंवादे चतु.श्लोक्यां 'प्रबन्ध'-पदस्य सिद्धता। वस्तुतस्त्वर्थपरम्पराघटितवाक्योच्चयमात्र एव 'प्रबन्ध'पदस्य रूढिः, तदर्थके च सन्दर्भे सर्व्वत्रार्थशक्त्युद्भवो ध्वनिरेवेति महाकविसन्दर्भसञ्चयोऽत्र प्रतिपाद्यते। अत्र विषये ध्वनिकृन्मतमेव प्रमाणम्।

(12) 'अत्रापह्नुतिनामालङ्कार' इत्यंशः (ग) (घ) पुस्तकयोर्नोपलभ्यते।

सुखदोहे परिश्रमस्तस्य न भविष्यतीति वस्तु । गोसंप्रदोहः प्रभातप्रदोहो मत्तो न भवतीति निश्चयालङ्कारेण सायंदोहस्तु मया कर्त्तव्य इति वधूना-[ साशयं ज्ञात्वा छलेन सङ्केतः कृत इति वस्तु—इति चतुःश्लोक्या समुदितः प्रबन्धो हि मुख्यो व्यञ्जकः ।

तथाहि अनानां गन्धमपि न सहन्त इत्यन्यैरदोह्यत्वं वस्तु, तत्र 'नव-प्रसूते'ति हेतोर्हेत्वलङ्कारः—तेन कृष्णं विना नासान्दोह इति श्वश्रुः कृष्ण आनायितव्य इति वस्त्वन्तरम् । 'न तेन दोह' इत्यनेन पयोऽभावादयमक्रियाः स्थः—अत्र मा कोपं कार्षीरिति च वस्त्वन्तरम् । 'गृहाण वत्स'मित्यादिना विनयमहिम्ना कृष्णोऽवश्यं व्रजेश्वर्या प्रेषयितव्य इति वस्तु ।

एवं नाटकादिषु चेति तद्भेदकथनेनानन्त्यप्रसङ्ग इति नात्र लिखितः । एवं प्रबन्धेऽप्यस्य एकादशापि बोद्धव्याः ।

## —पदांशाद्या रसाञ्जकाः । ५२का

पदांशवर्णरचना इति त्रितयमपि रसस्य व्यञ्जकं भवति । रसोऽत्रा-संलक्ष्यक्रमः ।

अत्र 'कुरु'प्रकृत्या तवैच्छिकत्वं, तेन त्वन्मानकरणं त्वदिच्छाधीनमेव न तु स्वाभाविकं, तस्यापराधाभावात्—तेन विभावनाऽलङ्कारः ;- तस्मान्मा कुरु त्यजेत्यर्थः । सुहृद्वचनन्तव श्रवणं प्रविशदपि न प्रवेष्टुं शक्नोति, त्वन्मनसः श्रवणेन सहासंयोगात् । तत्प्रवेशाय मनो दीयताम् । सुहृत्सम्बन्धित्वेन वचनस्य श्रवणप्रवेशो युक्त एवेति 'णिच्' प्रत्ययध्वनिः ।

प्रत्ययस्य यथा—

आविअ अअणदुआरं धरणीए पाडिआणि कुसुमाइं ।
पिअसहि ! किं ति विसीदसि पुणो वि चल तत्थ कुसुमत्थं ॥ २९

एवं सति रसस्योदाहरणमग्रे रसग्रन्थे वक्ष्यति, अतः प्रत्ययादिजन्यवस्त्वलङ्कारव्यङ्ग्यानामुदाहरणान्याह—मा कुरु मानिनीत्यादि । तत्र प्रसादं प्राप्य श्रीकृष्णः सनाथो भवति त्वमन्वयः । अर्थात् 'कृञ्'धात्वर्थः कृतिरुपाय एव सम्भवति, न तु फले । तथायं क्रमः—आदौ तृप्तिरूपफलेच्छा, तदनन्तरं फलस्योपाये भोजने इच्छा, तदनन्तरन्तादृशेच्छाधीनभोजनरूपोपाये कृतिः, तादृशकृत्यनन्तरं भोजनक्रियासिद्धिः । भोजने जाते तृप्तिरूपं फलं स्वत एव भवति न तु फले कृतिः सम्भवति—अन्यथा भोजनं करोतीतिवत् तृप्तिं करोतीत्यपि प्रयोगः स्यात् । एवं सति मानस्यापराधजन्यफलरूपत्वस्वीकारे तत्फलरूपमाने कृतिर्न सम्भवति । कृतेरसम्भवादेव 'मानं न कुर्वि'ति मानविषयककृतिनिषेधोऽपि न सम्भवति, इत्यतो 'मानं मा कुर्वि'ति वाक्येन मानस्यापराधजन्यफलत्वं न बुध्यते, किन्तु श्रीकृष्णेन सह परिहासार्थं स्वेच्छया मानस्य कृत्रिमत्वमेव बुध्यत इत्याह । अत्र 'कृञि'ति—'कृञ्'प्रकृत्या मानविषयककृतेरिच्छत्वं श्रीकृष्णेन सह परिहासार्थमेव कृत्रिमेच्छाजन्यत्वमिति, न तु स्वाभाविकं न स्वपराधजन्यफलरूपम् । तत्र हेतुः—तस्य श्रीकृष्णस्यापराधाभावादिति द्वितीयं व्यङ्ग्यं वस्तु, तेन वस्तुव्यङ्ग्यवस्तुना विभावनाऽलङ्कारो बोध्यः, कारणं विना कार्योत्पत्तिर्विभावनेति तल्लक्षणम् । एतादृशगूढार्थानुसन्धानेन वस्त्वलङ्कारादिध्वनिविशेषो जायत इत्यंशस्य क्रमत्वमेषां वस्त्वादीनामुचितमेव । एवमुत्तरोत्तरपद्यानामुदाहरणे सर्वेषामंशानाम् एव ज्ञेय इति भावः ।

---

अभिधाव्यापारव्यापारनिरतिशयकुशलाना'मालोक यत्नादालोकनीयम् ( ३।१६ )। 'व्याहारे विरतिः ममत्वविषयत्वे निवृत्तिः परे'त्यादियोर्धे तमोराशरा इव दूर कृपाव्योमनिरस्तैर्येषां यहूणां कारणायां प्रवितरो इत्यर्थः । न च कदाचित् अभिधापूर्वकं कदापि ध्वनिसंदृष्टा वा दीनया इति न एतावत् निर्दिष्टो भावो । एतु ध्वनेर्व्यञ्जकमतं वैचित्र्यमिति तत्त्ववित्ते तत्त्वम् । तत्र मेषां मध्ये ध्वनेर्ध्वन्यमानादुदाहृत एव ग्रन्थालङ्कारसमाप्तौ कार्यम् ।

अत्र कुसुमाहरणच्छलेन वृन्दावनं गत्वा सङ्केतस्थले कृष्णमनागतं वीक्ष्य कुसुमान्यादायैव स्वगृहमागतां पुनः सङ्केतमुरलीस्वनश्रवणानन्तरं पुनर्गमनोत्कण्ठया व्याजेन पातितकुसुमां काञ्चित् प्रति हृदयज्ञा सखी वदति—प्रियसखि ! किमिति विषीदसि ? भूमिपतितानि दैवदेयानि न भवन्ति, पुनरपि तत्र कुसुमार्थे गच्छ। मया ते गुरुजनो बोधनीयः, न किञ्चिदपि ते भयमिति 'णिच्'प्रत्ययस्यैव ध्वनिः।'

कालस्य यथा—

सहजमरुणं नेत्रद्वन्द्वं, स्वभावत एव ते
सततमुरलीध्मानक्रीडाविधौ व्रणितोऽधरः।
वनविहरणे रात्रौ गात्रं सकण्टकनालञ्छनं
कथमिव हतः स्वामिन् ! स्वात्माऽपराधविसंष्ठुलः (फ) ॥ २७

आनीय भग्नेति—आनीय भवनद्वारे धरण्यां पातितानि कुसुमानि। प्रियसखि! केनिति विषीदसि पुनरपि गच्छ तत्र कुसुमार्थम्। 'णिच्प्रत्ययस्येति—'पातितानी'त्यत्र 'णिच्'-प्रत्ययस्येत्यर्थः।

भो. प्राणप्रिये! ममापराधाभावेऽपि मिथ्यापराधं प्रकल्प्याधिकं क्रुध्यसि चेत्, भवतु त्वदुपनेनैवाधुना ममापराधकल्पनं, तथापि त्वत्कृपैव मम निस्तारकारणमिति श्रीकृष्णे वदति सति, नाधुना तवापराधो जातः किन्तु मन्निकटागमनात् पूर्वमेवेति, स्फुटीकर्तुं काऽपि मानिनी सोल्लुण्ठवचनमाह—हे कृष्ण! तव नेत्रद्वन्द्वं सहजमरुणं, न तु कस्या अपि प्रियाया अधररागेणारुणं, तव गात्रं कण्टकचिह्नेन सह वर्त्तमानम्। हे स्वामिन्! स्वात्मा स्वदेहः कथमपराधेन विसंष्ठुलोऽसमीचीनः कृत इति सम्भोगचिह्नस्य

(फ) यद्यपि नयनयुगलस्य सहजनिर्नेनारुणत्वस्वाधरस्य नियतव्रणितत्वेन वनविहरणशीलत्वात् गात्रस्य कण्टकिलत्वेन आपाततः नायकस्यानपराधतापत्त्या स्फुटीकर्तुं सम्भाव्यते, तथाप्यत्र निष्ठाप्रत्ययस्य याथार्थ्यज्ञापकत्वेनैव कारणैर्नायकस्यापराधः स्फुट इति, न च इयमपि निष्कोपु शक्य इति च कथ्यते। तथाहि मदितरनायिकामदरागरञ्जितादधरतो-ऽरुणिमा तव नयनयोरिह चुम्बनदाने संक्रान्तः, तत्तर्जनिधुवनादिकृत्ये प्रयत्तो मुरलीध्वनिः, मत्तो भीतेस्तत्कुञ्जं प्रति परमैकान्तिकचक्षु तथाकण्टकप्रसरत्वेन रात्रेः, स्वागन्तव्यत्वनिपुणेन त्वया तदर्थमरण्यमाश्रय, इति सर्वं विशदं प्रतिभाति मे इति नायिकाशयः इत्याशय.—अतो धूर्त्तो धृष्टश्च त्वं, न त्वयि विश्वासलेशोऽपि स्थापयितुं शक्य इत्यहो मे दुर्भाग्यं तव च दौर्जन्यम्।

अनासाद्य स्वालीमंकुरमभिवीक्ष्य स्ववदनं
सुखं वा दुःखं वा किमपि कथनीयं मृगदृशः ॥ ३२ (भ)

अत्र 'सु'पसर्गेण मालिन्यातिशयो व्यज्यते, तेन च सखीनां प्रणयाधिक्यम् ।

निपातस्य यथा—

दट्ठूण तस्स वअणं क्खणमेत्तेण क्खु हारिअं हिअअं ।
एव्वं विअ अवहरिअं तुरिअं लद्धं अ तहिअअं ॥ ३३

अत्र 'च' रूपनिपातेन तुल्ययोगिताऽलङ्कारः (ञ) निजहृदयहारणसमकालमेव तद्धृदयं लब्धं, अतोऽहं हृदयशून्या नाभवमिति तस्य हृदयं मद्धृदयमिति वस्तुना द्वयोरैकात्म्यरूपं वस्तु प्रतीयते ।

सुखं वा दुःखं वा युष्माभिरस्माकमग्रे कथनीयं, आत्मावेक्षणवर्तिन्यस्त्वदर्पणेन किं प्रयोजनं, ता एव दर्पणस्थानीयाः । तासां दर्पणसाधर्म्यमाह—पततीति । युष्मासु अश्रुजले पतति सति ता अपि साश्राः । एवं स्वालीरनासाद्याप्राप्य ।

दट्ठूणेति—दृष्ट्वा तस्य वदनं क्षणमात्रेण खलु हारितं हृदयम् । एवमिवापहृतं त्वरितं लब्धं च तद्धृदयम् । अत्र 'लब्धं चे'त्यत्र 'च' शब्दरूपनिपातेन तुल्ययोगिताख्योऽलङ्कारो व्यङ्ग्यः । 'च' शब्दगम्यतुल्ययोगित्वमेवाह—निजहृदयेति । अव्ययसामान्यस्यैव निपातसंज्ञा, तत्र 'च' शब्दस्यापि निपातत्वं ज्ञेयम् । तद्धृदयं मद्धृदयमिवेति वस्त्वलङ्कारेण द्वयोरैकात्म्यं ध्वनितम् ।

---

(भ) अत्र छन्दसा अभिधाननैपुण्येनालीनां दर्पणस्थानीयत्वं प्रत्याय्यते । गोपीवृन्दमध्यमधिवर्तिविदग्धालिक वृन्देव दूती परं सर्वत्र प्रेमपरवशानां नायिकानामुत्कण्ठनीयमर्गोपकस्य च दर्पणस्थानीयाऽभिमतदुत्कृतभावप्रकाशिकेति वैष्णवकविशेखरविवेके: श्लोकार्थम् । भावातिशये जाते न खलु कोऽपि स्वाशयं वाचा प्रकाशयितुं समर्थो भवति, किं पुनर्भावमागरनिमग्नाः परमानन्दमन्दोलदशोभदा गोपिकाः । स खलु चिदिकारः 'परिच्छेदातीतः सकलवचनानामविषयः' । अत्र तु 'सु' पदस्योपसर्गत्वस्थापनं वैयाकरणमतानवधानविजृम्भितं, 'उपसर्गाः क्रियायोगे' इत्यनुशासनात् । 'मलिना' इति धातुत्वेनाच्यमर्हितिपेन, अमनोभावात्, कष्टकल्पनाश्रयत्वाच्च । 'परिच्छेदातीतः सकलवचनानामविषय' इत्यादि भवभूतिपद्य, 'आधारे विरति'रित्यादि पद्येऽपि यथाक्रमं प्रकाशकता दर्पणकता चोपमर्गाणां प्राद्वेर्गा व्यञ्जकत्वं दर्शितमिति दिक् ।

(ञ) परमत्र नाम प्रस्तुताप्रस्तुतयोरेकधर्माभिसम्बन्धरूपस्तुल्ययोगिताऽलङ्कारः, अपि तु मध्योक्तेराभासः, तुल्यकालं योग 'तेन सहेति तुल्ययोगे' इत्यादि वैयाकरणप्रयोग इव यौगिकार्थे तु तुल्ययोगस्य सम्भवः । मतं तद्विचारितं विश्वनाथ प्रकाशटीकाकृता-

सर्व्वनाम्नो यथा—

मध्ये सूक्ष्मधियः सखीपरिषदो धृत्वा सखीभूमिका-
मभ्यङ्गाय गृहीतपाणिकमलं स्पर्शेन मा जानती ।
भर्त्तः ! दूरमपेहि नास्ति कुशला स्नातुञ्च वाञ्छाद्य मे
नेत्यन्त कुपिता यदीक्षितवती तत् केन विस्मार्य्यते ॥ ३४

अत्र यत्तद्भ्यां वागगोचरत्वं व्यङ्ग्यम् ।

कर्म्मभूताधिकरणस्य यथा—

अधिवसति तस्य हृदयं प्रियसखि ! राधे ! सदापि तव हृदयम् ।
द्वावेव पूर्णहृदयौ प्रविशामो वा कथं हृदये ॥ ३५

अत्राधारस्य कर्म्मभूतत्वे सर्व्वव्यापनं व्यङ्ग्यम् —'ग्रामे वसती'ति ग्रामैकदेशो गम्यते, 'ग्राममधिवसती'ति ग्रामं व्याप्यैवेति चमत्कारः । (य)

कदाचिद्राधाया मानभङ्गं उपायान्तरमपेक्ष्य स्वयमेव स्त्रीवेशं धृत्वा तस्याः निकटङ्गतवतः श्रीकृष्णस्य तदानीन्तनो य आनन्दातिशयस्तमौत्सुक्येन श्रीकृष्णः सखं प्रत्याह—मध्ये इति । सूक्ष्मधियः, सखीसभायाः मध्ये ताभ्यो साचिव्येन सखीभूमिकां, तैलमर्द्दनकारिणी या सखी तस्याः भूमिका वेशं, धृत्वा तैलाभ्यङ्गाय गृहीतं राधायाः पाणिकमलं येन तथाभूतं मां स्पर्शेन जानती—नेयं सखी किन्तु पुरुषः कृष्ण एवेति जानती—राधाह—हे भर्त्तः । त्वं नवीना भवसि, तैलाभ्यङ्गकर्म्मणि न कुशला तस्माद्दूरमपेहि । स्वकीयम् अभिप्रायं प्रकटीकर्त्तुमुद्यतं मां वीक्ष्य पुनः कुपिता सत्याह—मम स्नातुमद्य वाञ्छा नास्ति, इत्यन्त कुपिता सा मामवधीर्य यथेक्षितवती तदीक्षितं केन विस्मर्य्यते ।

अधीति—परस्परव्याप्तिनोभयोर्हृदये पूर्णे भवतः, अवकाशाभावेन कथं सखीनां प्रवेशः सम्भवतीति ।

---

उद्द्योतप्रभाकाराभ्यां गाढकाव्यप्रवणतयैवादिमलक्षणपद्यालोचनप्रसङ्गे, विचार प्रकारस्तत्रैव द्रष्टव्यः । पद्येऽत्र वक्तुः प्रौढोक्तिरेव सर्व्वालङ्कारजीवातुभूता तदाशयं पिहितापिहितसुचित एषर्द्धिव्यत्यलङ्कारभेदत्वेनात्र न दुर्ब्बोधत्वाय कल्पत इत्यप्यूह्यीयम् ।

(य) 'अहिलासिन्चसभरिए' इत्यादि पद्य इवात्रापि कविनिबद्धवक्तृप्रौढोक्तिश्चमत्कृति मावहति । 'क्रियाव्याप्य कर्म्म' इत्यनुशासनबलादाधारस्य सततमेव कर्म्मत्वे भूतेऽयं चमत्कारोऽवश्यम्भावीति भावः । एवमपि विशिष्टकारकलक्ष्यभूतेऽनुशासनमनुल्लङ्घ्य कारकान्तर प्रयोगे तयोरुपपदविभक्त्योर्वा प्रयोगेणायातायां व्यञ्जकतायां स्पष्टार्थं ध्वन्यालोककाव्य प्रकाशादिग्रन्थेष्ववलोकनीयानि । वस्तुतस्त्वत्र 'ग्रामं व्याप्ये'ति कर्म्मभूतत्वेऽर्थकथनं कथञ्चित् याद्दच्छिकमिव प्रतिभाति, न हि सर्व्वत्र कर्म्मतो क्रियायाः साकल्येन व्याप्तिर्ब्बोध्यते ।

—ते तावद्भिः पृथक् पृथक्।

गुणनीयाः— ५५का

न एकपञ्चाशद्भेदा एकैकन्तावद्भिरेकपञ्चाशता गुणनीयाः, शुद्धत्वेन केवलं पर्यमानत्वाभावाद्योग्यत्वप्रभेदं मिश्रत्वयोग्यत्वाच।—

—तेन चन्द्रव्योमर्त्तुपक्षसंख्यकाः (२६०१) ॥ ५६

सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया।

चतुर्गुणे कृते वेदखवेदककुभः (१०४०४) स्मृताः ॥

शुद्धभेदैर्युतास्ते स्युः शरेषुयुगखेन्दवः (१०४५५) ॥ ५७

इति पूर्व्वैर्व्विलिखितं न सर्व्वेषामुदाहृतिः।

भवेद्योग्यत्वमात्रत्वादाधिक्यमपि गण्यते (१) ॥

अथानेकपञ्चाशद्ध्वनिभेदानां मध्य एकैकध्वनिभेदो यदि पञ्चाशद्ध्वनिभिः स्यात्तदैकैक एव भेद एकपञ्चाशत्संख्यको भवति। एवं क्रमेणानन्तभेदा भवन्ति। तत्रायं क्रमः—एकपञ्चाशद्भेदानां मध्य एकैकभेदो यदा पञ्चाशद्भेदैः सह कथ्यमानसंख्यायास्तदाल्पपञ्चाद्भ्यां मिश्रः स्यात्तदैकपञ्चाशद्भेदा एव एकपञ्चाशदङ्कैः पूरणीयाः, तथा सति मिलित्वा चन्द्रव्योमर्त्तुपक्षसंख्यका ध्वनयः स्युः। एवं यदैकैकभेदः पञ्चाशद्ध्वनिभिः सङ्करेण त्रिरूपेणाल्पपञ्चाद्भ्यां मिश्रः स्यात्तदाऽपि पूर्व्वरीत्या पुनश्चन्द्रव्योमर्त्तुपक्षसंख्यका ध्वनयः स्युः। यदा त्वेकपञ्चाशत्संख्यकपञ्चाद्भ्यां मिश्रः स्यात्तदाऽपि चन्द्रव्योमर्त्तुपक्षसंख्यकाः स्युः। एवमेकैकभेदो यदि पञ्चाशद्ध्वनीनां संसृष्ट्या मिश्रः स्यात्तदा पुनरपि चन्द्रव्योमर्त्तुपक्षसंख्यकाः ध्वनयः स्युः। एवं क्रमेणैकैकभेदस्यैकपञ्चाशदङ्कैर्व्वारचतुष्टयं पूरणे कृते मिलित्वा वेदखवेददिक्

(१) एकस्मिन्नपि प्रबन्धे एकविधध्वनिसमावेशेन स्वस्य स्वेन योजनं नास्त्येवेति क्षमा प्रकाशकृदादिमतमनुसृत्येयं गणना। ग्रन्थकारास्तु विभिन्नगणनाप्रणालीमनुसृत्य 'वेदखाब्धिशराः शुद्धैरिषुबाणाग्निसायकाः' इति मतान्तरं दर्शयन्ति। तत्रेयं युक्तिरप्योदर्शिता—च गणनापद्धतिः—प्रथमन्तावदेकपञ्चाशद्भेदाः (क ख ग ... छ ट ठ चा...) 'क' भेदस्य येन केनापि एकपञ्चाशतामेकतमेन ग्रहणयोग्यत्वात्, ततः पञ्चाशत्, 'ख' भेदस्य 'ख' भेदादारभ्य येन केनाप्यन्तराणां पञ्चाशद्भेदानामेकतमेन ग्रहणयोग्यत्वात्, न तु प्राकप्रदर्शितेन 'क' भेदेन, ग्रहणे, नूतनस्य संसृष्टभेदस्य समतः—तस्य प्रथममेव गृहीतात् 'क-ख' भेदादव्यतिरेकात् (प्रकाशकृदनुसारिणां मते ध्वनिभेदगणनायां 'क'-'ख'—समवायिभेदात् ख 'क'—समवायिभेदस्य विभिन्नता, विश्वनाथमते न तथेत्येन गृहीतसंख्याभेदस्य, फलम्)।

उदाहरणम्—

पद्मिन्यहं कुमुदिनी किल सैव सत्यं
सत्यं भवांश्च मधुसूदन एव मत्तः।
वामेन तामसुखयन्निभि दक्षिणेन
प्रातः प्रबोधयति मामपि लोचनेन॥ ३८

अत्र 'पद्मिन्या'दिशब्दार्थयोः शब्दार्थशक्त्युद्भवानुध्वनेः सङ्करत्रयम्।

तथाहि मां प्रति भवतोऽनुरागो महान्, यतो मां दक्षिणेनोदारेण लोचनेन दर्शनेन प्रबोधयति; तां प्रति तथा नानुरागः, यतो वामेन दर्शनेन तां निम्नसुखयत्—अत्र हेतुलङ्कारो व्यङ्ग्यः, यतोऽहं पद्मिनी, सा कुमुदिनी—पद्मिन्यपेक्षया कुमुदिनी निकृष्टैव। किं वाऽहं नाम्नैव पद्मिनी, न तु वस्तुत

ध्वनीनां भेदचतुष्टयात्मकमन्तर्भूता एव, न तु ततः पृथक् पृथक्। अन्यथा पृथग्विवक्षायां 'वसुगुणे कृते' इत्यादि ग्रन्थोक्तसंख्याया असङ्गत्यापत्तिः, यतस्ततोऽप्यनन्तकोटिगुणसंख्याया आधिक्यापत्तिः स्यात्। ननु यत्रावरकाव्ये शुद्ध एक एव ध्वनिस्तत्रापि वाच्यार्थस्य चमत्कारे तत्काव्यस्य मध्यमत्वमुक्तं, एवं सति तत्र तत्र शुद्धैकपञ्चाशद्ध्वनयः कथं गणनायां निविष्टाः स्युरित्यपेक्षायामाह शुद्धैकपञ्चाशद्भेदा अपि स्थानत्रयेण गणनायां निवेशनीया इत्यभिप्रायेणाह—शुद्धभेदैरिति। इति पूर्वैरिति—पूर्वाचार्यैरपि ताः सर्वा एवोदाहृताः। न तैरशेषतावत्संख्यकानां ध्वनीनामुदाहरणानि स्वग्रन्थे कथितानि, अतएव बाहुल्यभयादस्माभिरपि नोक्तानीत्यर्थः। भवेदिति—कस्यापि निपुणस्य सामर्थ्याया-मत्यान्तरभेदं प्रकल्प्योऽप्यधिकसंख्याया आनयने सामर्थ्यश्चेत्तदैतत्संख्यकध्वनिभ्योऽप्यधिका-धिकसंख्यका ध्वनयो भवन्तीति ज्ञेयमिति।

एकव्यञ्जकेति—एकव्यङ्ग्यमात्रबोधकः शब्दश्लेष इत्यर्थः। यस्य शब्दश्लेषस्यैकैव व्यञ्जना स एकव्यञ्जकसंश्लेषः। अत्र तु शब्दश्लेषस्यैकव्यञ्जनानन्तरं स्वात्मैव्यापरत्वज्ञानाद्भेदः, तत्र संसृष्टिरिति द्वयोर्भेदो बोध्य इति।

प्रातःकाले काऽपि खण्डिता नायिका मानभङ्गार्थं विनयनम्रादिकङ्कणवन्तं श्रीकृष्णं प्रत्याह—पद्मिनीति। श्लोकव्याख्यां स्वयमेव करिष्यति। शब्दार्थेति—शब्दशक्त्युद्भवार्थ-शक्त्युद्भवयोर्ध्वन्योरित्यर्थः।

अत्र प्रथमतः संशयास्पदतारूपसङ्करमाह—तथाहीति। अत्र 'दक्षिण'शब्दोऽनु-कूलार्थकत्वं 'वाम'शब्दस्य निकृष्टार्थकत्वम्। एवं 'लोचन'शब्दस्य दर्शनार्थकत्वमिति शिष्टार्थमभिप्रेत्याह—मां प्रतीति। संशय इति—यत्र निश्चयाभावेनायं वा ध्वनिरयं वा ध्वनिरिति संशयस्तत्र संशयास्पदता ज्ञेया। पुनरनेनैव श्लोकेनानुग्राह्यानुग्राहकतारूप-

इति—अन्यथा मय्येव त्वमनुरक्तोऽभविष्यः । सा नाम्नैव कुमुदिनी, न तु वस्तुत इति न सत्यं, अन्यथा तस्यां नानुरक्तोऽभविष्य इति संशयः । अथ पद्मिन्यहं कुमुदिनी सैवेति रूपकालङ्कारेण तद्धेतूपन्यासद्वारा प्रातर्मां प्रबोधयति, निशि तामसुखयदिति हेत्वलङ्कारो'व्यङ्ग्यः । भवान् 'मधुसूदन' एवेति, मधुसूदनस्य भ्रमरस्य तवोभयतः समरागतया न दोषः, किन्तु ममैव दोषः—यतोऽहं पद्मिनी, पद्मिन्याः प्रातरेव भ्रमरेण सह सन्दर्शनमिति 'मधुसूदन'शब्दद्योतितेन वस्तुना पुनरपि' रूपकालङ्कारो ध्वनितः—इत्यनयोर्मिथोऽनुग्राह्यानुग्राहकतया सङ्करः (व) । एवं मधुसूदन एव' भवान्मतः स्वमसृम!, मद् हर्षयोगे धातुः । तव कुत्रापि नापेक्षेति स्वभावोक्त्यलङ्कारेण तव दक्षिणचक्षुः सूर्यात्मकं, यतस्तेन पद्मिनीं मां प्रबोधयसि, वामन्तु चन्द्रात्मकं, येन कुमुदिनीं तामसुखयः—इत्येकस्मिन्नेव व्यञ्जके 'मधुसूदन'-पदसंश्लेष'एकव्यञ्जकानुप्रवेशः ।

अङ्करमार्थं—अथेति । हेतूपन्यासेति—मम पद्मिनीत्वरूपत्वे प्रातः प्रबोधनमेव हेतुः, तस्याः कुमुदिनीत्वरूपत्वे निशि सुखाश्रयत्वमेव हेतुरिति । एवं 'मधुसूदन'पदस्य भ्रमरार्थकत्वेन भ्रमरत्वोभयत्र साम्येन तस्य दोषाभावे प्रसक्तस्याः पद्मिनीत्वरूपकालङ्कार एव प्रयोजकः—अतएव ध्वनिरयमनुग्राह्यानुग्राहकभावरूपसङ्करोऽपि हेय इत्यर्थो 'मधुसूदन' शब्ददोषे भेदादि । वस्तुनेति—दोषाभावेनेत्यर्थः । पुनरप्यनेनैव द्योतकेनैकव्यञ्जकसंश्लेषरूपसङ्करोऽस्य रूपमाह—एवमिति । मधुसूदनः परमेश्वर एव भवान्—परमेश्वरस्यैव दक्षिणनेत्रस्य सूर्यत्वं, वामनेत्रस्य चन्द्रत्वं, साम्येनामिति 'मधुसूदन'शब्दश्लेषस्यैकैव व्यञ्जकेति भावः । इत्येकस्मिन्निति—अनयोः सूर्यचन्द्रत्वमात्रैकव्यञ्जकत्वेऽपि 'मधुसूदन'शब्दश्लेष एक एव व्यञ्जकः पदार्थः इत्यर्थः ।

अथ दक्षिणेन सरलेन दर्शनेन मां प्रबोधयसि, तेन ते मयि रागो नास्ति —वामेन कुटिलेन तामसुखयः, तेन तस्यामेव राग इति वस्तुना 'मधुसूदनो' भ्रमरो ज्ञानशून्यस्तथापि मत्त इति स्वभावोक्तिः। तथाविधस्य तव कुतो विवेकः; तेन त्वमविदग्धोऽसीति स्वभावाख्यानाक्षेपयोः (13) संसृष्टिः। एवं पदवाक्ययोर्गर्वधैर्यदैन्यग्लानिनिर्वेदावहित्थादिभावध्वनिभिश्च संसृष्टिः (घ)—उक्तस्त्रिरूपः सङ्करः संसृष्टिश्च।

यथा वा—

उच्छूनस्तनितस्य सर्वसुहृदः कृष्णाम्बुदस्योदयो
वाताः शीकरवाहिनः सुमनसां वीथी विकाशं गता।
स्निग्धा भूर्गत एव सम्भ्रमभरः श्यामायमाना दिशः
स्फीतं गोकुलमुन्मदाय भरितः शीता गिरिद्रोणयः ॥ ३८॥

पुनरप्यनेनैव श्लोकेन संश्लेषसाङ्कर्यमाह—यथेति। अत्र कल्पे 'दक्षिण'शब्दः सरलार्थकः, 'लोचन'शब्दो दर्शनार्थको ज्ञेयः। सरलनेत्रेण नायिकाया अवलोकनमौदासीन्यव्यञ्जकं, कुटिलनेत्रेणावलोकनन्तु प्रेमव्यञ्जकमिति रसशास्त्रप्रसिद्धिः। तत्र 'मधुसूदन'शब्दस्य प्रथमतो ज्ञानशून्ये लक्षणावृत्तिः। पुनर्भृङ्गस्याविवेकावैदग्ध्यादिरूपार्थे लक्षणा। अतएवैकव्यञ्जकसंश्लेषाद्भेदो ज्ञेयः। तत्र 'मधुसूदन'पदश्लेषस्य केवलव्यङ्ग्यार्थमात्र एकैव व्यञ्जनेति। उक्त इति—एकस्मिन्नेव श्लोके त्रिरूपः सङ्कर उक्तः, संसृष्टिश्चोक्तेत्यर्थः।

संश्लेषसाङ्कर्यमाह—यथा वेति। काचित् सखी गोवर्द्धनस्य निकटवर्त्तिनि नगरे स्थितां स्वयूथेश्वरीं गुरुजनसमीपस्थां दृष्ट्वा गोवर्द्धनकन्दराकुञ्जे तस्यां श्रीकृष्णान्तं प्रापयितुं व्याजेन देवाद्गोवर्द्धनोपर्युदितं मेघं लक्षीकृत्य वदति—उच्छूनेति। हे सखि।

---

(घ) 'पद्मिन्यह'मित्यादिश्लोके ध्वनिसंसृष्टिः। तत्र असंलक्ष्यक्रमशृङ्गारस्यालङ्कारयुगलस्य स्वभावोक्त्याक्षेपाभिधस्य संसृष्टिः, तथाऽसंलक्ष्यक्रमव्यङ्ग्यस्य भावध्वनिकदम्बकस्यापि संसृष्टिः। 'पद्मिन्यह'मिति स्वकीयोत्कर्षख्यापनेन गर्वः, तस्यामेव तव रागः इत्यवगत्यान्यपि नायिकाऽहं त्वां प्रति सानुरागेति धैर्यं, ज्ञानशून्यस्त्वं, तथाऽपि त्वयि मे प्रेमेति ग्लानिः, धिङ् मां यैवंविधासत्प्रकारिणि विश्वसिति, यद्वा धिङ् मां त्वत्प्रीतिमलभमानां वराकीमिति निर्वेदः, नायकस्य ज्ञानशून्यताऽविष्कारेणात्मलाघवस्य भावगुप्त्यापरपर्यायावहित्थादयो बहवो भावाः श्लोकादेशातो निपुणैरन्वेष्याः। एषां भावध्वनीनां शान्त्युदयसन्धिशबलतादिविविधभेदेन विवेचनमुत्तरत्र 'रस' किरणे, अतो नात्र तत्प्रपञ्चः।

---

(13) 'समासाख्यानाक्षेपयोः' इति (क) (ख) (ग) पुस्तकेषु पाठ उपलभ्यते।

अथ शब्दशक्त्युद्भवार्थशक्त्युद्भवध्वन्योः संसृष्ट्या ध्वनिसंसृष्टिः, तथाऽलङ्काराणां वस्तूनाञ्च संसृष्टिः।

तथाहि गुरुसमीपस्थितां गोवर्द्धननिकटनगरनागरीं प्रति गिरिकन्दर-सङ्केतस्थं श्रीकृष्णं विज्ञापयितुं व्याजेन दैवोपनतं मेघोदयं लक्ष्यीकृत्य काचित् सखी वदति। वाच्यार्थः स्फुट एव। अत्रोद्दीपनविभावः स्फुटो भवंस्तुल्य-योगिताऽलङ्कारं व्यनक्ति। कृष्णश्च सङ्केतस्थोऽम्बुदोदयश्चाभूदिति यौगपद्य-प्रतिपत्त्या तुल्ययोगिता, कर्म्मधारयोपलक्षणतृतीयातत्पुरुषमात्रयोः संसृष्टिः। कृष्णाम्बुदयोः साधर्म्म्यादुपमालङ्कारो व्यङ्ग्यः। 'उच्छूनस्तनितस्ये'ति उच्छून-गर्जितत्वेनाम्बुदस्य वर्षुकत्वं, तेन च शीघ्रमभिसरेति वस्तु व्यङ्ग्यम्—हे 'उच्छूनस्तनि! तस्ये'ति सभङ्गश्लेषेण संबोध्यमानजनस्य प्रौढत्वं, तेन स्तन-भाराक्रान्ततया गमनमान्थर्य्यं, तेन न च मातः परं विलम्बनीयमिति ध्वनि-प्रतिध्वन्यनुध्वननं, 'तस्ये'ति सर्व्वनाम्नो महिम्ना कृष्णस्य परमदुर्लभता, तथा च बहुवल्लभत्वम्। 'सर्व्वसुखद' इति हेतोर्हेत्वलङ्कारो व्यङ्ग्यः (य), तस्मान्नातः परं विलम्बः कार्य्य इति वस्तु। 'वाताः शीकरवाहिन' इति स्वभावाख्याने,

सर्व्वेषां व्रजविलासिनां सुखदः कृष्णवर्णस्य मेघस्य गोवर्द्धनोपर्य्युदयो जातः। कथम्भूतस्य?—उच्चैर्घोरं स्तनितं गर्ज्जितं यस्य। एवं सर्व्वेषां सुखदाः पवना अपि शीकराम्बुकणान् वोढुं शीलं येषां तथाभूताः सन्तश्चलन्तीति शेषः। एवं सुमनसां मालतीनां वीथी विकाशं वर्षासमयं प्राप्य प्रफुल्लताङ्गता। तथा व्रजवासिनां निदाघजन्यघर्म्मभयोऽपि गतः। मेघैरेव दिशः श्यामायमाना बभूवुः;—अतएव समस्तं गोकुलमपि स्फीतमानन्देन प्रफुल्लम्। एवं सरितो नद्योऽपि वर्षाकालीनजलानां सम्भेदेनानन्दवशादुन्मत्ता बभूवुः। गोवर्द्धनद्रोण्यो ऽपि शीतला जाताः। तस्मात् सर्व्वप्रकारेणास्माकं व्रजवासिनां सुखसमयो जातः। वाच्यार्थः स्फुटः, श्लिष्टार्थस्तु—हे उच्छूनस्तनि! गोवर्द्धने कृष्णेन सह मेघस्योदयो जातः। मेघादीनामुदयकथनेनोद्दीपनविभावज्ञापनद्वाराऽभिसारे उत्कण्ठां वर्द्धयति। श्लिष्टेति—मामाद्यभावेन त्वमपि श्लिष्टाऽभूरित्यर्थः। अत्रोद्दीपनेति—'कृष्णाम्बुद'पदस्य कर्म्मधारय समासेन मेघस्योद्दीपनविभावत्वं स्फुटं व्यङ्गीभवत् श्रीकृष्णेन सह मेघस्योदय इति तृतीया-तत्पुरुषेण तुल्ययोगिताऽलङ्कारं व्यनक्ति। तुल्ययोगितामेवाह—कृष्णश्चेति। कर्म्मधारयेति

(य) 'अभेदेनाभिधा हेतुर्हेतोर्हेतुमता सह' इत्यपरैर्व्विश्वनाथादिभिरभिहितो हेत्वलङ्कारो भाव्यः, परं निष्पादकहेतुगर्भकार्य्यनिष्ठाद्यप्रसिद्धालङ्कारस्यैवात्र 'हेतु'पदेन परिग्रह इति

तेन सुरतश्रमजलकणापहारिणस्तैते भविष्यन्तीति वस्तु। सुमनसां मालती-नामिति पूर्ववत् स्वभावाख्यानं, तेन सुमनसां मानरहितानामन्यासामङ्गनानाञ्च वीथी कृष्णोऽभिसर्त्तव्य इति यो विश्वासः प्रसादस्तं गतेति वस्तु, तेन च यावत् काऽपि तं नाभिसरति तावत्त्वमभिसरेति वस्तु। 'स्निग्धा भू'रिति चरण-सञ्चरणसुखदत्वं, परञ्च स्निग्धाऽभूस्त्वत्र मनसि वाम्यञ्च नास्ति, तत् कथमपरं विलम्बस इति वस्तु। स्निग्धत्वे हेतुः 'गत एव सङ्कुरभर' इति हेत्वलङ्कारः, तेन च त्वदाकारेणैव मया त्वदन्तःकरणं ज्ञातमिति स्वचातुर्यप्रकटनम्। 'श्यामायमाना दिश' इत्यलक्ष्या भूत्वा गमिष्यसि, तेन न काऽपि शङ्केति वस्तु। व्यङ्ग्यपक्षे—गोकुलं व्रजस्थलो स्फीतं जनाकीर्णं, तेनात्र तमानेतुं न शक्नोमि। सरितो यमुनाद्या उत्पूराः, तेन तत्तटादौ च न सङ्केतयोग्यता, तर्हि पारिशेष्यात् 'शीता गिरिद्रोणय' इति भङ्ग्या तत्रैवाभिसारः क्रियतां, तत्रै-वागतोऽस्मि कृष्ण इति व्यञ्जकानां संदृष्टिरेव।

एवंविधा एव ध्वनय उत्तमोत्तमकाव्यलक्षणबीजम्। ध्वनेश्चरापरयुगलं ध्वननमनुध्वननञ्च। यत्र केवलं ध्वननं तदुत्तमं काव्यं, यत्र तु ध्वननानुध्वनने

—श्यामश्यामायमानेति कर्मधारयपक्षे, एवं कृष्णेन सहाम्बुदोदय इत्युपलक्षणतृतीयातत्-पुरुषपक्षे च, मात्रा कार्ष्ण्यं ययोः, तत्सम्भूतयोरुद्दीपनविभावत्वतुल्ययोरिन्दीवरघनयोः संदृष्टिः। कर्मधारयपक्षे 'कृष्णे'ति विशेषणेन मेघरूपोद्दीपनस्य वैशिष्ट्यं बोधयति। कालस्योत्कण्ठितताकथनेन संबोध्यमानस्य स्वयमेवाभिमानस्य प्रौढ़यौवनत्वमानीतम्। यमुनाद्या इति—उद्धताः पूराः प्रवाहा यत्र तथाभूताः। तेनेति—प्रवाहाधिक्येन तासां नदीनामादी भरे सङ्केतयोग्यता न सम्भवतीत्यर्थः।

ध्वनेरिति—उत्तमध्वनेरुत्तमोत्तमध्वनेश्चेत्यर्थः। 'त्वामस्मि वच्मी'त्यादौ वर्त्तमानो-ऽहन्तो वच्मीत्यर्थः। अत्र 'स्मि'पदेनाहमुल्लक्षणवक्त्रेऽर्थान्तरसंक्रमितवाच्यध्वनिः। एवं 'स्निग्धश्यामले'ति पदे 'लिप्त'पदेनातिशयमेघागमनरूपार्थान्तरसंक्रमितवाच्यार्थध्वनिः, तेन चास्मिन् घनागमे सीता कथं जीविष्यतीत्यनुध्वनिः। रामोऽहमिति—रमते रमयतीति वा व्युत्पत्तिसिद्धरामो न भवामि, किन्तु नाम्नैव रामः अतोऽत्रात्यन्ततिरस्कृतवाच्यार्थो

---

प्रतिभाति। उद्भटादयः प्राचस्तमेव 'हेतु'पदेनोल्लिखन्ति। एवमपि प्रायुक्त चाल-ङ्कारोद्देशे 'हेतुविदप्रयोगोऽत्र ग्रन्थ एतत्प्रसङ्गे समर्थनीयः।

Quoted in Kavyaprakasa under Ullasa IV.

तदुक्तमोत्तमम् । प्राचीनैस्तु सर्व्वेषामुत्तमत्वं निरुक्तं, तत्तु नास्माकमभीष्टम् (म) यतः 'त्वामस्मि वच्मीत्या'दौ वचेरर्थान्तरसंक्रमितवाच्यध्वनेः, 'स्निग्धश्यामलकान्तिलिप्तवियत्' इत्यादिषु अनुध्वननरूपार्थान्तरसंक्रमितात्यन्ततिरस्कृतसंसृष्टस्य च, मत्र ध्वनेरेक एवास्वादयेऽन्यत्, तैर्लक्ष्यतां नाम न त्वस्माभिः ।

* इत्यलङ्कारकौस्तुभे ध्वनिनिर्णयो नाम तृतीयः किरणः ॥ *

ध्वनिः। एवं विप्रलम्भरसादिरूपा बहवो ध्वन्यनुध्वनयो वर्त्तन्ते। अत्र त्वामस्मीति काव्यमेवंविधस्य काव्यस्योत्तमत्वमिति विवचनीयम्। पद्यद्वयं 'काव्यप्रकाश'कृता समर्थितम्। इति—

---

(म) 'ध्वनेर्ध्वन्येन्तरोद्गारे तदेव ह्युत्तमोत्तम'मिति प्रागेव प्रदर्शितं वैलक्षण्यमत्र गम्यताम्। ध्वनिकारमम्मटादिभिराचार्य्यैः ध्वन्युत्थापितानुध्वननादिरूपार्थान्तरातिरिक्तानाञ्च सर्व्वेषामेव ध्वनीनामुत्तमकाव्यत्वं स्वीकृतम्। न तद्रुचिरमिति कर्णपूरगोस्वामिनामापत्तिः। व्यञ्जनाया आस्वादस्य तारतम्यं स्फुटमेव, ततोऽत्र विभिन्ना भागकल्पना। रसगङ्गाधरकारेणाप्युत्तमोत्तमाख्यतत्तद्भेदस्य काव्यस्योत्तमाख्यादरादतिरिक्तस्य सत्ता स्वीकृता—तन्मतञ्च प्रागेवास्माभिरितरत्र दर्शितम्। 'तैर्लक्ष्यतां नाम, न त्वस्माभि'रिति मोतृग्रामनिर्द्देशोऽपि नावोचितः—न तु मान्यानामपि-प्राचां मतमप्यनादरणीयमिति स्वमताविष्कारायैवेहित इति।

# अथ चतुर्थकिरणः ।

अथ गुणीभूतव्यङ्ग्यानि कियन्ति भवन्तीत्याकाङ्क्षायां तेषां भेदानाह—

यद्यपि 'मध्यमे तत्र मध्यम'मिति (१ किरणे ६ कारिकायाम्) पूर्व्वोक्तस्य मध्यमकाव्यस्यैव गुणीभूतव्यङ्ग्यत्वं, तथापि ध्वनेरवैशिष्ट्ये वैशिष्ट्ये च हैलक्षणी-पाधितो गुणभावाद्गुणीभूतत्वमिति 'च्वि'र्थं एव द्वैविध्यं बोधयति (क)।

ननु काव्यप्रकाशस्तोत्तमध्यमेभ्यः सकाशाद्भिन्नान्येव गुणीभूतव्यङ्ग्यान्युक्तानि, त्वमते तु मध्यमकाव्यस्यैव गुणीभूतत्वं, तथात्वे मध्यमकाव्यस्य पूर्व्वोक्तयुक्त्या शब्दार्थयोर्वैचित्र्ये सत्युत्तमताकथनानुपपत्तिरित्याह—यद्यपीति। तथापीति—ध्वनेरवैशिष्ट्येऽवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति तथाऽपराङ्गत्ववाच्यपोषकत्वादिगुणयोगादुत्तमध्वने-रपि (१) गुणीभूतत्वमिति, तथा तत्येकस्यैव मध्यमकाव्यस्य शब्दार्थयोर्वैचित्र्ये सत्युत्तमत्वं, उभयोरेवोत्तमकाव्यस्यापराङ्गत्ववाच्यपोषकत्वादिगुणसत्त्वकपदान्तरसमभिव्याहारे सति गुणी-भूतत्वं, अतो न विरोधः। एतदर्थमेव 'गुणीभूत'पदस्यान्तर्भूतेन 'च्वि' प्रत्ययेन बोधयति—'च्वि'र्थं एवेति। न गुणो गुणो भवतीति व्युत्पत्त्या पूर्व्वमगुणत्वं (२), पश्चाद्गुणयोगाद्गुणी

(क) इह सर्व्वालङ्कारशास्त्रे 'गुणीभूतव्यङ्ग्य'पदेन विशिष्टलक्षणलक्षितः काव्यभेद एव गृह्यते—पदञ्च तदतो योगरूढमित्यालङ्कारिकाणां स्वरसः। तत्रभवता कर्णपूरगोस्वामिना पदस्य यौगिकार्थमपह्नुत्य—अगुणः गुणः, गुणोऽगुणो भवतीत्यर्थेति व्युत्पत्त्या—तत्कस्य व्यङ्ग्यस्य ध्वन्यपराभिधेयस्योपाधिभूतयोर्वैशिष्ट्यावैशिष्ट्ययोर्भेदसरणिमङ्गीकृत्य द्वैविध्य-मस्य काव्यविशेषस्याङ्गीक्रियते। अवैशिष्ट्यपक्षे तु 'शब्दार्थवैशिष्ट्ये द्वे यावः पूर्व्वपूर्व्वताम्' (१म किरणे ■ कारिकायाम्) इति कारिकालक्षणस्याविषयेऽवरत्वमायाति—न तत्र भेदकल्पना। शब्दार्थवैशिष्ट्ययोरेकतरस्य द्वयोर्व्वा वर्त्तमानत्वे व्यङ्ग्यस्य ध्वनेर्व्वाच्याङ्गतया साम्येन वाऽगुणत्वे 'स्फुटमपराङ्ग'मित्यादिनाऽष्टधा भेदकल्पनेति तत्रैव तत्प्रपञ्च इत्याशयेन मूलस्याशीतकाव्यसारता। इत्थं विशिष्टस्य गुणीभूतव्यङ्ग्यस्य 'ध्वनि'पदेन परामर्शे आपातविसदृशोऽपि नानुचितो यथा 'कार्त्स्न्यं गुण एवे'त्यादौ (४र्थ किरणे ६८ श्लोके) लक्ष्ये। अत्र खलु कौस्तुभकृल्लक्षित उत्तमः काव्यभेद इति मत्येव मूले दर्शितम्। वस्तुतस्तु 'गुणीभूतव्यङ्ग्य'पदस्यावान्तरोद्दिष्टकाव्यभेदार्थकल्पनागौरवादरं तस्यापेक्षिकत्वपक्षस्वीकारः—यत्रोत्तमोत्तमत्वं तत्र स्फुटत्वादीष्टलक्षितात् कारणात् गुणीभूतव्यङ्ग्यत्व उत्तमत्वं,' यत्र

(१) 'अवरत्वे सति तथा चावरध्वनित्वेऽप्यपराङ्गत्ववाच्यपोषकत्वादिगुणयोगा'दिति (क) पुस्तके, 'अवरत्वे सति वैशिष्ट्ये च ध्वनेर्मध्यमत्वादौ च सति मध्यमकाव्यस्यापराङ्गत्वे'त्यादि मुद्रितपुस्तकेऽनवधान-विजृम्भितः पाठ।

(२) 'अगुणत्वपरीत्यमत्व मिति (क) पुस्तके पाठ उपलभ्यते।

तत्राविशिष्टे भेदो नास्त्येकरूपत्वात्, द्वितीये तु भेदोऽष्टधेति सूचयति—

स्फुटमपराङ्गं वाच्यप्रपोषकं कष्टगम्यञ्च।
सन्दिग्धप्राधान्यन्तुल्यप्राधान्यकाकुगम्ये च।
असमनोज्ञञ्चेति गुणीभूतव्यङ्ग्यस्य भेदाः स्युः॥ ५६ का

क्रमेणोदाहरणानि—

दृष्टा भागवताः, कृपाप्युपगता तेषां, स्थितम्तैः समं,
ज्ञातं वस्तु विनिश्चितञ्च, कियता प्रेम्णापि तत्राश्रितम्।
जीवद्भिश्च मृतं, मृतैर्यदि पुनर्मार्गं व्यमस्याहृये-
स्तत्पश्चेव न किं कृतं, बत विधे! वामाय तुभ्यं नमः (ख)॥ १

भूतत्वमिति द्वैविध्यं बोधयतीत्यर्थः। अत्रेति—अवैशिष्ट्यादवरत्वे सत्यगुणदशायामपि निकृष्टत्वेन गुणदशायान्तु सुतरामतिशयनिकृष्टत्वात्, व्यस्तत्वेनैकरूपत्वान्न भेदो भवतीत्यर्थः।

सन्दिग्धेति—वाच्यार्थापेक्षया सन्दिग्धं प्राधान्यं यत्रेत्यर्थः। तथा च वाच्यार्थापेक्षया ध्वनेः प्राधान्यनिश्चय एवोत्तमतायाः प्रयोजकः, न तु सन्देह इति भावः। तुल्येति—वाच्यार्थध्वन्योस्तुल्यप्राधान्यमित्यर्थः।

अत्र ग्रन्थकार एव महाप्रभोः पार्षदानां मध्ये कस्यचित् कस्यचित् प्राकट्यं दृष्ट्वा विरहव्याकुलः सन्नात्मानं निन्दन्नाह—दृष्टा इति। तेषां कृपाऽप्युपगताऽऽप्ता। तैः सहवासत्वेन निश्चितं यद्वस्तु तदपि ज्ञातम्। तत्र तेषां निकटे आश्रितं वासः कृत इत्यर्थः।

---

स्तत्र एवोत्तमत्वं, तत्र तस्मादेव कारणान्न्यूनतायां काव्यस्य मध्यमत्वं, यत्र ध्वनेर्मध्यमत्वं तत्रैतस्मादेव कारणात् गुणीभूतव्यङ्ग्यत्वे काव्यस्यावरत्वमिति तु न दिक्तं वचः। प्रेयोक्त स्थलद्वये तथा 'प्रागुक्तध्वनिसंख्या.' (६० कारिकायाम्) इत्यादौ तत्र टीकायाञ्च साधारण्येन सर्व्वत्रैव 'ध्वनि'पदप्रयोगस्तु भाक्त एव। गुणीभूतव्यङ्ग्यस्यापेक्षिकार्थं कल्पनापक्षः स्वयं ध्वनिकृतैवानुमोदितः—'प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्। धत्ते रसादितात्पर्यपर्यालोचनया पुनः'—इत्यादि। तदर्व्वाचीना आलङ्कारिका प्रकाशकाराद्या यद्यप्येव 'गुणीभूतव्यङ्ग्य'पदस्य काव्यभेदत्वरूपे रूढिप्रयोगमुपपादयन्तोऽपि सबहुमानं ध्वनिकृतासुपरिदर्शितं मतमनुसरन्तो व्यास्तां तावत् पारिभाषिकपदप्रयोग साधुत्वचिन्ता।

(ख) स्फुटमिति—काव्यप्रकाशादिनिबन्धेष्वेतदेव 'अगूढ'मिति भण्यते। एवं यदत्र 'कष्टगम्य'पदेनाभिहितं तस्य तत्र 'अस्फुट'मिति संज्ञा। स्फुटं सर्व्वजनसंवेद्यमतितरां प्रकाशम्। 'तादृशं वाच्यायमानमथा न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम्' - तदुक्तम्

अत्र 'जीवद्भि'रिति स्निग्धावस्थैः, 'मृतै'रिति तद्विपरीतावस्थैः— इत्यर्थान्तरसंक्रमितवाच्यं, तत्तु स्फुटमिति गुणीभूतम् ।

यथा वा—

शयनसहचरीणां लोचनैरर्च्यमाना-
न्यतिरतिजयलक्ष्मीलक्ष्मभिः पक्ष्मलानि ।

तेषां दर्शनस्पर्शसम्भाषणादिभिरेव जीवनं, तादृग्जीवनवद्भिरस्माभिर्न मृतम् । अधुना तेषां विरहे वयं मृता एव । मृतैर्यदि पुनर्मरणं कथं तदोत्पत्तावेव किं न मृतम् । तथा च जीवद्दशायां मरणं न जातं, अधुना मृतानामस्माकं पुनर्मरणं भविष्यत्येतदपेक्षयोत्पत्तिकाल एवास्माकं विधाता मरणं कथं न कृतं, तस्मात् प्रतिकूलाय विधात्रे नम इत्यर्थः । स्निग्धेति— सुखमयावस्थैरित्यर्थः । तद्विपरीतेति— दुःखमयावस्थैरित्यर्थः । तत्त्विति— स्निग्धस्य मृत्युरपि न दुःखद इति व्यङ्ग्यमित्यर्थः ।

यथा वेति— स्नाताभिः स्वाङ्गैः करणैः स्वाङ्गानि खचत इव । एवमतिशयरतिजये या लक्ष्मीः शोभा तस्याः सूचकैर्लक्ष्मभिश्चिह्नैः करणैः पक्ष्मलानि पुष्टानीव । पुनः कथम्भूतानि— शयनसमये परिचरणपराणां सहचरीणां लोचनैरर्च्यमानानि । 'अर्च्यमानानी'ति पदेन स्वसामर्थ्यमात्मनैव (3) सादरं दृश्यमानत्वार्थान्तरसंक्रमितं वाच्यं स्फुटम् । 'पक्ष्मलानी'ति पदेन

नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः । अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः' इति । न चैतेषां गुणीभूतव्यङ्ग्यभेदानां कथमपि 'ध्वनि'भेदानां लक्षणाभिधोत्थापितानां मध्ये अन्तर्भावः प्रश्नः— यथाहुस्तद्दीपकाराः— 'लक्षणामूलेत्यनेन लक्षणाभिधयोरेकाश्रितयोरर्थकेन निष्कलक्षणावत्पदध्वनितकाशीयध्वनेरस्फुटद्वितीयप्राधान्यतुल्यप्राधान्यासुन्दराणां ग्रहणम्', तेषु चञ्चोद्देशेन व्यवधाय व्यपदेशः । काकाक्षिमेऽपि न लक्षणाऽनुपपत्त्यभावात्, गूढत्वेनामुख्यत्वात्, 'प्राधान्य' इत्यनेनापराङ्गवाच्यसिद्ध्यङ्गयोर्ग्रहणम्' इति ।—स्फुटस्योदाहरणमपरिदर्शितं मन्यतामुत्तमत्वैतन्यचन्द्रोदयनाटके शेषाङ्के सन्निवेशितम् । वैष्णवसाहित्यपायोनिधौ कश्चिद्भक्तानां भगवद्वतारस्वरूपाणां महाप्रभुश्रीकृष्णचैतन्यपादानां प्राकट्यमृतेर्विरहव्याकुलता, कश्चिदा तेषां प्राकट्यदर्शनाभावेन भावविधुरता वरीवर्त्यैतत् तत्तत्काव्यसुधारसोर्मिसुखधामस्वनं सज्जना एव बुध्यन्ते । गोविन्ददासकविराजानन्दानन्दोक्तयः प्रथमोक्ते प्रमाणं, द्वितीयोद्दिष्टे गोविन्ददासकविकृष्णदासकविराजादीनामार्त्तयः स्वकीयरचनासमुज्ज्वलनाधिता: प्रमाणम् ।

(3) 'स्वसामर्थ्यमनेने'ति (क) पुस्तके 'स्वसापत्न्यमनेने'ति, (ख) (ग) पुस्तकयोः, 'स्वसामर्थ्यमानेने'ति (घ) पुस्तके, 'स्वसामर्थ्यमानमेने'ति (च) पुस्तके, 'स्वसामर्थ्यमानसेने'ति (छ) पुस्तके पाठः ।

रहसि सबहुमानचुम्ब्यमानानि दृग्भ्यां
सृजत इव मृगाक्षी स्वाङ्गकैः स्वाङ्गकानि ॥ २

अत्र 'चर्च्यमानानि' 'पक्ष्मलानि' 'चुम्ब्यमानानि' 'सृजती' इत्यर्थान्तर-संक्रमितवाच्यानि, तानि तु स्फुटान्येव।

अपराङ्गं यथा—

कोपे यथातिललितं न तथा प्रसादे
वक्त्रं, विधिस्तव तमोऽस्तु सदैव कोपम्।
इत्याकलय्य दयितस्य वचोविभङ्गीं
राधा जहास विहसत्सु सखीजनेषु (ग) ॥ ३

अत्र विप्रलम्भशृङ्गारो हास्यस्याङ्गम्। 'राधा विवर्त्तितविनम्रमुखी बभूवे'ति चेत्, तदा कोपप्रशमो व्रीडोदयश्चेति ध्वनिरेव स्यात्।

चित्रितत्वं व्यङ्ग्यं, तत् स्फुटं, तेन च सम्भाव्यतिशयोऽत्र तद्गुणानिर्वचनीयस्तु व्यङ्ग्यम्। 'स्वदृग्भ्यां चुम्ब्यमानानी'त्युपमानोक्तिपूर्वकं दृष्टानि, तेनाहमत्र कृतार्थास्मीति स्वसापत्न्यं वस्तु व्यङ्ग्यम्। 'सृजत' इति पदेन पुनः पुनः सृष्टतोऽर्थान्तरसंक्रमितं वाच्यं, इति मन्तव्यं स्फुटमेव।

अपराङ्गमिति—अपरस्य गौणरसस्याङ्गमित्यर्थः। वचसो विभङ्गीं श्रुत्वा। राधा विवर्त्तितेति—अस्य पद्यस्य (४) गुणीभूतत्वमुक्तं 'राधा जहास विहसत्सु सखीजनेष्वि'ति चरणं विहाय 'राधा विवर्त्तित'त्यादि चरणस्य प्रक्षेपे सति अस्यैव काव्यस्योत्तमता भवेदित्यर्थः। न च पूर्व्वोक्तपद्यद्वयस्य गुणीभूतत्वसूचकवाक्यमस्ति उत्तमताबोधकवाद प्रयोगः कथं न कृत इति वाच्यं, तत्पद्ययोर्गुणीभूतत्वेऽपि वाच्यार्थस्यातिचमत्कारित्वेन प्रपञ्चनस्यानौचित्यात् (ग)।

यथा वा—

मुग्धे ! परिहर मानं मानय वचनं प्रियालिवृन्दस्य ।
यौवनमिदमम्भोरुहदलजलबिन्दूपमं विद्धि ॥ ४

अत्रापि विप्रलम्भशृङ्गारध्वनिः शान्तरसस्याङ्गम् । 'अर्चय यौवनकुसुमैर्देवं कुञ्जेश्वरं क्रमशो'त्युक्तौ ध्वनिरेव स्यात् ।

वाच्यपोषकं यथा—

क्वाहं गोपवधूः, स्मरायुतजयी गोपेन्द्रसूनुः क्व वा
सार्द्धं तेन रतिर्ममाभवदिति भ्रान्तेः परं भण्यते ।
इत्येवं गुरुकर्णगोचरतया सख्या समं निर्मिता
वार्तामन्यथयाञ्चकार पुलकी गण्डः कुरङ्गीदृशः (घ) ॥ ५

अत्रा'न्यथयाञ्चकारे'त्यस्य वाच्यस्य गण्डस्य पुलकितत्वं प्रपोषकम् ।

'इत्येवं गुरुकर्णगोचरतया सख्या समं जल्पने
रोमाञ्चोत्करमञ्चलेन सुमुखी गण्डस्थलीमावृणोत् ॥'

इत्युक्तौ ध्वनिरेव स्यात् ।

यथा वा—

काठिन्यं गुण एव येन भवती कान्तस्य केशग्रहं
स्नेहो दूषणमेव येन लभते देवी दशां दग्धताम् ।

मुग्ध इति—यौवनमिदं कमलदलस्थजलबिन्दुवन्नश्वरं विद्धीत्यनेन शान्तरसो व्यङ्ग्यः, तस्याङ्गं शृङ्गाररसः, तेनायं ध्वनिर्गुणीभूतो ज्ञेयः ।

क्वाहमिति—गोपानामिन्द्रस्य राज्ञः पुत्रस्तत्रापि स्मरायुतजयी कोटिकन्दर्पतोऽपि सुन्दरः स श्रीकृष्णो वा क्व । एवं तस्य प्रजा कश्चिन्निकृष्टो गोपस्तस्य वधूः तत्रापि तस्याग्रे कुरूपाऽहं वा क्व इति वाक्प्रयोगकाले 'कृष्ण'शब्दोच्चारणाज्जातो यो गण्डदेशे पुलकः स एव सख्या समं निर्मितां वार्तामन्यथयाञ्चकार मिथ्याभूताञ्चकार । गण्डस्थलीं कपोलभूतां—रोमाञ्चोत्करं रोमाञ्चव्याप्तामिति यावत् ।

(घ) स्मरायुतजयीति—श्रीकृष्णः श्रीमद्भागवतादौ 'कोटिकन्दर्पदर्पहेत्या'दिना, राधायां वर्णितः । तत्र टीकाकृतां वैष्णवगोस्वामिचरणानां विश्वनाथचक्रवर्त्तिप्रभृतीनां वाक्येव 'सार्द्धं तेन रतिर्ममाभवदिति भ्रान्ते'रित्यादंशस्य सुन्दरी प्रकाशिका । अत्र वाच्यस्य सिद्धिरेव व्यङ्ग्याधीनेति वाच्यप्रपोषकत्वम् । 'गुरुकर्णगोचरतये'ति स्वयचनस्य

तुभ्यं कङ्कतिके ! नमोऽस्तु, धिगतिस्नेहामिति व्याजवा-
ग्विन्यासा चिकुरप्रसाधनविधौ क्षणेन सा सस्वजे ॥ ६

अत्र विपक्षरमणीं प्रति काठिन्यादिदोषप्रसञ्जनेन प्रागल्भ्यातिशय-प्रकटनेन वाऽसूया। आत्मानं प्रति स्नेहमयत्वगुणारोपेण स्वाधिकसन्ताप-प्रकटनेन दैन्यम्। काठिन्यस्नेहयोर्गुणदोषत्वारोपेणात्यन्ततिरस्कृतवाच्य ध्वनित्वम्। कङ्कतिकां प्रति विपक्षरमणीत्वारोपेण समासोक्तिः। 'तुभ्यं नमोऽस्त्वि'त्यस्य 'धिगि'ति चाऽनयोर्निर्वेदयोः शावल्यं—इतीत्थं भूयसाऽपि लक्षणेनोत्तमोत्तममपि काव्यं 'व्याजवाग्विन्यासे'त्येकस्यैव पदस्य वाच्यस्य पोषकत्वादुत्तमोत्तमत्वं विहाय केवलगुणीभूतव्यङ्ग्यत्वेनोत्तमं जातं, किन्तु 'धिगतिस्नेहामितीयत्युक्तिं जल्पन्ती चिकुरप्रसाधनविधा'वित्यादि चेत्तदा-ऽस्योत्तमोत्तमत्वमेव (ङ)।

मानानन्तरं सङ्गोपसम्भुक्ता पश्चात् स्वाधीनभर्तृका काचिन्नायिका श्रीकृष्णस्य केशप्रसाधनधूर्त्तत्वसौ कङ्कतिकां लक्षीकृत्य व्याजेन सामाह—काठिन्यमिति। हे कङ्कतिके! तव काठिन्यं गुण एव। येन काठिन्येन हेतुना भवती श्रीकृष्णकेशग्रहं लभते। स्नेहस्तु दूषणमेव येन तैलरूपेण दैपी दीपसम्बन्धिनी दशा वर्त्तिका दग्धतां लभते। इति व्याजेन कङ्कतिकामिषेण विपक्षरमण्या दोषप्रख्यापकस्य वचसो विन्यासो यस्याः सा। वाग्विन्यासं कृत्वा क्षणेन श्रीकृष्णेन सस्वजे तथा सङ्गालिङ्गनपक्ष इत्यर्थः। प्रागल्भ्येति—केशाकर्षणरूपप्रागल्भ्यातिशयप्रकटनेनेत्यर्थः। गुणदोषत्वेति—काठिन्यं गुण इत्यत्र गुण-शब्दस्य दोषे लक्षणा, काठिन्यस्य निन्द्यत्वं ध्वनिः—एवं स्नेहोत्तर'दोष' ('दूषण') शब्दस्यापि गुणे लक्षणा, स्नेहस्य सर्वोत्कर्षो ध्वनिः। ध्वनेरत्यन्ततिरस्कृतवाच्यत्वं ज्ञेयम्। नायिकात्वारोप एव समासोक्त्यलङ्कारः।

---

गुरुजनसंलोपसम्भ्रमेव नायिकाया अभिमतं, तथा स्वदोषक्षालनार्थं प्रयासः इतः अपराध लक्षोऽपि तस्याः कचग्रहं भवतीति कङ्कतिकाव्याजेनाभिधानम्।

(ङ) 'व्याजवाग्विन्यासे'त्येकस्यैव पदस्येति—'स्यादपुः सुन्दरमपि श्वित्रेणैकेन दुर्भगं' इति दीक्षा ध्वनिकाव्यबाधकत्वाद्यो पठितः। एवं 'जनस्थाने भ्रान्तं कनककुरङ्गतृष्णान्वित-धिये'त्यादि भट्टवाचस्पतिमिश्रकृतपद्ये 'भवामि रामत्व'मित्येकमादेव वाच्यप्रयोगादहनित्वं व्याहतम्—नन्वत्र वाच्यपराङ्गतया बाधा, अत्र तु वाच्यप्रपोषकत्वमुखेन। उत्कृष्टौ पद्ये उत्तमोत्तमत्वं ध्वनेर्व्यञ्जकत्वोद्गारतः सम्भवि, तत्र न भूतमिति पठितमाह—उत्तमं जातमिति।

कष्टगम्यं अस्फुटतया क्लेशगम्यमित्यर्थः। यथा—

त्वदभिरमिता द्वितीया जगत्यभूदद्वितीयैव।

अनुमतिरप्यननुमतिस्तिथिरतिथिर्मे निशाप्यनिशा॥ ७

अत्र विरोधाभासेन तव प्रकृतवैकल्यकारिणी काऽपि शक्तिरस्तीति। 'द्वितीया' सपत्नीत्यर्थः, अतो मे मम 'नुमतिः' कलोनचन्द्रा पूर्णिमातिथि-रनुमतिहीना सती 'अतिथि'रागतेत्यर्थः। निशाऽपि मेऽनिशा शाश्वत-प्रभातैवासीदित्यर्थः। पर्यायप्राप्ताऽपि मे पूर्णिमातिथिस्त्वयाऽननुमतिः कृता अनाहूतेति मम जीवनमेव व्यर्थमिति व्यङ्ग्यमस्फुटम्। 'प्रतिपदमङ्ग-मप्रतिपदमुपागता त्वत्प्रभावेणे'ति चेद्भणितेव—प्रतिपदं प्रतिव्यवसायमप्रति-पदमप्रतिपत्तिमङ्गमुपागतेत्यर्थः।

सन्दिग्धप्राधान्यं यथा—

हे भद्र भाद्रपदमासचतुर्थिचन्द्रो!

तुभ्यं नमोऽस्तु न कदापि मयासि दृष्टः।

श्यामेन तेन कतमेन नवेन यूना

साकन्तथापि मम किं प्रथितः प्रवादः (च)॥ ८

त्वदभिरमितेति—अत्र द्वितीयाऽद्वितीया'। 'अनुमति'रननुमतिरिति सर्वत्र शब्द-विरोधमात्रं, तेन विरोधाभासेन तव प्रकृतवैकल्यकारिणी शक्तिरस्तीति परिहासो व्यङ्ग्यः। वाक्यार्थस्तु—द्वितीया मम सपत्न्यद्वितीयाऽभूत्, त्वद्दत्तसौभाग्यादिति भावः। 'कलाहीने साऽनुमति'रित्यभिधाना'दनुमति'पदं कलाहीनचन्द्रयुक्तपूर्णिमाबोधकम्। तथा चागामिन्यां पूर्णिमायां मया सह तव सङ्गोऽवश्यम्भावीति त्वयैव पूर्वं सम्मतिर्दत्ता, अधुना सा मम पूर्णिमा तिथिस्त्वदनुमतिहीना सत्यतिथिस्त्वादप्रातिथिभिन्ना भूत्वाऽगतेत्यर्थः। 'अनिशा'-

(च) सन्दिग्धप्राधान्यमिति—किं तावद्वाच्यं प्रधानमुत व्यङ्ग्यमिति संशयो यत्र नापाक्रियते यथा "हे भद्र" इत्याद्युदाहृते पद्ये। भाद्रचतुर्थीचन्द्रो 'नष्टचन्द्र' इत्यादि लौकिकपरिभाषया गीयतेऽस्माद्देशीयैः—तद्दर्शनापवादनिराकरणार्थं कृष्णचरितसंघटितं स्यमन्तकहरणाख्यानं पुराणवर्णितं श्रूयते, असमर्थपक्षे तत्सूचकं श्लोकमात्रं 'सिंहः प्रसेनमवधी'दित्यादि पठ्यते, जलमध्ये च दृष्टनष्टचन्द्रेण जनेन स्नायते इति च रीतिः। अत्र मूलनः लोकसंस्कारः—स च नैकान्तिको हेतुरिति। गोप्याः विदितकृष्णानुरागायाः समाशङ्कित्य चापलवशमपङ्कानाया नष्टचन्द्रमुद्दिश्य भणनोक्तिः। मम दुरदृष्टविलसित-मेतत् पिशुनैर्जनैर्दविनयनिदर्शनत्वेन ख्याप्यत इत्यहो अकारणनिष्ठुरो भ्रातिवर्गः।

अत्र तव दर्शनेन प्रवादो भवतीत्यनैकान्तिकं, अपि तु तथाविधादृष्टद्वारैवेति । किं वा नायं प्रवादः, सत्यैवेयं किंवदन्ती, यतो भवद्दर्शनमन्तरेणापि जनैश्चेदुद्भूयते—इति सन्दिग्धं प्राधान्यं यस्य । इदं गुणीभूतव्यङ्ग्यमप्यास्वादस्य चमत्कारितया ध्वनिधर्मं भजत इति च कृताऽस्य परिहृतिः (छ) ।

तुल्यप्राधान्यं यथा—

स्मरसमरसमाप्तौ वक्रतां भ्रूरहार्षी-
दजनिषत मृगाक्ष्या वीतलज्जाः कटाक्षाः ।

यदेव लज्जया प्राप्नोतीत्यर्थः । पर्यायप्राप्तेति—स्वकृतनियमप्राप्तेत्यर्थः । प्रतिश्रुतमिति—अवश्यायो निश्चयः । तथाच यस्मिन् यस्मिन् दिवसे त्वया सङ्केतनिश्चयः कृतस्तस्मिन्नेव दिवसे त्वत्प्रभावेनाहमप्रतिपत्तिमुपागतेत्यर्थः ।

ऐकान्तिकं व्यभिचाराभावोऽनैकान्तिकं, तथा च तव दर्शनादेव प्रवादो भवतीति न नियमः, यतो मय्येव तस्य व्यभिचारः, किन्तु प्रवादजनकीभूतादृष्टमेव कारणमिति ध्वनिः । किं वा त्वद्दर्शनादेव प्रवाद इति यथार्थ एव, तथापि त्वद्दर्शनं विना जनैश्चेदुद्भूयते तदा नायं प्रवादः किन्त्वियं किंवदन्ती । सत्येन—यतो मिथ्याप्रवादस्त्वद्दर्शनं विना न भवतीति नियमात्—इत्यपि ध्वनिः सम्भवति । अतो निश्चयाभावाद्गुणीभूतत्वम् ।

मानभङ्गानन्तरं सम्भोगसमयेऽपि मानाभासो वर्त्तते, सम्भोगान्ते सोऽपि नासीत्याह—स्मरसमरेति । अहार्षीत् त्यक्तवान् । मानसमये ये कटाक्षाः कान्तं लक्ष्यीकृत्य प्रवृत्ता आसन् त एवात्र सम्भोगान्ते मानाभासस्याप्यपगमाद्वीतलज्जा अजनिषत—तथाच कान्तं लक्ष्यीकृत्य कटाक्षप्रसारं विदधतीत्यर्थः । भ्रुवोर्वक्रतात्यागे उत्प्रेक्षामाह—कुसुमेषोः

(छ) आस्वादस्येति—'प्रमाणत्वं ध्वनेरेवात्र स्वाभिमं विदुषां मत'मिति लक्षितायाः रसोपलक्षितानुपपत्त्यादेः सन्दिग्धप्राधान्यमयगुणीभूतव्यङ्ग्यत्वेऽपि ध्वनित्वं सम्भवि, रसाद्यास्वादस्यैव कार्यानुसन्धेयकत्वात् । यदाहुर्दर्पणकाराः—'यत्र वस्त्वलङ्काररसरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहार' इति । एवमप्यत्र प्रकाशटीकाकृता चक्रवर्तिभट्टाचार्येण प्रमाणपुरःसरं यत्तदभिधानम्—'काव्यार्थस्यावबोधबुद्धिवैद्यस्य समर्थो भावनाभ्यासवशाद्यो गुणप्रधानभावावभासस्तावन्मात्रमनुभूयते, काव्यान्तरे तु प्रकरणादिपर्यालोचनया भवत्यपि न काव्यव्यपदेशं चाहत्युभीभावस्यास्वादमात्रायत्तत्वादिति' । एवं सति यद्गाम्यगोदाहृतानां पद्यानां सकलकाव्यमध्यगतत्वालोचनप्रसङ्गे यथैकदेशे गुणीभूतत्वं सम्भवेऽपि (कैश्चिदस्यैव काव्यस्येन्दुपचन्द्रोदयादिकाव्येऽस्मिन्नभावाः) न भवत्यत्र गुणीभावाभाव इति निष्कर्षः ।

धनुरिव कुसुमेषोर्ज्याविमुक्तं तदानीं-
छिविशुरिव निषङ्गे मुक्तशेषाः पृषत्काः ॥ ९

अत्रोत्प्रेक्षालङ्कारेणोपमालङ्कारो ध्वनितः—तौ स्वप्राधान्येन स्थिताविति तुल्यप्राधान्यम् ।

काक्वाक्षिप्तं काकाक्षिप्तम् । यथा—

कति न पतितं पादोपान्ते, न चाटु कृतोरितं,
कति न प्रणयः शीर्षो दत्तः, कृता कति न स्तुतिः ।
तदपि न गतं वामे ! वाम्यं, लभस्व कृतार्थतां,
भवतु तव तु प्रेयान्मान्यो, न मानिनि ! माधवः ॥ १०

'न पतितं'मपि तु पतितमेवेति नञ्काक्वाक्षिप्तम् । नेदमचमत्कारि, तथापि

'कति निपतितं पादोपान्ते, कृतं कति चाटु वा,
कति कति मया शीर्षः प्रणयः, कति स्तुतिरीरिता ।'

इति पठनीयम् ।

असमीक्ष्यमसुन्दरम् । यथा—

सुदपुव्वं वि णिआमं हरिणो मुरलीरवं सुणंतीए ।
जप्पंतीए गुरुहि वाचात्थंभो बहुए संवुत्तो (ज) ॥ ११

कन्दर्पस्य धनुर्गुणसमाप्रगन्तरं व्याप्नुतं अतु यथा चक्रतान्यपति । कदाचित्यां लक्षतापि उत्प्रेक्षामाह—कन्दर्पस्य मुक्ताऽवशिष्टा बाणा गुणसमाप्रनन्तरं निषङ्गे तूणे विविशुरिव ।

नञिति—नञ्रूपा या काक्वाऽऽक्षिप्तं 'न पतितमपि' पतितमेवेति वस्तु । नेदमिति—यद्यप्यत्र चमत्कारसद्भावात् परिहारापेक्षा नास्ति तथापि परिहाराभावस्त्वेतामपि पद्यम्—कति निपतितमिति ।

सुदपुव्वमिति—श्रुतपूर्वमपि निकामं हरेर्मुरलीरवं शृण्वन्त्याः । जल्पन्त्या गुरुभिः वाक्स्तम्भो वध्वाः संवृत्तः ॥ 'श्रुतपूर्वमपी'ति पदेन तत्कालीनमुरलीरवस्य सङ्केतजनकत्वरूपं वह्नं बोध्यते । गुरुभयेन सङ्केतस्थले गन्तुमशक्यत्वान्मोहेन वाक्स्तम्भो जातः—

(ज) 'वाणीरकुंजोड्डीणसउणिकोलाहलं सुणंतीए । घरकम्मवावडाए वहूए सीअंति अंगाइं ॥' इति जातिच्छायामुपजीव्य रचितेऽस्मिन्नधिकतरं मनोज्ञत्वनिदानं वर्तत इति निपुणलक्ष्यो प्रतिभाति । तत्र मुरलीरवस्य माङ्गलिकमाकर्णनमेव गरीयान् हेतुः—वैष्णव

अत्र तव दर्शनेन प्रवादो भवतीत्यनैकान्तिकं, अपि तु तथाविधादृष्टद्वारैवेति। किं वा नायं प्रवादः, सत्यैवेयं किंवदन्ती, यतो भवद्दर्शनमन्तरेणापि जनैश्चेदुद्घुष्यते—इति सन्दिग्धं प्राधान्यं यस्य। इदं गुणीभूतव्यङ्ग्यमप्यास्वादस्य चमत्कारितया ध्वनिधर्मं भजत इति व क्वतास्य परिगणितिः (छ)।

तुल्यप्राधान्यं यथा—

स्मरसमरसमाप्तौ वक्रतां भ्रूरहार्षीद्-
दजनिषत मृगाक्ष्या वीतलक्ष्याः कटाक्षाः।

पदेन सम्प्रणया प्राप्तवतीत्यर्थः। मर्य्यादप्राप्तेति—लब्धस्ततनियमप्राप्तेत्यर्थः। प्रतिपद्यव्यवसायमिति—व्यवसायो निश्चयः। तथाच यस्मिन् यस्मिन् दिवसे त्वया सङ्केतनिश्चयः कृतस्तस्मिन्नेव दिवसे त्वत्प्रभावेणाहमप्रतिपत्तिमुपागतेत्यर्थः।

ऐकान्तिकं व्यभिचाराभावोऽनैकान्तिकं, तथा च तव दर्शनादेव प्रवादो भवतीति न नियमः, यतो मय्येव तस्य व्यभिचारः, किन्तु प्रवादजनकीभूतादृष्टमेव कारणमिति ध्वनिः। किं वा त्वद्दर्शनादेव प्रवाद इति यथार्थ एव, तथापि त्वद्दर्शनं विना जनैश्चेदुद्घुष्यते तदा नायं प्रवादः, किन्त्वियं किंवदन्ती। सत्येव—यतो मिथ्याप्रवादस्त्वद्दर्शनं विना न भवतीति नियमात्—इत्यपि ध्वनिः सम्भवति। अतो निश्चयाभावाद्गुणीभूतत्वम्।

मानभङ्गानन्तरं सम्भोगसमयेऽपि मानाभावो वर्त्तते, सम्भोगान्ते सोऽपि नास्तीत्याह—स्मरसमरेति। अहार्षीत् तत्याज। मानसमये ये कटाक्षाः कान्तं लक्ष्यीकृत्य प्रवृत्ता आसन् त एवाद्य सम्भोगान्ते मानाभावस्यापगमाद्वीतलक्ष्या अजनिषत—तथाच कान्तं लक्ष्यीकृत्य कटाक्षशरान्न क्षिपतीत्यर्थः। भ्रुवोर्भ्रमणात्यागे उत्प्रेक्षामाह—कुसुमेषोः

---

(छ) आस्वादस्येति—'प्रमाणवत्त्वेनैवास्य स्वाभिमतं विदुषां मत'मिति लक्षितमाया रसोपलम्भे सहृदयानुभवसिद्धत्वात् सन्दिग्धप्राधान्यगुणीभूतव्यङ्ग्यत्वेऽपि ध्वनित्वं सम्भवि, रसाद्यास्वादस्यैव काव्योत्कर्षकत्वात्। यदाहुर्दर्पणकाराः—'यत्र वस्त्वलङ्काररसादयव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहार' इति। एवमप्यत्र प्रकाशटीकाकृता चण्डीदासपादानां प्रमाणपुरःसरं समन्वयमभिधानम्—'काव्यार्थस्यास्वादप्रवृत्तिवेलायां तन्मयीभावनामास्वादयतां गुणप्रधानभावावभासस्तावन्नानुभूयते, कालान्तरे तु प्रकरणादिपर्यालोचनया भवन्नपि न काव्यव्यपदेशं व्याहन्तुमीष्टे तस्यास्वादमात्रायत्तत्वादिति'। एवं सति चण्डीदासपादानां व्यङ्ग्यभूतानां पदार्थानां सरसकाव्यमध्यागतत्वालोचनप्रसङ्गे चारेकदेशे गुणीभूततया संशयेऽपि (कविदस्येव कवेरेवान्यपद्योदाहरणादिकार्येऽन्तर्भूताः) न चावत् गुणीभावावाप इति निष्कर्षः।

धनुरिव कुसुमेषोर्ज्याविमुक्तं तदायो-

र्विविशुरिव निषङ्गे मुक्तशेषाः पृषत्काः ॥ ९

अत्रोत्प्रेक्षालङ्कारेणोपमालङ्कारो ध्वनितः—तौ समप्राधान्येन स्थिताविति तुल्यप्राधान्यम् ।

काक्वगम्यं काक्वाक्षिप्तम् । तद्यथा—

कति न पतितं पादोपान्ते, न चाटु कतीरितं,

कति न शपथः शीर्ष्णो दत्तः, कृता कति न स्तुतिः ।

तदपि न गतं वाम्ये । वाम्यं, लभस्व सुतार्थतां,

भवतु तव तु प्रेयान्मानो, न मानिनि । माधवः ॥ १०

'न पतित'मपि तु पतितमेवेति नञ्काक्वयाऽऽक्षिप्तम् । नेदमचमत्कारि, तथापि

'कति निपतितं पादोपान्ते, कृतं कति चाटु वा,

कति कति मया शीर्ष्णः शप्तं, कति स्तुतिरीरिता ।'

इति पठनीयम् ।

असमीचीनमसुन्दरम् । तद्यथा—

सुदपुव्वं वि णिआमं हरिणो मुरलीरवं सुणंतीए ।

अप्पतीए गुरुहि वाचात्थंभो बहुए संवुत्तो (ज) ॥ ११

कन्दर्पस्य धनुर्यथा मालाग्रमन्तरं ज्यामुक्तं सत् यथा वक्रतान्यजति । कटाक्षायां लक्ष्यलाभ उत्प्रेक्षामाह—कन्दर्पस्य मुक्तावशिष्टा बाणा पुङ्खमालाग्रमन्तरं निषङ्गे तूणे विविशुरिव ।

नञिति—नञ्रूपया या काक्वयाऽऽक्षिप्तं 'न पतितमपि तु पतितमे'वेति वस्तु । नेदमिति—यद्यप्यत्र चमत्कारसद्भावात् परिवर्त्तनापेक्षा नास्ति तथापि परिवर्त्तनावगत्य र्थे तामपि प्रदर्श्य—कति निपतितमिति ।

सुदपुव्वमिति—श्रुतपूर्वमपि नितान्तं हरेर्मुरलीरवं शृण्वन्त्याः । अल्पन्त्या गुरुभिः वाक्स्तम्भो वध्वाः संवृत्तः ॥ 'श्रुतपूर्वमपी'ति पदेन तत्कालीनमुरलीरवस्य सङ्केतज्ञापक लक्ष्यं व्यङ्ग्यं बोध्यते । गुरुभयेन सङ्केतस्थले गन्तुमशक्यत्वात्क्षोभेण वाक्स्तम्भो जातः—

(ज) 'वाणीरकुंजोड्डीणसउणिकोलाहलं सुणंतीए । घरकम्मवावडाए वहूए सीअंति अंगाइं ॥' इति व्यक्तिच्छायामुपजीव्य रचितऽयमधिकतरं मनोज्ञत्वनिदानं वर्त्तत इति निपुणलक्षणे प्रतिभाति । तत्र मुरलीरवस्य साद्दिकमाकर्णनमेव गरीयान् हेतुः—हेतुश्च

अत्र 'निकामं श्रुतपूर्व्वमपी'ति तत्कालीनमुरलीरवस्य सङ्केतकारित्वं व्यनक्ति । तेन गुरुभिः समं कथयन्त्या वध्वा वाक्स्तम्भो जातः—तत्र गन्तु-मशक्तत्वान्मोहो जात इत्यर्थः । अत्र 'वाक्स्तम्भः संवृत्तः' इति वाच्यार्थ एव चमत्कारी, व्यङ्ग्यार्थस्तु सत्यपि तथा न चमत्करोतीति—इत्यसुन्दरम् । एवमन्येऽपि ।

प्रागुक्तध्वनिसंख्या एभिर्गुणितास्तथाष्टाभिः ।

खयुगर्त्तुवह्निवसवो ध्वनिसाङ्कर्यात् पुनर्द्वेधा ॥ ६० का

मुरलीरवस्य सङ्केतकारित्वरूपव्यङ्ग्यार्थः सत्यपि वाच्यार्थापेक्षया चमत्कारी नैतावो गुणीभूतव्यङ्ग्यत्वम् (६)।

'प्रागुक्तध्वनिसंख्ये'त्यारभ्य 'ध्वनिसाङ्कर्यात् पुनर्द्वेधे'ति सूत्रद्वयम् (भ)। तयोर्व्याख्या-माह—अष्टौ प्रकारा इति पूर्व्वोक्तैः शरेषुयुगखेन्दुभेदैर्ध्वनिभिः सह गुणीभूतव्यङ्ग्यानां

साहित्यनिबन्धमाले मुरलीरवस्य सङ्केतकारित्वेनोद्दीपनविभावतयाऽऽख्यानम्—अत्र तु गोपवधूहृदयहरणकारणान्तरे महति सत्यपि तस्यैव परामर्शः । 'अपुंमीए गुरुहिं'—इति हेतुगर्भविशेषणेन बोधितो हेतुः । वाक्स्तम्भः खलु सात्त्विकभावानामन्यतमः, तेनाशुतृषादेन श्रीकृष्णं प्रत्यनुरागातिशयप्रकटनमेव व्यङ्ग्यं वस्तु, तच्चानुभावेन वाक्स्तम्भरूपेण यथा साधु भवेत् तथा नान्येनोपायेनेति वाच्यार्थस्य चमत्कारातुलतया व्यङ्ग्यार्थस्यागमीभत्वम् । एवमन्यत्रापि चमत्कारह्रास एव गुणीभूतव्यङ्ग्यस्य चिह्नमिति स्थूलतो बोध्यम् । एतविषये तत्रायोजितिनः श्लोकसंग्रहः—

"रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम् ।

अनाथायाः स्तनश्यामाया किं फलं हारसम्पदा ॥"

... ... ... ... ...

"रसभावादितात्पर्य्यमाश्रित्य विनिवेशनम् ।

अलङ्कृतीनां सर्व्वासामलङ्कारत्वसाधकम् ॥"

"ध्वन्यात्मभूते शृङ्गारे समीक्ष्य विनिवेशितः ।

रूपकादिरलङ्कारवर्ग एति यथार्थताम् ॥"

( ध्वन्यालोके द्वितीयोद्द्योते )

(भ) सूत्रद्वयमिति—एककारिकात्मकमभ्युक्तमिति शेषः । ध्वन्यन्तर्गुणसहचरितः गुणी-भूतव्यङ्ग्यानां संख्यासङ्कलनमत्र तत् ज्ञायत एव । तत्र द्वितीयसूत्रस्य परिष्कारव्याख्या

(६) एवं (ख) पुस्तके । अन्येषु सर्व्वेष्वपि पुस्तकेषु 'सत्यपि वाच्यार्थापेक्षया चमत्कारी नास्तीति भिन्नपाठः' इत्यत्र पाठः ।

अष्टौ प्रकारा गुणीभूतव्यङ्ग्यध्वनयः शरेषुयुगखेन्दु-(१०४५५) भेदैर्ध्वनिभिः प्रत्येकमभिसम्बध्यन्ते । तेन खयुगर्त्तुवसुशिवमिता (८३६४०) भवन्ति । एते पुनर्ध्वनिसाङ्कर्येण द्वेधा (१६७२८०) भवन्ति—तेन

व्योमदिङ्नागपक्षार्कहयर्त्तुरजनीकराः ।
गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभिः (ज) ॥ ६१ का

॥ इत्यलङ्कारकौस्तुभे गुणीभूतव्यङ्ग्यनिर्णयो नाम चतुर्थः किरणः ॥

मिलने सति तथा च पूर्वोक्तशरेषुयुगखेन्दुसंख्यानामष्टभिर्भेदैः पूरणे सति खयुगर्त्तुवसुशिवसंख्यका ध्वनयः स्युरित्यर्थः । अथात्र पूर्वोक्तध्वनिभिः सह गुणीभूतव्यङ्ग्यानां संसृष्टेरेक एव भेद उक्तः, त्रिरूपसङ्करात्तु सामान्याकारेणैक एव भेदो विवक्षणीयः, न तु भेदत्रयमित्यभिप्रायेणाह—एत इति । शरेषुयुगखेन्दुभेदानां गुणीभूतव्यङ्ग्यध्वनिभिः साङ्कर्ये सति पुनरपि खयुगर्त्तुवसुशिवसुसंख्यका ध्वनयः स्युरित्यर्थः । दिङ्नागा दिग्हस्तिनोऽष्टौ, अर्कस्य सूर्यस्य हयाः सप्त, ऋतवः षट्, रजनीकरश्चन्द्र एक इति ॥ * * *

---

सैकाकारेण दर्शिता, मूले तु 'ध्वनिसाङ्कर्ये'ति पदस्यार्थप्रकटनार्थं प्रयासो न कृतः । एवमादिषु स्थलेषु गणनाप्रदर्शनं केवलं प्रौढोक्तिमात्रमूलं, न तु तत् सर्वत्रैव सम्भवतीति चास्माभिः प्रागेव प्रदर्शितम् । 'अन्योन्ययोगादेवं स्यात् भेदसङ्ख्यातिभूयसी'ति 'पुनरप्युद्योतते बहुधे'त्याद्यं कथनं निष्कलङ्कमिवेव विदुः ।

(ज) सुधासागरकाराश्च भीमसेनदीक्षितानां मते गुणीभूतव्यङ्ग्यानामेव तावन्निजाख्य-अङ्गाङ्गित्वसहितानां परस्परसंश्लिष्टानां पञ्चचत्वारिंशद्भेदाः (९+८+७+…… ……२+१) । सजातीयविजातीयादिभिर्भेदैः परस्परसंश्लिष्टैः २०२५ (४५×४५) विधाः, तत्र 'सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया' ते ८१०० (४×२०२५) भेदाः सङ्कीर्णाः, ४५ शुद्धाः—साकल्येन गुणीभूतव्यङ्ग्यास्तावत् ८१४५ भेदाः । ध्वनयस्तु शरेषुयुगखेन्दु—(१०४५५) प्रमाणकाः, ते च प्रागेव गणिताः । अतो ध्वनिगुणीभूतव्यङ्ग्यानामुभयेषां परस्परसंयोगात् संसृष्टिसङ्करभेदेन (१०४५५×४×८१४५) ३४,०६,२३,९०० सङ्कीर्णाः काव्यभेदाः सुधासागरे गणिताः । वस्तुतस्त्वयं गणनाप्रकारस्तत्तत्तत्त्वानामङ्गसंयोजनवैदग्धीमात्रस्य यथा प्रकाशकस्तथा न काव्यरसास्वादनिपुणताया इति पूर्वमेवाभिहितमस्माभिः, अतः कृतमत्र तत्प्रपञ्चेन । अत्रैषां काव्यभेदानां 'गुणीभूतव्यङ्ग्यभेदा विज्ञेया सूक्ष्मबुद्धिभि'रिति मूलस्थावान्तरकारिकायां गुणीभूतव्यङ्ग्यकाव्यरूपेण निर्देशो 'प्राधान्येन व्यपदेशा भवन्ती'त्यभियुक्तनीतिमनुसृत्य । तथा च तत्रभवन्तो मम्मटभट्टाः स्वनिबन्धे—'यद्यपि स नास्ति कश्चिद्विषयो यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि

प्राधान्येन व्यपदेशा भवन्तीति कश्चित् केनचिदलङ्कार इति। ननु रसध्वनौ भावध्वनिरवश्यं वाच्यः दीपकतुल्ययोगितादलङ्कारध्वनिरुपमाद्यलङ्कारान्तरम् इति, तथा च कथं प्रधानव्यङ्ग्यभेदमादाय ध्वनित्वं कथमनङ्गीभूतमादाय गुणीभूतव्यङ्ग्यत्वमिति निमित्तद्वयसमावेशादिति नियमनाविरह एकतरत्वकल्पने नास्ति तावद्युक्तिरिति न वाच्यं, यतः प्राधान्यख्यापनमतिशयितचमत्कृतिमत्तयैव भवति। तथा चाङ्गीभूतरसादीनां चमत्कृतत्वातिशय्ये गुणीभूतव्यङ्ग्यत्वं, अङ्गिनस्तथात्वे ध्वनित्वमिति सविदां व्यवहारः। यत्र तु यस्य ध्वनिगुणीभूतव्यङ्ग्ययोरितरेतरसंयोगे व्यङ्ग्यापेक्षया न तथा चमत्कारप्रकारी कश्चिनो यथा तत्राविशिष्टत्वेन व्यङ्ग्यत्वे, स च युक्तिप्रकारः नान्यस्य, अतोऽत्र प्रागेव दर्शितात् योगरूढप्रयोगमर्थाद् 'गुणीभूतव्यङ्ग्य'पदाद् गुणीभूतव्यङ्ग्यत्वमेवायातीति सुप्रतीतं वचः। गुणीभूतव्यङ्ग्यमयं काव्यमत्रिममलङ्कारशोभामाश्रयैव प्रवर्तते, अतो 'रूपकादिमलङ्कारं बाधामापद्यते परं' इति भामहोक्तदिशा तत्र तेषामलङ्काराणां वाच्यतया स्थितिस्तत्तद्व्यङ्ग्ययोः समत्वसाधककल्पेन। इति—

---

## अथ पञ्चमः किरणः ।

अथ 'आत्मा किल रस' इत्युक्तस्य काव्यपुरुषस्यात्मनो रसस्याभिव्यक्ति-लक्षणं भरतमुनिसूत्रं प्रमाणयन्नाह—

'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति वा (क)

Bharata—Natyasastra *Chap* VI.

पूर्वं ध्वनिप्रकरणे रसात्मकध्वनिः काव्यपुरुषस्यात्मत्वेन कथितः अथ तस्य रसस्याभिव्यक्ति, साधारणतस्तस्य लक्षणं ज्ञापकं भरतमुनिसूत्रं प्रमाणयितुमाह—अथेति।

---

(क) भरतोपज्ञं किल रसतत्त्वव्याख्यानमभिप्रपादयन्तो तत्रभवन्त आलङ्कारिका आद्यावेव रसविवेचनप्रसङ्गे तन्मतमेवोदाहरन्ति—अद्यापि सैव पद्धतिः। सूत्रोक्तमतिप्रसिद्ध-मेकमेव सूत्रप्रतीकमुपजीव्य बहुधा वितन्यमानश्चिन्ताप्रवाहो रसशास्त्रस्य व्यापकता-मुपपत्तिं भोगादिकञ्च प्रकाशयतितराम्—तत्र तावदस्य सूत्रस्य विकल्पया उत्पत्तिवादिनां भट्टलोल्लटादीनाम्, अनुमितिवादिनां श्रीशङ्कुकप्रभृतीनां, भुक्तिवादिनां भट्टनायकपुरः-सराणाम्, अभिव्यक्तिवादिनामालङ्कारिकचूडामणीनां श्रीमदाचार्याभिनवगुप्तपादानां राद्धान्ताः प्रकाशकारादीनां ग्रन्थे ग्रन्थ एवालोकनीयाः—न च तेषामतो भूयो प्रपञ्चः। कौस्तुभकारस्तु व्यञ्जनावादिनां दर्पणकारादीनां मतमेवानुसरन्ति यद्यप्येतदिति पूर्वमेवा-वोचाम। तत्र रसस्य काव्यात्मतया तदुद्घाटनप्रसङ्गेन दार्शनिकविचारादिरपि दर्शितो भूयो— तदानीन्तनगौडीयवैष्णवसम्प्रदायिनो रसतत्त्वमाविष्कुर्वाणा बहवः श्रीरूपसनातनादि गोस्वामिपादाः पृथगेव तन्मूलान्निबन्धान्विरचयामासुः, तत्र चार्वाचीनानां शिक्षासूत्रं तत्र एषा रसः सम्भवति न तत्तत्प्रकटनप्रयासः। अपि चालङ्कारशास्त्रस्य येऽत्र रस-स्वरूपात्माभिव्यञ्जकत्वेन न तावन्मुख्यतस्तात्पर्यं किमपि कथनीयम्। भरतनाट्यशास्त्र-ध्वन्यालोक-दशरूपक-रसार्णवसुधाकर-रसगङ्गाधरादिषु बहुषु निबन्धेष्वन्त एव न दार्शनिक-तत्त्वनिरूपणादि लक्ष्यते—सा च प्रथिता प्रयासेनापि वरीवर्तीति। तानेवोपजीव्य विविधप्र-सङ्गेनात्र रसकिरणे व्यालोकयामः। तत्र भावविभावादिपारिभाषिकपदानां लक्षणा-लक्षितार्थो नाट्यशास्त्रे (षष्ठाध्याये सप्तमाध्याये च) निपुणं दर्शितः। "यथा नाना व्यञ्जनौषधिद्रव्यसंयोगाद्रसनिष्पत्तिः........, तथा नानाभावोपगता अपि स्थायिनो

कार्य्यसहकारित्वेन लोके या रसनिष्पत्तिसामग्री सैव-काव्ये नाट्ये च विभावादिव्यपदेशा भवतीति सम्प्रदायः (ख)।—कारणमत्र निमित्तम्। रसादीनां या याः प्रक्रियाः कथिताः, तद्भिन्ना एवात्र ग्रन्थे प्रक्रिया आलङ्कारिकाणामनुरोधेनोक्ताः, अतएव काचित् काचित् प्रक्रिया नात्यन्तविचारसहाऽपि, तथाऽप्यप्राप्तस

---

धर्मस्तस्याश्रनुसरणं दर्पणे, 'आनन्दः सहजस्तस्य (ब्रह्मणः) व्यज्यते च कदाचन। व्यक्तिः सा तस्य चैतन्यचमत्काररसाह्वया।—आद्यस्तस्य विकारो यः सोऽहङ्कार इतीरितः। ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्। अभिमानादतिः सा च परिपोषमुपेयुषी। व्यभिचार्य्यादिसामान्याच्छृङ्गार इति गीयते।' इत्याग्नेये (३३८ अध्याये) रसपर्य्यालोचनप्रसङ्गे। इत्थं दर्शितस्य रसस्यास्वादस्तुलभ आनन्द इति तदुपपादेव तदालोचनप्रसङ्गो मूले ग्रन्थकृता विहितः। ……

(ख) परमार्थतस्त्वखण्ड एक एव रसः, लोके च रसनिष्पत्तिसामग्रीसम्भारस्य स्फुरणेऽपि तदनुप्रसक्तेषां रसोद्बोधकत्वरूपेण न सार्व्वत्रिको बोध इति तु सुप्रतीतं, परं काव्ये दृश्ये श्रव्ये च रसस्य प्रकाशशरीरस्थूपलस्य विशेषणद्वारा तेषां स्वरूपतया बोधोऽप्यपेयते, इति अलङ्कारशास्त्रविदां पन्थाः। इयञ्च प्रक्रिया सामाजिकानां भक्तानान्तदितराणाञ्च रत्यादीन् भावानास्वादाङ्कुरप्रादुर्भावयोग्यानितरां साधयतीति दार्शनिकमतमतिवर्त्तमानाऽव्यवस्यते। रसात्मकस्य वाक्यस्योपलब्धिरेव ब्रह्मसाक्षात्कारघोदरतया वर्ण्यते—सा च साधनादिकल्पनमन्तरेण न सम्पाद्या, अतो नात्र काचिद्विडम्बना। एवमेव वाक्यपदीयकारः स्वनिबन्धे 'शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्। प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते।' रसनिष्पत्तिरिति—परमार्थतो रस एवास्वादाङ्कुरकन्दः, लौकिके तु बोधे षष्ठीसमासकल्पना—यदाहुर्दर्पणकाराः—"यद्यपि रसाभिन्नतया रस,स्यापि न कार्य्यत्वं, तथापि तस्य कादाचित्कतयोपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते" इति। काव्ये नाटके च आलङ्कारिकोपक्रमं विभावादिसंज्ञाकलापकमिति प्रागेव दर्शितमस्माभिः—भक्तिशास्त्रस्य, विशेषतो गौडीयवैष्णवपण्डितमण्डलीमण्डितस्य तस्यालङ्कारिकप्रक्रियादिष्वनुसरणः (*Vide* the article on Bhakti by Sir G Grierson in the Encyclopaedia of Religion and Ethics) न विभिन्नः मंत्र संहितादिः। तथाच भक्तिरसामृतसिन्धौ भक्तेः रसत्वेनालङ्कारिकसरणिमनुसृत्य प्रकाशः श्रीमद्रूपगोस्वामिपादैर्दर्शितः—तद्यथा 'विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः। एषा कृष्णरतिः स्थायिभावो भक्तिरसो भवेत्।" कारणकार्य्येति—एतच्च लौकिकबोधप्रवृत्तिमनुसृत्य—यदुक्तं दर्पणे 'कारणं कार्य्यमप्यरिरूपा अपि हि लोकतः। रसोद्बोधे विभावाद्याः कारणान्येव ते मताः।" तत्त्वसाक्षात्कारस्य ध्यानकषायिरोहणवर्त्मैन नास्वाभाविकम्। (In man as he now exists, intuition is the fringe or *penumbra*

स स्थायी कथ्यते विज्ञैर्विभावस्य पृथक्तया ।
पृथग्विधत्वं यात्येष सामाजिकतया सताम् ॥ ६३ का

सामाजिकतया सतां सामाजिकानामेक एव कश्चिदास्वादाङ्कुरकन्दो मनसः कोऽपि धर्मविशेषः स्थायी । स तु विभावस्योक्तप्रकारैर्विविधविशेषैर्भिद्यते (क) ।

अनुकार्यांशास्तु मनस एव स्थायिनो नानाविधाः । यथा—

शृङ्गारे रतिरुत्साहो वीरे स्याच्छोकविस्मयौ ।
करुणाद्भुतयोर्हासो हास्ये भीतिर्भयानके ॥
जुगुप्सा बीभत्समये क्रोधो रौद्रेऽष्ट नाट्यगाः ॥ ६४ का

असम्प्रयोगविषया सैव प्रीतिर्निगद्यते ॥ ६५ का

सैव चेतोरञ्जकता ।

सखिपत्न्यां पतिसखे द्रौपदीकृष्णयोर्यथा ।

द्वयोः सखीषु सखिषु सैव मैत्री निगद्यते ॥ ६६ का

द्वयोः स्त्रीपुरुषयोः—स्त्रीणां सखीषु, पुरुषाणां सखिषु ।

द्रौपदीकृष्णयोः सख्यं प्रीतिरुच्यते । तथा स्त्रीणां सखीषु परस्परसख्यं मैत्र्युच्यते, एवं पुरुषाणां सखिषु परस्परसख्यं च मैत्र्युच्यते । इयं मैत्री परस्परस्कन्धादिषु हस्तादि-

---

सख्यदास्ययोः, स्वपितोः शिशुरिति वत्सलकरुणयोः, इष्टीनां परदेवतेति शान्तस्य च सम्मतत्वात् । प्रेमाः नव सुलभ्याः । एते द्वादश रसाः सर्वेऽपि शक्ततो विपरिणमनीयाः । प्रेमवत्सलसख्यानां रतौ भावापरसंज्ञदेवताविषयकरतौ चान्तर्भावः सुगमः । इतरेषां परिस्थितौ रत्नापणे कुमारस्वामिना दर्शिता । "चतुर्वर्गमध्ये सर्वप्राणिसुलभस्य कामस्य धर्म्यत्रयपञ्चमत्वात् प्रथमं शृङ्गारः, ततस्तदनुगत्वेन हासः । ततस्तद्विरोधित्वात् करुणः । ततस्तन्निमित्तभूतोऽर्थप्रधानो रौद्रः । ततोऽर्थकामयोर्धर्ममूलत्वाद्धर्मप्रधानो वीरः । तस्य भीताभयप्रदानसारत्वात्तदनन्तरं भयानकः । ततस्तत्कारणभूतो बीभत्सः । वीराभिप्रभयानकाद्यनन्तरं वीररसफलभूतोऽद्भुतः । त्रिवर्गमोक्षकरमानन्तरं मोक्षफलकः शान्त इत्येवसर्वदेहस्य क्रमोपपत्तिः ।" वैष्णवालङ्कारिकवर्यैः श्रीरूपगोस्वामिचरणैरपि ततपूर्वकृतिभिः कल्पितानां द्वादशानां रसानामेकत्वं प्रतिष्ठापितम् । स च भक्तिरसः, रतिरिति बहुलं तद्व्याख्या । 'सा द्वेधा रसज्ञैः परिकीर्तिते'ति सत्त्वसारशान्तादिष्विन्थौ । सख्यशब्दः शान्तप्रीतिप्रेयोवत्सलमधुराख्ये शृङ्गारभेदे, गौणशब्देन इतरेषां वीरहास्यकरुणादीनां संप्राप्तिः । एवमप्युज्ज्वलनीलमण्यादुपक्रमे 'मुख्यरसेषु यः संक्षेपेणोदितो रहस्यत्वात् । पृथगेव भक्तिरसराट् स विस्तरेणोच्यते मधुरः ॥' इत्येकेनाखिलस्य तस्य परामर्शः । 'मुख्यगौणानां, 'दास्यसख्ययो'रेवं पृथक्करणमालङ्कारिकसम्प्रदायविरुद्ध'—यथा काव्यप्रकाशे—'अष्टौ नाट्ये रसाः स्मृताः' इति प्राक्, पश्चात् 'शान्तोऽपि नवमो रस' इति निर्देशः, इहाप्यग्रेऽपि 'इत्यष्टौ रसाः शान्तस्तथा मत' इति शान्तस्य पृथक्तया सूचनम् । अत्र तु नवैर्वैश्यमभिप्रायाभिधानमेतदिति केचित् । न वस्तुतिरमित्युक्तमेवेह प्राक् । नाशुकार्यगतो रसः, अपि तु रस आत्मगत इत्यतो द्वयोः अग्रे च कार्ये समानसंख्यका एव रसाः—अतो मते द्वयोः अग्येऽपीति प्रतीकम् ।

(छ) रतिरेव सर्वमाक्रम्य तिष्ठति—अस्या एव रतेः शान्तप्रीत्यादिना पञ्चधा मुख्यत्वेन कथनं, वीरहास्यादिसप्तधा गौणत्वेनापि निर्देशः । रतेरित्थं भेदात्तत्प्रपञ्चस्तु नीलमण्यादिषु ग्रन्थेषु सूचितास्तत्रैव तत् द्रष्टव्यम् ।

**मनोवृत्तिमयी प्रीतिर्म्मैत्री स्पर्शादिकोचिता।**

**निर्व्विकारा सदैकाभा सा सौहार्द्दमितीर्य्यते ॥(ग)॥६७का**

सदैकाभा सदैकरूपा सा चेतोरञ्जकता सौहार्द्दम्—सा च स्त्रीसखीना पतिसखीनाञ्च परस्परविषया।

स्पर्शकर्म्माद्युचिता भवति स्त्रीणां परस्परयथेष्टस्पर्शादिव्यवहारे दोषो नास्ति—एवं पुरुषाणामपि ज्ञेयम्। प्रीतिसौहार्द्दाभ्यामेतादृशविशेषो मैत्र्यां ज्ञेय,—अत तत्र स्त्रीपुरुष सखेः स्वच्छन्दस्पर्शानौचित्यात स्त्रीसखीनां स्त्रीणां पतिसखीनां पुरुषाणाञ्च परस्पर-विषया। निर्व्विकारेति—स्त्रीपुरुषयोः परस्परस्पर्शनेऽपि विकाररहितेत्यर्थः।

नतु श्रीकृष्णस्य देवोत्तमत्वेन सर्व्वव्यापकत्वादिस्वरूपत्वेन स्तवकर्त्तुर्भक्तस्य च, स्थायी च, (5) सम्प्रयोगाविषयत्वाभावान्न रतिशब्दवाच्य किन्तु तस्य स्थायिनो 'भाव इति स्वतन्त्रसंज्ञा

---

'विस्रम्भो मिथो लीलाविलासेन हि यत सुखम्।
न तथा सम्प्रयोगेन स्यादेवं रसिका विदुः॥

इत्येवं सम्प्रयोगविषयाया स्त्रीजनालम्बनाया पुरुषालम्बनायाश्च रते स्तुति, श्रीरूपगोस्वामि चरणानां ग्रन्थे।

(ग) आन्तर भावरूपत्वेन वर्त्तमानाया अपि रतेर्ब्बहिरभिव्यक्तितो व्यक्तिसौचिता। अस्याश्चैव लक्षितया प्रीतेर्म्मनोवृत्तिमयत्वकथनम्। मैत्र्यास्तु स्पर्शादिवाह्याभिव्यक्तिमत्त्व, सौहार्द्दे त्वपरिवर्त्तनशीलत्वमेव मुख्य लिङ्ग', विश्वासो मित्रभावस्य मुख्य' इतिविधमीरितम्। अस्या अत्र वैष्णवशास्त्रदर्शितपद्धत्या आलम्बनभेदेन विभाग, विस्तरस्तु भक्तिरसामृतसिन्ध्वादौ द्रष्टव्य। एषु भेदेषु केषित कामानुगाया भक्तेर्बिम्बानुबिम्बभूता', केषन सम्बन्धरूपायाः, इत्यादिविचारस्तु नात्र कृत। भावः—एष शब्दोऽविशुद्धविभाहात्म्यात्मकाभावा व्याप्तिम इत्यन्यत्र लक्षितश्च—

'शुद्धसत्त्वविशेषात्मा प्रेमसूर्य्यांशुसाम्यभाक्।
रुचिभिश्चित्तमासृण्यकृदसौ भाव उच्यते॥ (भावभक्तिलहर्य्याम्)

मैत्रीसख्ययोर्भेदो दर्शित श्रीमद्रूपगोस्वामिचरणैः लक्षणप्रदर्शनच्छलेन यथा—

'भावश्चै प्रोच्यते मैत्र विस्रम्भो विनयान्वित॥'

'विस्रम्भः साध्वसोन्मुक्तः सख्यं स्ववशतामय॥'

रतौ प्रीतिस्तु न तथा, रामस्य विभावो विलासो विस्तारश्च वर्त्तते। कृष्णार्ज्जुनयो सौहार्द्द'—श्रीकृष्णार्ज्जुनविषयो प्रीती रतिर्वा।

---

(5) एतदेव सार्व्वत्रिक पाठः। 'रतिशब्दवाच्य इति प्रयुक्ते नाकाङ्क्षापर्य्यवसानतया साधु स्यात्।

**सैव देवादिविषया रतिर्भावस्स कथ्यते ॥ ६८ का**

सैव चेतोरञ्जकता — आदिशब्दाद्गुरुप्रभृतिषु ।

**या सम्प्रयोगविषया साऽप्यवस्थाविशेषतः ।**

**पाकात् पाकान्तरं प्राप्य चरमे पर्य्यवस्यति ॥ (न) ६९ का**

भावमाह—सैवेति । देवः श्रीकृष्णस्तस्य देवत्वसर्व्वव्यापकत्वादिरूपेण या चेतोरञ्जकता सैव भावः—अयमेव भक्तिरसो भवतीत्यग्रे वक्ष्यति (म)। किन्त्वत्र भावरूपस्थायी सम्प्रयोगविषया या रतिस्तस्याः परिणामरूपो यो भावस्तस्याङ्गिन एव ज्ञेयः ।

अवस्थाविशेष इति—रत्युत्तरश्रवणकीर्त्तनादिभजनानां पौनःपुन्येन जातो यो रतेरुत्कर्षरूपावस्थाविशेषस्तं प्राप्येत्यर्थः, सा, रतिरुत्कर्षदशां प्राप्य प्रथमपाकाद्भावरूपेण

---

(म) भक्तिरसो भविष्यतीति—एतच्च सम्प्रदायिमतानुसारेण—अलङ्कारनिबन्धे भक्तिरसस्य रतित्वेन भावतया वा निर्व्वाहो नातिदुःसाध इति पूर्व्वमेवावोचाम ।

"अन्याभिलाषिताशून्यं ज्ञानकर्म्माद्यनावृतम् ।
आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा ।"

सा च भक्तिर्न सामाजिकमात्रहृदयस्पर्शिनी, अतोऽलङ्कारशास्त्रे तमनुलक्ष्य भेदादिकल्पनं न यथार्थम् । कविकर्णपूरगोस्वामिपादास्तु कश्चिदुभयमतसामञ्जस्यसाधनमिच्छन्तः स्वकीयमतगाते अथामञ्जस्यं जटिलतामानयन्ति । यो भावोऽत्र रतेर्भेदत्वेनोक्तः स पश्चादङ्गित्वेन गण्यत इति नातिसुन्दरं समाधानम् ।

(न) सर्व्वे एव भावा यथोक्तविवर्त्तभेदाः—चरमे विवर्त्ते महाभावस्य विलासः ।

'शृङ्गाररससर्व्वस्वं शिखिपुच्छविभूषणम् ।
अङ्गीकृतनराकारमाश्रये भुवनाश्रयम् ॥'

इति लीलाशुकोक्तौ सैव परिणतिरुपभोग्या । रसस्याभिव्यक्तेः परां काष्ठामालम्ब्योक्तं रससर्व्वस्वे श्रीमद्भागवते प्रथमे—

'निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयं मुहुरहो रसिका भुवि भावुकाः ॥"

'प्रेम'पदेन साधारण्येन परिचिताया अस्या रतेः प्रकर्षतारतम्यात् क्वचित् संज्ञान्तराण्यपि प्रदर्श्यन्ते, ते चेत्थं निर्दिष्टा नीलमणौ—

"इयमेव रतिः प्रौढा महाभावदशां व्रजेत् ।
या मृग्या स्याद्विमुक्तानां भक्तानाञ्च वरीयसाम् ॥
स्यादृढेयं रतिः प्रेमा प्रोद्यन्स्नेहः क्रमादयम् ।
स्यान्मानः प्रणयो रागोऽनुरागो भाव इत्यपि ॥

चरमे पाके यतः पाकान्तरं नास्ति, यथेक्षुरसः सितोपलापाकावधिः।

यदुक्तम्—

"यथेक्षूणां रसो श्यामः पाकात् पाकान्तरैर्गुड़ः।
गुड़ोऽपि पाकतः पाके चरमे स्यात् सितोपला॥ Anantadasas Rasa-sudhakara (?)
तथा रतिर्भावपूर्व्वरागरागाख्यपाकतः।
अनुरागः स प्रणयप्रेमभ्यां पाकमागतः।
स्नेहपाकमयो याति महारागोऽयमुच्यते॥"

Sahityadarpana Chap III 'निर्व्विकारात्मके चित्ते भावः प्रथमविक्रिये'त्युक्ते रतेः प्रथमः पाको भावः।

कोऽसौ रसो यस्याभिव्यक्तये विभावादीनां कारणत्वमित्यपेक्षायां(6) तत्स्वरूपमाह—

परिणतो भवति। अत्र पाकस्तु भजनस्य पौनःपुन्यमेव ज्ञेयम्। तत्र दृष्टान्तो यथेति—श्यामोऽपक्व इक्षुरसः पाकात् पाकान्तरैः पाकपौनःपुन्येन गुडो भवति, यथा च गुड एव पाकपौनःपुन्येन खण्डो भवति, तथा भावोऽपि भजनपौनःपुन्येन रत्यपेक्षयोत्कर्षदशां प्राप्य पूर्व्वरागो भवति, एवं क्रमेणोत्कर्षस्य परमकाष्ठाऽऽपन्नो महाराग आनन्दस्य परमावधिरूपः—एतादृशो महारागो गोपीनामेव, नान्येषां भक्तानाम्, अतएव 'सख्ये त्वा चैव परमात्मनि रूढ़भाव' इत्युक्तवता उद्धवेनाप्यस्यैव रूढ़भावत्वेनोत्कर्षः कृतः। एवम् 'आसामहो चरणरेणुजुषामहं स्या'मिति पद्येन गोपीनामेव चरणधूलिप्राप्तौ स्वजन्माकाङ्क्षा कृता, न तु कस्यापि रुक्मिणीलक्ष्मीप्रभृतीनां, कुत्रापि प्राप्तेरदृष्टत्वात्। सितोपलेति—'मिछ्' इति प्रसिद्धाया मत्स्यण्डिकायाश्चरमपाकाज्जातः कश्चिदपूर्व्वपदार्थविशेषः पश्चिमदेशे प्रसिद्धः। निर्व्विकारेति—विकारोऽत्र विषयेऽत्यासक्तिः, तद्रहिते चित्त इत्यर्थः।

---

बीजमिक्षुः स च रसः स गुडः खण्ड एव सः।
स शर्करा सिता सा च सा यथा स्यात् सितोपला।
अतः प्रेमविलासाः स्युर्भावाः स्नेहादयस्तु षट्।
प्रायो व्यवह्रियन्तेऽमी प्रेमशब्देन सूरिभिः॥"

विस्तरस्तत्रैव द्रष्टव्यः। रसार्णवसुधाकरे त्वयमर्थ उपमानान्तरेण सूचितः—प्रेमविलासानाञ्च सर्व्वेषां तत्र चात्रैव यथाक्रममेकैकेन संज्ञापरिपाटी। तथा च—

अङ्कुरपल्लवकलिकाप्रसूनफलभोगभागियं क्रमशः।
प्रेमा मानः प्रणयः स्नेहो रागोऽनुराग इत्युक्तः॥

---

6) एवं (ख) पुस्तके पाठः। अन्यत्र सर्व्वमपि पुस्तकेषु 'कारणत्वमित्यपेक्षया' इति पाठः।

बहिरन्तःकरणयोर्व्यापारान्तररोधकम्।
स्वकारणादिसंश्लेषि चमत्कारि सुखं रसः॥ ७० का

अयन्तूत्तमप्रकृतीनामनुकार्य्याणां स्वतःसिद्ध एव (ट), काव्यादौ तु

अथ रससाक्षात्कारे परिपाटी यथा—आदौ श्रवणकीर्त्तनादिभजनानां पौनःपुन्यादानन्दरूपाया रतेराविर्भावः, तदनन्तरं विभावादिसमवधानदशायां रतेः साक्षात्कारः, तदनन्तरं रतिरेव रसरूपा भवति, तदनन्तरं पुनस्तैरेव विभावादिभिः करणै रससाक्षात्कारः। एवं सति रतिसाक्षात्कारे यादृशानन्दाविर्भावस्तस्मादपि कोटिगुणितानन्दाविर्भावो रससाक्षात्कारे, एतदेवाह—बहिरिति। सम्प्रति रतिसाक्षात्कारे यादृशसुखानुभवः, एवं पूर्व्वस्मिन्ननेकपदार्थविषयका (7) ये ये सुखानुभवा आसन्, तेभ्यः सर्व्वेभ्यः सकाशात् कोटिकोटिगुणाधिको यो रसदशायामानन्दानुभवस्तस्माज्जातो यश्चमत्कारस्तद्विशिष्टं सुखं रसं इति रसलक्षणम्। अथ कोऽसौ चमत्कार इत्याकाङ्क्षायामाह—यथा बहिर्व्वस्तूनामनेकेषां मध्ये कस्यचित् सर्व्वोत्कृष्टाद्भुतवस्तुनो दर्शनामेवास्य चमत्कारो जायते, तत्र चमत्कारपदार्थो नेत्रस्य स्फारताक्रूपः, तथैवानाप्यन्तर्व्वस्तूनां मध्ये रसतादशायां कस्यचिदद्भुतसुखस्यानुभवान्मानस चित्तस्य स्फारतैव चमत्कारः। चमत्कारि सुखं कीदृशं भवेदित्यपेक्षायां विशेषणमाह—बहिरिति। रसस्योदयदशायां बहिरिन्द्रियाणामन्तरिन्द्रियाणाञ्च रसानुपयोगिपदार्थेमात्रे यो वृत्तिरूपो व्यापारस्तस्य रोधकं प्रतिबन्धकमित्यर्थः।—तथा च रससाक्षात्कारे कारणीभूतविभावादेरभानं, न तु तदानीमिन्द्रियाणां पदार्थान्तरस्य ज्ञानजनने सामर्थ्यमस्तीति भावः। तदेव पुनर्व्विशेषणान्तरेणाह—स्वकारणेति। स्वकारणादि विभावादि, (8) तस्य संश्लेषि,—तथा च विभावादिवशितस्यैव रसस्य साक्षात्कारो जायत इत्यर्थः। यथैकमेव दधि वस्तु सितामरिचकर्पूरादिनानावस्तुमिलितं सद्रसालाख्यं भवति, तस्यास्वादनकाले चित्तस्य प्रथमो भवति, तथैत्यर्थः।

अयन्त्विति—अयं रस उत्तमप्रकृतीनामप्राकृतानामनुकार्य्याणां भक्तानाम्। ननु

---

(ट) रसस्य स्वरूपनिर्णयं तटस्थलक्षणञ्च दर्शितं टीकाकृतानास्वादस्वभावरूपेण विशेषणप्रपञ्चनेन च। एवंविधेषु व्यत्येषुपमानदारा विशदीकरणं विना नान्या गतिः—सैव टीकायां दर्शिता। 'रसे सारश्चमत्कार' इति चमत्कारस्यैव प्राधान्यम्। दर्पणादिषु निरन्येऽस्यैव 'अलौकिकचमत्कारप्राणः केश्चित् प्रमातृभिः। स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥' इत्यादि वाक्येन परामर्शो विहितः। चमत्कारीति—चमत्कारस्याप्राकृततैव बोधयित्री।

---

(7) एषोऽपि सार्व्वत्रिक पाठः। स च 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ'विति न्यायेन समाधेयः।

(8) एव (ग) (ख) पुस्तकयोः। अन्यत्र 'सकारणं विभावादि' इति पाठः।

प्राकृताप्राकृताभासभेदादेष त्रिधा मतः ॥ ७२ का

एष रसः प्राकृतो लौकिको मालतीमाधवादिनिष्ठः, अप्राकृतः श्रीकृष्णराधाऽऽदिनिष्ठः । आभासस्त्वनौचित्यादिप्रवर्त्तितः । स चाभासस्त्रिविधः प्रसिद्धकृत्रिमसिद्धभेदात् । आद्यः प्राक् प्रसिद्धिमात्रोपहतः, न तु सम्पत्स्यमानः; स च रसाभासो भवन्नपि रसपोषकः—यथा नन्दनसम्बन्धप्रसिद्धो मालत्या माधवे रतिपुष्टिरिति प्राकृते, अप्राकृते तु शिशुपालसम्बन्ध-

प्राकृतेति—प्राकृते रस एव नास्ति (८), तदपि यत्त्रैविध्यमुक्तं तत् परमतानुसारेणेति ज्ञेयम् । प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एव;—यतोऽत्र क्रिमिविड्भस्मान्तनिष्ठेषु प्राकृतनायकेष्वतिनश्वरेषु रसो न भवति, विचारतो विभाववैरूप्यात्तद्विपरीतं दुःखमयं वैरस्यमेवोत्पद्यते, तत्रैव रसं वर्णयन्तीत्यर्थः । अतएव ग्रन्थकारेणापि प्राकृतविषय एकमपि पद्यं नोदाहृतं, किन्त्वप्राकृत एव सर्वाण्यपि पद्यान्युदाहृतानीति ज्ञेयम् । प्रसिद्धेति—रुक्मिण्या सह शिशुपालस्य सम्बन्धो लोकानां प्रसिद्धिमात्रेणैवोपहतः भ्रान्तानां प्रतीतिविषयः, न तु सम्पत्स्यमानः—स सम्बन्धो न तु सम्पन्नो भविष्यतीत्यर्थः । अतः शिशुपालस्य रुक्मिण्यां रतौ रसाभास एव । एवं परोढ़रमणीषु पुरुषस्य रतिरपि रसाभास एव, प्राकृतविषयत्वात् ।

---

यद्रसानामष्टधा विभागः कृतस्तदनुभावादिवैचित्र्यप्रकाशकत्वात् प्रत्यक्षमवस्थानुकार्यायां नायकादीनां बहुत्वमनुसृत्य, न तु रसस्वरूपस्यानन्दस्यैकत्वेनतया वा भेदेन । रसास्वादिनामनुभवसाक्षिकानन्दस्य तदानीं वेद्यान्तरसम्पर्कशून्यत्वेनालौकिकत्वमनुकारकतया च न भेदकल्पना सम्भवतीति तत्त्वम् । प्रकाशदर्पणकृदादयो वाढ़मेतन्मतपोषका अपि मामांसिकानामेक एव रस इति न स्फुटमभिदधति । तत्रेदमपि तदभिप्रायविलसितं सम्भवि यत्र खलु सर्व्वेषां रसानामानन्दमात्रा आनन्दप्रकर्षनिर्षेका, बीभत्सजुगुप्साऽऽदिषु शृङ्गारकरुणादिष उपलब्धेः पृथक्कृत्य निर्णेतुमशक्यत्वात् । वयन्तु सम्भावनामप्येतादृशीं न बहु मन्यामहे, कारणञ्च तत्र प्राक् प्रदर्शितमेव । न खलु बहिरावेष्टनभेदेन आन्तरानन्दस्य स्वरूपभेदः कल्प्यः;—एवमप्याधुनिकाः प्रतीच्याः काव्यतत्त्वविदः । (Cf. the views of B. Croce, Spingarn, Henderson and others).

(८) प्राकृते रस एव नास्तीति हि सम्प्रदायविदः, तन्मते श्रीकृष्ण एव रसः सम्भवी, भक्तिरसिकेषु प्राकृतजने । मतमेतदालङ्कारिकमतानुसारि नेति टीकाकृतैव सूचितम्—वस्तुतस्तु रसास्वादिनो मन्यन्ते प्राकृते रससत्त्वमपह्नोतुं न प्रभवन्तीति सर्व्वैर्मन्यत एव—तथापि स्वसम्प्रदायमतरक्षणमिषेण चातुरीविजृम्भणम् । सान्तानां जीवानामनन्तमात्रानं सदैव जागर्त्ति यदैव तं रसास्वादलाभमानन्दरूपमश्नुते, अतः कथमेषामनधिकारः

प्रसिद्धो श्रीराधिकायाः श्रीकृष्णे रतिपुष्टिः । क्वचित्तु नन्दनं प्रति मालती-वेशधारिणो मकरन्दस्य काम्यप्रकटनादिः । मिश्रस्त्वनौचित्यप्रवर्त्तित एव—अनौचित्यञ्चैकस्या अनेककान्तनिष्ठत्वम् (ष) ; यदुक्तम्—

---

श्रुतस्थानवसर इति प्राकृतानामस्माकं न ज्ञानगोचरम् । यत्तु ग्रन्थकारेण प्राकृतविषय एकमपि पद्यं नोदाहृतमिति मत्वा तस्य प्राकृते रसाभासत्वकक्ष्यपक्षाङ्गीकरणं न तत् सम्यक्, अपि तु वैराग्योमात्रमेव—यतोऽत्र ग्रन्थे श्रीकृष्णलीलान्तस्तमेव वर्णनीयमुराहरणमुक्तमेतेति ग्रन्थकृतो हृद्गतो भावः—अतोऽत्र प्राकृतचरितवर्णनमप्रासङ्गिकमित्येव तस्य वर्जनं, न तु कारणान्तरेणेति । प्राकृताश्रयस्य रसस्य सत्तामपह्नुवतां वैष्णवालङ्कारिकाणामियं हि शैली—यत्र प्राकृतचरितमुपजीव्य इतरेषामालङ्कारिकाणां मते रसो वर्त्तते, तत्र वैष्णवानां मते रसता न जातु सम्भवति । यत्र तु परोढ़रमणीरतिस्थले वैष्णवानां मते रसस्येतरथवच्छिन्ना सत्ता, तत्रालङ्कारिकचक्रवर्त्तिन इतरे रसस्याभासत्वेन स्थितिमुपपादयन्ति । प्राकृते रसविरुतिमिममसमाभानां रीतिर्युक्तिचानन्दचन्द्रिकायामित्थं लक्षिता—'ननु तर्ह्यनुकरणं प्राकृतनायिकासु रमयन्तोमालत्यादिष्वयामिति चेदिष्टापत्तिरेव । 'रसो वै सः" 'रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती'त्यादिश्रुतिप्रतिपादितस्य साक्षाच्चिदानन्दघनस्य रसस्य विहृतिभेदादिभिरप्राकृतोर्भगवत्प्रेयसोरालम्ब्येव सत्ता । तत्र सहृद्भिः कविभिर्यदि प्राकृतादिषु पिपिसाव्युच्चिन्तामरणादिमतीषु स्थाप्य स रसः पर्य्यापयिष्यते, तर्हि वयं किं कुर्म्मः? तथा हुक्तं रसमस्याख्यायाम् (भागवते १।१।१)—'तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत् सूरयः । तेजोवारिमृदां यथा विनिमय' इति । य आद्यस्य रसस्य ब्रह्म तत्त्व-मादिकवये भरताय तेने । यत्र रसतत्त्वे कवयः काव्यकृतो मुह्यन्ति, अमेयालम्ब्येऽपि प्राकृतरसलक्षणस्य सङ्क्रमणात् । .."इत्यादि । कविकर्णपूरचरणास्तु प्राकृतेऽप्याश्रये रसस्य सत्तामितरालङ्कारिका इव स्वीकुर्वन्ति, परं तेषामपि मतेऽप्राकृताश्रय एव मुख्यो रसः । टीकाकृतो गोस्वामिचक्रधुरीणा एतदपि न सहन्ते, 'प्राकृते ये रसं मन्यन्ते ते भ्रान्ता एवे'त्यादि कटाक्षेण सूचयन्तः स्वमाध्वं मतशाठ्यमेव वाञ्छन्ति । अप्राकृताश्रयस्य रसस्याभासतापक्षस्तु वयमितरत्रालोचयिष्यामः । 'प्राकृते रस एव नास्ती'ति तु मोक्ष-प्रेमभास्पाशनं भक्तिशास्त्रव्याख्याने यथाकथञ्चित् औचित्यमावहतु, न तु कान्तासम्मिततया उपदेशयुक्ते काव्ये तदाश्रितामलङ्कारिकवचःप्रपञ्चे च तस्योपयोगः । अतेदमवधेयम्—ध्वनि-मात्रस्वरूपे रसे प्राकृताश्रयतापक्षस्त्वीश्वरादुत्तरकक्षामधिरोहद्भिराकर्त्तुं शक्य एव, इति वैष्णवगोस्वामिमतस्याभ्रान्तताऽस्तु व्यवहारिके प्रपञ्चरूपे न तस्य प्रवृत्तिर्यतान् प्राकृताश्रितानि कालिदासादिकृतकाव्यानि अत्यादरिणो विधानेऽप्यसं तस्य सम्यक्परिग्रहेण ।

(ष) अनौचित्यम्—'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवित'मित्यौचित्यमेव प्राक् सर्व्वत्र गण्यते । पश्चात्तनरसङ्कर्णपुरुषानुग्रामिर्भ्यां न कदापि कान्तासम्मितयोपदेश

'यद्यप्ययं रसाभासः परोढ़रमणीरतिः । Rasasudhakara ?

तथापि ध्वनिवैशिष्ट्यादुत्तमं काव्यमेव तत् ॥' इति

तथापि 'रसो भावस्तदाभासो भावशान्त्यादिरक्रमः' (२५ का)

इत्याद्युक्तदिशा 'आभासोऽपि चमत्कारदशायां ध्वनिभाग् भवेत्' इति ध्वनिमर्य्यादयैवोत्तमकाव्यत्व', न त्वनौचित्यरीत्या—इति प्राकृते, अप्राकृते तु परोढ़रमणीरतिरेव सर्व्वोत्तमतया भूयसी श्रूयते, न तस्या अनौचित्य-प्रवर्त्तित्वम्, अलौकिकत्वसिद्धेर्भूषणमेव न तु दूषणमिति न्यायात्, तर्क्कागोचर-त्वाच्च (त)। तथा च—

सर्व्वोत्तमतयेति—शान्तिप्रभृतिपञ्चविधरतीनां मध्ये शृङ्गाररतिः सर्व्वोत्तमा। सा च रतिर्द्विविधा—स्वकीया रुक्मिण्यादिनिष्ठा, परकीया व्रजसुन्दरीनिष्ठा च। तयोर्मध्ये परोढ़रमणी श्रीव्रजसुन्दरी तन्निष्ठा रतिः सर्व्वोत्तमेत्यर्थः। भूयसीति—सर्व्ववेदेतिहास-पुराणादीनां सारभूते श्रीभागवते भगवतैवोक्तं 'न पारयेऽहं'मित्यादौ 'या मा भजन् दुर्ज्जरगेहशृङ्खलाः संवृश्च्य' इत्यादि—तत्रैव श्रीउद्धवेनाप्युक्तं 'या दुस्त्यजं स्वजन-मार्य्यपथञ्च हित्वे'त्यादि। उज्ज्वलनीलमणौ श्रीमद्रूपगोस्वामिभिरप्युक्तम्—'अत्रैव परमोत्कर्षः शृङ्गारस्य प्रतिष्ठित' इत्यादौ। महानुभावानां ग्रन्थसम्पदाद्यादौ परकीया सर्व्वोत्तमोत्तमतया श्रूयत इत्यर्थः।

---

योनित्वं स्वाभाविकम्—प्राकृत एवेदम्, अप्राकृते तु सकललौकिकसीमामतिक्रम्याने परमपुरुषे न काऽपि नित्यानित्यताचिन्ता। अन्यत्र त्वेष विचारो न निहितः—अत्र न प्रदायमता-विष्कारकल्पनामाकाङ्क्ष्य स निपुणं समाहितः। आभासस्य भेदप्रदर्शनमप्यस्य ग्रन्थकृत आलङ्कारिकमतमानमनुगमने निर्भयं प्रकटयतितराम्। 'सिद्ध' रसाभासं विनाऽन्ये भेदा एतैरपरालङ्कारिकैस्तथा समं स्वीकृताः। 'सिद्ध'रसाभासस्यात्र वैष्णवमतप्रणालीमनुकृत्य चरमरसत्वे स्थापनप्रयासः स्वमतप्रदायमतं प्रति भक्तिकल्पनाकौतुकमुपपादयति। न चैवंकथने स्वमतविरोध औदासीन्यं वा हेतुः, यतश्चमत्कारलक्षणेन काव्यस्योत्कर्षस्थापना आभासस्यापि मुख्यत्वेन विपरिणतिर्भ्रान्त्यन्तदूषणीया। कृत्रिमो रसाभासः निसर्गप्रेमवती गोपसुभ्रुवां गोकुलनन्दनस्य च पक्षे न कल्प्य इति न तस्य तत्र उद्देशे निर्देशः।

(त) परोढ़रमण्योरतौ रसो नु, अपि तु रसाभास एवेति सम्प्रदायविदामालङ्कारिकाणां राद्धान्तः—'परोढां वर्जयित्वाऽत्र वेश्यां चाननुरागिणीम्। आलम्बनं नायिकाः स्यु'रिति दर्पणकृदुक्तेः, 'एकत्रैवानुरागश्च तिर्यङ्म्लेच्छगतोऽपि च। योषितो बहुसक्तिश्चेद्रसाभास-स्त्रिधा मत' इति प्रतापरुद्रियमतस्थितेश्च। एवमपरन्त्राचीनाः सर्व्वे कण्ठाभरण-कृद्भोजाद्याः, रसशास्त्रविशारदा बहवो वदमङ्गभाग्देशादयश्च। परोढ़रमण्योरतौ रस एव

'अलौकिकाश्च ये भावा न तांस्तर्केण योजयेत्।' इति च। Mahabharata—Udyoga-Parvan

व्रजवधूनां कृष्णैकतानमानसत्वेन स्वपतिनिष्ठत्वाभावात्तेषाञ्च माया-कल्पिततच्छायाऽनुशीलनेन तदङ्गसङ्गमात् प्रत्युत केवलानुरागमात्रोपाधितया चेतोरञ्जकतया शुद्धत्वमेव।

---

न रसाभास इति वैष्णवालङ्कारिका भक्तिमार्गाचारिणः श्रीमद्रूपगोस्वामिप्रभृतयः। कौस्तुभकृता रसाभासो भवन्नप्ययं रसपोषक इति सुचिन्तितं स्वसम्मोहितं प्रकाशयन्नपि स्वसम्प्रदायमतवादेन द्राक् निर्बन्धवानिव प्रतीयते। परोढरमण्योरत्याश्रयं काव्यमुत्तमं काव्यमेवेत्यत्र तु न विभिन्नमतावलम्बिनोरप्येतयोः काऽपि विप्रतिपत्तिः—ध्वनिवैशिष्ट्यमेव कारणत्वेनोपन्यस्य उभयैरपि तैः गाथासप्तशती-अमरुशतक-शृङ्गारशतक-पद्यावल्यादि-स्थितानां पद्यानां सत्काव्यत्वेनाङ्गीकृतत्वात्। अप्राकृतविषयकपरोढरमण्योरतिपक्षे च नास्माकं रसोऽयं रसाभासो वेति निर्बन्धातिशयः, यतः सकलसहृदयहृदयाह्लादकारिणि रसनिर्यासस्वादार्थमवतारिणि वाचामगोचरे 'कृष्णस्तु भगवान् स्वयम्'इति भागवत-संहितोदिते किमनेनालोकप्रपञ्चकल्पिते इव न्यायविचारशौण्डेन। धन्यमन्यजीवनानां गोपाङ्गनानां भगवता श्रीकृष्णेन सह 'वृन्दारण्ये विहरता सदा रासादिविभ्रमैः। हरिणा व्रजनारीणां विरहोऽस्ति न कर्हिचित्॥' इति स्कन्दपुराणीयोपदेशात्तादृशानां नित्यसम्बन्धत्वं, "कात्यायनि महामाये महायोगिन्यधीश्वरि। नन्दगोपसुतं देवि पतिं मे कुरु ते नमः॥" इति सङ्कल्पनापेक्षया गोकुलकुमारिकाः। तास्वेव कियतीनाञ्च पतिभावो दृढोऽभूत्।'... इति, 'मान्यमंशोऽस्य स्वीकारात् स्वीयात्वमिह वस्तुतः॥' इति च भक्तानामभिधानात् 'याताबला व्रजं सिद्धा मयेमा रंस्यथ क्षपाः॥' .. "भविष्यामि पतिर्हि वः' इत्यादि श्रीमद्भागवतदर्शनाच्च भगवतः पतित्वमेवास्तु, 'या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा' इति 'या मा भजन् दुर्जरगेहशृङ्खलाः' इत्यादि तत्त्वाश्रयात् 'दृष्टा केशव! गोपरागहृतया किञ्चिन्न दृष्टं मया तेनात्र स्खलिताऽस्मि नाथ! पतितां किं नाम नालम्बसे' इत्याद्यभियुक्तोक्तेश्च निर्दोषपरत्वमेवास्तु वा नस्य, नास्माकं काव्यरसरसिकानां किमपि वक्तव्यमवक्तव्यं वा तत्रास्ते। 'परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः। विचिनुत भवनेषु वल्लवीनामुपनिषदर्थमुलूखले निबद्धम्॥' इति तत्सुहृदां भक्तिप्रकर्षविलोकनेन भवन्त इव वयमप्योमिति ब्रूमः। अप्राकृतभूमौ उत्कर्षपर्याया रतिः "वस्तु वार्यते यतः स्यात्तु यत्र प्रच्छन्नकामुकत्वञ्च। या च मिथो दुर्लभता सा परमा मन्मथस्य रतिः॥" इत्याद्युक्तास्वाद्यपि मुनिनिबन्धे या प्रशंसा न तथा काव्यप्रकाशनिरर्थकेति। एवं निर्बन्धवद्भिर्वक्तिरानन्दचन्द्रिकायाम् 'अनन्यदुर्लभा सीता पत्युरर्थ्या प्रियाङ्गना। तस्मात्तु एवं प्रेमा निन्द्या रागिणी मता॥' इति शृङ्गाररसिकाग्रगण्यः परोढोपपत्योरपि सकलसहृदयहृदयमाधुर्यो रसनिर्यासो भावो इष्यते' इति परमादाढ्यप्रामाणिकैरिव कथयद्भिराचार्यवत्कियत् भविता, यथ

अत्र रसग्रन्थे काव्यमधिकृत्यैव विचारः (थ)। काव्यं दृश्यं श्रव्यञ्च। दृश्ये शब्दोपात्ता विभावादयोऽभिनायकाश्रया अभिनेयाश्रयाश्च, श्रव्ये केवलं शब्दोपात्ताः। कुतोऽत्रानुकार्य्यगतो रसः ? (10) नाप्यनुकर्त्तृगतः, तेषां

सामाजिकानां रसोत्पत्तौ प्रकारमाह—अभिनायको नटस्तदाश्रयाः—एवं भावहाव-कटाक्षादयो नटानामभिनेयास्तदाश्रयाः। अनुकार्य्येति—अनुकार्य्याणां भक्तानां तदानीं तत्राविद्यमानत्वात् शब्दश्रवणात् पद्यश्रवणाच्च तदानीं कस्य रसो भविष्यतीति पूर्व्वपक्षः। अनुकर्त्ता नटः, नापि तद्गतो रसो भवति। ननु कस्यचिद्भरतवेशधारिणो नटस्य एवं

---

'नातीव सम्मतत्वाच्च रसमुनेर्मतविरोधाच्च। साहित्यदर्पणीया न दृष्टैषा प्रक्रिया प्रायः॥' इत्य-यथा भरतमुनेर्मतविरोधमप्राकृतनायकाश्रितरत्यादिविषयं दर्पणेऽनालोचितमनुचितमपि भवत्कृतायां नाटकचन्द्रिकायां प्रकटीकुर्वद्भिरनेकैस्तदुपरि कलङ्कपङ्कलेपश्च कृतः, न तत् सर्व्वसहृदयलोकप्रथितनाम्नां वैष्णवानां भवतां श्रेयस्करमिति मन्यामहे। प्राकृतविषयक-परोढरमण्योरसाभासत्वेऽप्यालङ्कारिकसम्प्रदायिनां मतं, कौस्तुभकृदपि भवानस्तु तत्-सम्मत एव। अत्र शुचिवाचामौचित्यमेव मूले निहितं, तच्चानौचित्यं सहृदयसामाजिक-व्यवहारतो ज्ञेयम्। उत्तमप्रकृतिप्रायत्वे परोढरमण्योरतिः समाजगर्हिता, तद्वर्णितस्य काव्यनाम्नानन्दत्वेनोपादेयतयाऽऽस्वादने 'अधर्म्मकृतः स्वार्थं नृपकस्यापि तद्भवेत्' इति न्यायात् सभ्यानामपि तद्दूषणापत्तेर्वैधर्म्मापत्त्युपेक्ष्याभावो। यत्तु 'प्राकृते रस एव न स्यो'ति साटोपमाक्षेपाविष्कारस्तत्तु भक्तिशास्त्रसिद्धं न काव्यतत्त्वोपयोगीति प्रागेव प्रतिपादितवन्तो वयम्। अत्रालङ्कारशास्त्रे काव्यास्वादद्वारसाधनमेव मताविष्करणं साध्यमिति न कटाक्ष-पातः, परं भक्तिशास्त्रमुक्तिशास्त्रयोर्यथाऽधिकारभेदो भवद्भिराविष्कृतः, एवमपि काव्य तत्त्वतोऽत्र सा प्रदायिकत्वतत्त्वस्य भेदाविष्करणं मान्यार्य्यमिति। अतएव रसस्यात्र ग्रन्थे त्रिधा विभागो ग्रन्थकृतां वैचक्षण्यं द्योतयिततराम्। 'अप्राकृते तु', इत्यारभ्य स्थितस्य 'तर्हि गोपस्त्रीणां '[illegible] कृष्णभार्य्यास्वरूपे।'

(थ) अत्र एव प्रकृतः पन्था आलङ्कारिकनिबन्धे रसतत्त्वनिर्द्धारस्य इति निपुणं व्याख्याय सूचनं स्वसम्प्रदायिनः प्रति ग्रन्थकृत इत्यस्माकं स्थूलतः प्रतिभानम्। 'शास्त्रं काव्यं शास्त्रकाव्यं काव्यशास्त्रञ्च भेदतः। चतुःप्रकारः प्रसरः सतां सारस्वतो मतः॥' इत्याद्यभियुक्त-समदर्शितभेदतः भक्तिसम्प्रदायोपदेशकृतो निबन्धवत्सान्मुख्यात् रसालम्बनजीवितस्य वाक्य-कदम्बकस्य वैशिष्ट्यमनुमीयते। यद्यप्यत्र ग्रन्थे आदिमकिरणे काव्यप्रयोजनप्रदर्शनावसरे 'यशःप्रभृत्येव फलं नास्य केवलमिष्यते। निर्म्माणकाले श्रीकृष्णगुणलावण्यकेलिषु॥ चित्त-स्याभिनिवेशेन सान्द्रानन्दलयस्तु यः। स एव परमो लाभः स्वादकानन्तयेव नः॥" इति

---

(10) 'कुतोऽत्र नानुकार्य्यगतो रस' इति मुद्रितपुस्तके भिन्नः पाठः।

शिक्षाऽभ्यासप्रकटनमात्रकौशलेन स्वादकत्वाभावात्। यदि तु विगलित-वेद्यान्तरत्वमनुकर्तॄणामपि दृश्यते, तदा तेषामपि सामाजिकत्वमेव। अनु-कारणन्तु संस्कारवशादेव जीवन्मुक्तानामाहारविहारादिवत्—तेन सामाजिका-नामेव रसः। (द)।

इदम्मदेशधारिणो नटस्य च लोके रसोत्पत्तिः श्रूयते, तत्राह—यदीति। ननु नटस्य सामाजिकत्वस्य रसानुभवकाले विगलितवेद्यान्तरत्वात् कथन्तस्यानुकरणं सम्भवति, तत्राह—संस्कारवशादेवेति।

---

भक्तिमुक्तिरूपस्यापि काव्यस्य प्रयोजनत्वेनोक्तं तच्चातिरिक्तमेव, न सर्वस्य तदैकान्तिकतयैतद-वच्छिन्नतया वा सम्भवतीति स्मरणीयम्। एवमेव धर्ममोक्षशास्त्रप्रतिपिपादयिषुरागिणि वैराग्यजननावलम्बिनि भावानुबन्धे रसत्वं काव्योपयोगीति गौरवं वचः।

(द) रससद्भावे 'प्रमाणमन्वयश्च'—स च सामाजिकानामेव केवलं सम्भवति। अतएव रसो नानुकर्तृगतः, नाप्यनुकार्यगतो वा, परन्तु सहृदयगत एव। निखिलजगत्-स्थितिकृतो धर्मस्यैवास्वाद्यास्वादनमेव जीवनं सेवनं भोगो वा, स एवेह परः पदार्थः। तथा च कश्चिदाधुनिकः प्रतीच्यमतस्तत्त्वकोविदः—

[ Cf. in another context 'Religion is neither an act of knowledge nor a rule · *it is a life, it is an experience*; and this life has its source in the deepest part of our being, viz feeling. We cannot proceed through knowledge of religion to religion—this latter is an original fact. —Emile Boutroux in *Science and Religion in Contemporary Philosophy*, translated into English by Jonathan Nield (1909)]

न च रत्यादिवासनां विना नोत्पद्यत इति प्रागेवावोचाम। त एव सामाजिकबुद्ध्या ये कविप्रतिभाप्रसूतामितकाव्यहारेण महास्वादसन्दोहस्य रसास्वादस्य विषयिणो जायन्ते। सामाजिकहृदयेष्वेव कविवाक्यानि महासंस्काराणि सफलानि च जायन्ते। केचिदाधुनिकाः पाश्चात्यकाव्यानुबन्धिन आप्तवाच इव सामाजिकाभिन्नत्वमेव कवेः स्वप्रतिभोद्भवने परमं सत्यं मन्यमाना रससुद्घोषयन्ति—

[Cf. Spingarn—(*Creative Criticism*) (*p.43*):—*The identity of genius and taste is the final achievement of modern thought on the subject of art*, and it means that fundamentally in their most significant moment, the creative and the critical instincts are one and the same].

यदनौचित्यासनतामोऽप्यनुपभोग्यतावात्सल्यं मूलेऽत्र वृत्तिप्रतीके—तथाहि नटेभाग्निशमायैश्वर्यामत्तरमन्त्रैः।

तथाहि नटेनानुक्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन विगलितवेद्यान्तरतया तदेकस्फूर्त्तिमनाथेन अद्भुतमिदं रामसीतयो रतिकलाकौशलम्, अद्भुतमिदं रामरावणयोर्युद्धम्, अद्भुतमिदं प्रेतरक्षादिविचेष्टितम्—इत्यादिना सर्व्वेष्वेव रसेषु—

रसे सारश्चमत्कारो यं विना न रसो रसः ।
तच्चमत्कारसारत्वे सर्व्वत्रैवाद्भुतो रसः ॥ (ध)

इत्यादिदिशा चमत्कारपूर्व्वकमद्भुतत्वातिशयस्फूर्त्तौ सम्यङ्मिथ्यासंशयसादृश्यप्रत्ययातिरिक्तेन प्रत्ययविशेषेण चित्रोत्कीर्णाभिरूपप्रतिमाऽदिष्विव 'इमे रामसीते', 'रामोऽयं सीताशोककर्षितः', 'रामरावणावेतौ', 'व्याघ्रोऽयं जनोपप्लावकः', 'श्मशानमिदं शवसमूहान्त्रमांसाद्यशनमत्तोन्मत्तपिशाचादिरुतसङ्कुल'मिति कृत्रिमेष्वपि तेषु विभावादिष्वकृत्रिमवत् प्रतीयमानेषु स्वगतरसवासनाधौतरजस्तमस्तया (ध) स्वच्छतरेषु तेषां चेतःस्वेक एवानन्दो जायते । न तु तेषामेकस्मिन्नेव चेतसि रत्यादयः सर्व्वे स्थायिभावाः

तनाथेनेति—रसोपयोगिविभावादिस्फूर्त्तिसहकृतेन क्रियमाणानुकार्य्यचरितदर्शनश्रवणजनितचमत्कारातिशयेन हेतुना सर्व्वेषु रसेष्वद्भुतातिशयस्फूर्त्तौ सत्यां सम्यङ् निश्चयः। तथाच निश्चयमिथ्याऽऽदिप्रत्ययातिरिक्तेन केनचिदनिर्व्वचनीयप्रत्ययविशेषेण हेतुना कृत्रिमेष्वपि विभावादिष्वकृत्रिमवत् प्रतीयमानेषु सत्सु सामाजिकानां चेतःस्वेक एवानन्दो जायत इत्यन्वयः। तेषामिति—उत्साहशोकविस्मयादीनां परस्परविरुद्धानां युगपदेकत्र

(ध) रसस्यालौकिकत्वमिति चमत्कारप्राणत्वञ्चोपलक्ष्य प्राचीनमतोद्धारपुरःसरमेवमभिहितम्। *न तत्र 'अद्भुत'शब्देन पारिभाषिकस्याद्भुतरसविशेषस्य ग्रहणं*, यतः सर्व्वेष्वेव नवसु रसेषु स एवाद्भुतापरपर्य्यायश्चमत्कारकारी कोऽपि पदार्थो वरीवर्त्ति। रसिकश्चित्र बलात् अधीताऽसाध्मनोऽत्यर्थिकलोकोत्तरलोकिकत्वोपलब्धिमुपभुञ्जाना सान्द्रानन्दमयत्वमुपैति। एतदेव रसस्य रसत्वम्, एतावतो च तस्य रस्यता।

Cf Longinus—*On the Sublime* (Translated by Dr Saintsbury in his *Loci Critici*)—"What is out of the common leads an audience not to persuasion but to ecstasy . . . *I should certainly lay it down that there is nothing so eloquent as real passion standing*, where it ought, in enthusiastic afflatus of inspired madness and filling the phrase with a sort of Delphic rapture"

सन्ति, तेषां परस्परविमर्दशीलानां युगपदेकत्र स्थितेरभावात्। नापि शत्यादिष्वेतस्य रतेः स्थायित्वं, न च शमिनास्तेषां भयशोकादिसत्ता—अपि तु सर्वरसचमत्कारग्राहक एक एवास्वादकन्दः कश्चन चेतोधर्म्म इति—अतो भयानकबीभत्सादेः काव्यनाट्ययोरेव रसता, न लोके (न)। अतएवोक्तम्—

स्थितेरभावात्। दोषान्तरमप्याह—नापीति। शमिनां सन्न्यासिनाञ्चित्ते सर्वत्र समदृष्ट्या निर्विकारत्वेन भयशोकादिस्थायिभावानामसम्भवात्तेषां रसास्वादो न स्यात्—इति तु परमतानुसारेणैवोक्तम् (न)। वस्तुतस्तु तेषां शमित्वेन चित्तस्य कठोरत्वाद्रसास्वादेऽधिकार एव नास्ति,—तथाचोक्तन्तृतीयस्कन्धे—'तथापि चित्तबडिशं शनकैर्वियुङ्क्ते' इत्यादिना चित्तस्य बडिशत्वोक्त्या महाकठोरत्वमुक्तम्।

---

स्वगतरसप्रशमेति—एतदेव मुख्यमुपकरणं रसस्फूर्त्तिसमग्रौ—एतन्तु सर्वत्र समानकान्तःस्थतमय इव कश्चनानन्दकन्द इति सारस्वतसाराणां धन्यम्मन्यानामनुभूतिः। रसस्फूर्त्तिश्च या वास्तवाश्रया वासनास्थितत्वात्, न तु गगनकुसुमगन्धोपलब्धिप्रवृत्तिवत् कल्पनाकल्पिताऽसत्याश्रयेति वेदितव्यम्—अत्रैव भावनाभुक्तिवादिनां भट्टनायकादीनां मतादभिव्यक्तिवादिनामभिनवगुप्तपादादीनामालङ्कारिकोपजीव्यानां मतस्य वैलक्षण्यम्। एतामेव रसस्फूर्त्तिमभिलक्ष्य श्रीवाग्देवतावतारस्य मम्मटभट्टस्य रसस्वरूपनिरूपणे माधुरीमयी सन्दर्भसूक्तिः—'पुर इव परिस्फुरन् हृदयमिव प्रविशन् सर्वाङ्गीणमिवालिङ्गन्नन्यत् सर्वमिव तिरोदधदि'त्यादि। इदानीन्तनानुभूतिसंवेद्याऽतीतानुभवप्रत्यभिज्ञास्मृतिजडिता वा स्वगतरसवासनाऽधुनिकैरपि प्राच्यकोविदैः सामाजिकसंस्काररोद्बोधकनाम्ना स्वीक्रियते स्मर्यते च।

(Cf—Impressiveness consists in greater intensity of present feeling and in taking a strong and permanent hold of the memory —Bain —*Rhetoric and Composition* Part I p 258.)

(न) रतिहासशमादीनां लोकेऽनुभूतानां स्वत एवानन्दः सम्भविता, काव्ये नाटके च निबद्धानां तेषामानन्दात्मकत्वमानन्दोद्बोधकत्वञ्च वर्द्धेततराम्। भयानकबीभत्सादितो लोके वैरस्यं विमुखीभावश्च प्रायः सम्पद्यते—तथाहि स तावद्दुष्यन्तो मानवषण्डः यः सर्वदमनो भरत इव मृगेन्द्रपोतेन चिक्रीडिषुः—'जिंभ रे सिंहशावआ जिंभ दंताइं दे गणइस्सं' इत्यभिदधन्नितरानन्दं विन्दते यत्पश्यतो योगिसिद्धसाध्यगणात्मकास्ते ये प्रेतरङ्कषड्वे स्मशानस्थलेऽमन्दमानन्दसन्दोहमुपभुञ्जते। काव्ये नाटके च तेभ्य एव भावेभ्य आनन्दोत्पत्तिरिति न किमपि चित्रम्। पुरःस्थात् धर्मसमाहवतो वीराद्भयमेव जायते, चित्रार्पितात्मासासादानन्द—इति विश्वजनीनाऽनुभूतिरेवात्र निदर्शनम्। यत्तु 'अष्टौ नाट्ये रसाः' इति तदुपलक्षणं, काव्येऽपि नाट्यमाने ते—उभयत्रापि नवमः शान्तश्च

'अष्टौ नाट्ये रसाः स्मृताः ॥' Kavyaprakasa—*under* Ullasa V.

नाट्य एवाष्टौ, लोके तु शृङ्गारादीनां कियतामेव, पूर्व्वोक्तरसलक्षणाश्रयत्वात् ।

अथ नाट्यरसानां भेदेषु शृङ्गारस्यादित्वेन समुचितेऽपि प्राङ्निर्देशे सविशेषवर्णनीयत्वात्, अलौकिकत्वेनैव प्रतिपादनीयत्वाच्च पश्चादेव निरूपणं करिष्यते । सम्प्रति वीरक्रमेणाह—तत्र च प्राकृताप्राकृतत्वेन स्थापितेऽपि भेदेऽप्राकृतमेवोदाहरिष्यामः (प) ।

अप्राकृतोऽपि द्विविधः प्रत्यालम्बनभेदतः ।

सजातीयं विजातीयं प्रत्यालम्बनमिष्यते ॥ ७३का

तत्र विजातीयालम्बनोऽप्राकृतवीरो यथा—

गुणं कर्णाकृष्टं करकिसलयं तूणशिखरे

धनुश्चक्रीभूतं निपतदिषुवृन्दं तत इतः ।

अथेति—यद्यपि शृङ्गाररसस्य परमसुस्थत्वेनादौ तस्यैव निर्देशः समुचितः, तथापि तस्याङ्गानामतिबाहुल्येन पश्चान्निरूपणं भविष्यति। सम्प्रति सूचीकटाहन्यायेनादौ वीरादिरसवर्णनमेवाह—तत्र चेति ।

गुणमिति—जरासन्धस्य युद्धे देवसमूहे श्रीकृष्णस्य युद्धलाघवं पश्यति सति श्रीकृष्णस्य भुजवीर्य्यं ज्ञापयति। युद्धलाघवमेवाह ११)—यदा देवानां गुणे दृष्टिस्तदा कर्णनिकटे सर्व्वदा गुणं पश्यन्ति। यदा तु दक्षिणे करे दृष्टिस्तदा सर्व्वदैव बाणग्रहणार्थं तूणे करकिसलयम्पश्यन्ति। यदा तु धनुषि दृष्टिस्तदा सर्व्वदैवेतस्ततो निपतितान् बाणसमूहान् पश्यन्ति। यदा विपक्षसमूहे दृष्टिस्तदा सर्व्वदेव तान् भूमौ निपतितान् पश्यन्ति।

इति तु दर्शितमेवास्माभिः। 'वस्तुतस्तु तेषां स्थानित्वेनेत्यादि' टीकायां यच्चक्रवर्त्तिचरणैरुक्तं तत्तु ग्रानयोगतो भक्तियोगस्य श्रेयस्त्वदर्शनाय—निर्व्विकल्पज्ञानसमाधिमाद्धाना परमानन्दं नास्वादयन्तीति तु तत्त्वतो रिक्तं वचः।

(प) अप्राकृतमेवोदाहरिष्याम इति—सर्व्वेषां लक्षणानामत्र श्रीकृष्णचरितनिष्ठत्वात्, न तु तावत् 'प्राकृते रसो नास्ती'ति हेतोः। तच्च 'प्राकृताप्राकृतत्वेन स्थापितेऽपि भेदे' इति प्रतीकात् सुस्पष्टमेव।

(११) एव (ग) (ङ) पुस्तकयोः पाठः। "सर्व्वदैव बाणापेक्षार्थं गुणं कर्णाकृष्टं पश्यन्ति। यदा तूणे दृष्टिस्तदै"त्यादि पाठः (क) पुस्तके, "यदा करकिसलये दृष्टिस्तदै"त्यादि (ख) पुस्तके, (च) पुस्तकेऽयं क्रमोऽशतः पतितः।

रिपून् भूमौ सुप्तान् कलयति समं देवनिकरे
जरासन्धस्याजौ जयति भुजवीर्य्यं मुरभिदः॥ १

अत्र प्रकृते उत्साहः स्थायी—स च द्विनिष्ठः। आलम्बनविभावो जरासन्धस्तस्य च कृष्णः। उद्दीपनमन्योन्यशौटीर्य्यादि। अनुभावो बाणवर्षणे हस्तलाघवम्। व्यभिचारी गर्व्वोग्रताऽमर्षचपलताऽऽदिः। एतैः परिपुष्टः स्थायी रसतां प्राप्तः। स चानुकार्य्ये भगवति प्रकृते परोक्षः, काव्यश्रवणात् सामाजिके प्रत्यक्ष इति सर्व्वत्रोन्नेयम्। सजातीयालम्बनस्तूह्यः। केचित् सखिभिः सह युद्धमुदाह्रियते—तत्तु लीलाविशेष इति प्रकृते न लिख्यते (क)।

एष च युद्धदानदयाधर्म्मपूर्व्वत्वाच्चतुर्द्धा। सर्व्वत्रोत्साहः स्थायी। ऊह्यान्युदाहरणानि।

एवञ्च हस्तस्यातिलाघवात् सर्व्वाः क्रियाः सर्व्वैरेवालातचक्रवत् पश्यन्तीति भावः। तस्य जरासन्धस्य विजातीयालम्बनः श्रीकृष्णः। प्रकृते, न तु नटवत् कृत्रिमे। एवम्भूते भगवति स एव इदानीन्तनलीलानां लीलाश्रयाणाञ्च सर्व्वेषामप्राकट्येन परोक्षः, सामाजिकानान्तु भावादाङ्कुरमूलभूतस्य स्थायिनोऽचिन्त्या शक्तिरीदृशी याऽप्रकटामपि तत्तल्लीलां काव्यनाटकगतां साक्षात्कारत्वेन प्रकाशयति—अतस्तेषां स रसः प्रत्यक्षरूपः। सजातीयालम्बनो महादेवादिः। सखिभिः श्रीदामादिभिः सजातीयालम्बनैः सह श्रीकृष्णस्य युद्धमुदाह्रियते। लीलाविशेष इति—जरासन्धस्य यथा देवकोपादिजन्ययुयुत्सात्मक उत्साहः स्थायी तथा श्रीदामादीनां न, किन्तु कौतुकविशेष इत्यर्थः।

एष चेति—युद्धवीर दानवीर दयावीर धर्म्मवीरा इति चतुर्द्धैव रसो भवतीत्यर्थः।

---

(क) कश्चिदिति—वैष्णवालङ्कारिकैरिति शेषः। वस्तुतस्तु सखिभिः सह युद्धे न तावज्जयविजयादिकर्म्मणि तात्त्विकं किमपि तात्पर्य्यम्, यतो तस्यालम्बनमेव परम—श्रीकृष्णस्य निरिक्ष्यमेव सख्यं लीलाविलसितमिति चेत्—दार्शनिकदुर्लभप्रौढोक्तिरियम्, न च यतः रसस्यैकध्यमेव प्रमापयन्ति, न तदङ्गाङ्गमवर्षिरं, परं भेदश्चेत् कर्त्तव्यो रसानां तदा सखिभिः सह कलहयुद्धस्य वीररसमध्येऽन्तर्भावो न युक्त इति। अत्र रसानां सप्तप्रसंगकारिकामन्दर्भस्थयुक्तिजातसम्बद्धदेवताप्रभावादीनि तत्त्वानि द्रष्टव्य रसार्णवसुधाकरादिनो लभ्यानि। अत्रैते युद्धवीरस्यैवोदाहरणोपन्यासः—इतरेषां सकलसुचरितनिकायमाश्रे श्रीकृष्णे तस्ये सम्भवेऽपि न वैशद्येनेह प्रदर्शनम्। दानवीरो जामदग्न्यः, दयावीरो नागानन्दनायको जीमूतवाहनः धर्म्मवीरो युधिष्ठिर इत्येतरे—तत्तच्चरितमत्रालदुदाहरणानि तेषु नोपयमेषु दर्शितानि।

अथ करुणः—

दोर्गुप्तायां मधुविजयिनो हा कथं द्वारवत्या-
मन्यायोऽस्यामयमुदभवद्धन्त निष्कण्टकायाम् ।
जाते जातं सुतमुपहरत्येष मेऽकालमृत्युः
को मां त्राता हरिहरि हता हा हता हा हताः स्मः ॥ २

अत्र शोकः स्थायी । एष एकनिष्ठः । पुत्रनाश आलम्बनम् । पुत्रगत-ममताद्युद्दीपनम् । अनुभावः शिरस्ताडनादि । व्यभिचारी विषाददैन्य-ग्लान्यादिः । अयन्तु सामाजिकगत एव, नानुकार्य्यगतः परोक्षेऽपि । अयं सामाजिकगतोऽप्यप्राकृत', स्वप्नाश्रयत्वात् ।

अथाद्भुतः—

आलोकः सखि ! लोकलोचनमुदामुद्रेकमुद्भावयन्
सोमस्तोमनिदाघधामनिवहप्रद्योतसद्योहरः ।
मेघे माधवने मणावपि घृणानिर्व्वाहको नीलिमा
सामानाधिकरण्यमत्र किमहो चित्रं तमस्तेजसोः ॥ ३

अत्र विस्मयः स्थायी । एष एकनिष्ठः । आलम्बनं श्रीकृष्णः । उद्दीपनं तल्लावण्यादि । अनुभावो रोमाञ्चादिः । व्यभिचारी आवेगमतिचपलताऽदिः । अयं परोक्षोऽनुकार्य्यगतः, प्रत्यक्षः सामाजिकगत' । अयमप्राकृत एव (अ ।

यस्यां द्वारवत्यामयमन्याय उदभवत् । अन्यायमेवाह—जातमिति । नानुकार्य्यगत इति—पुत्रमरणजन्योत्कटदुःखमानन्दरूपस्य रसस्याविर्भावे प्रतिबन्धकमिति भावः ।

आलोक इति—हे सखि । विरुद्धयोरपि तमस्तेजसोः सामानाधिकरण्यं यथा एकस्मिन्नेव वर्त्तते इत्यहो अत्याश्चर्य्यम् । श्रीकृष्णे तयोः सामानाधिकरण्यमाह—कृष्णे वर्त्तमानो आलोकः प्रकाशः स लोकलोचनानामानन्दोद्रेकमुद्भावयन् सन् सोमस्तोमश्चन्द्रसमूहः निदाघधामनिवहः सूर्य्यसमूहस्तयोः प्रद्योतानां प्रकाशानां सद्योहर्त्ता । 'आलोको दर्शनोद्योता'विति नानार्थः ।

---

(अ) अत्र प्रकृते विरुद्धधर्म्मयोरेकत्र स्थितेरेव विस्मयः—स चालौकिकचमत्कारमयः, अप्राकृतत्वात्तदाश्रयस्य । 'लोकलोचनमुदा'मिति बहुत्वोक्तेस्तदन्तर्भावित्रजललना-मखिलानामेवानन्ददायकत्वं, 'स्तोम' निवह'पदाभ्यां तस्यानुपमत्वञ्च सूचितम् । नीलिम-प्रपञ्चनेन तदङ्गश्यामवर्णस्य लावण्यललितता सूचिता । नामस्यन्द्यपेक्षत्वे तस्याह्लादकता

अथ हासः—

उन्मत्ताभिर्वसन्तोत्सवरभसमदैर्गोदुहां कन्यकाभिः
घोटैः सिन्दूरचन्द्रागुरुमलयरुहां हा धिगन्धीकृतोऽस्मि ।
जाड्यं गन्धाम्बुसेकैरजनि तत इतो धावितुं नास्मि शक्तो
व्यापद्येऽहं वयस्य ! प्रियसखमव मां मास्त्विह ब्रह्महत्या ॥ ४

अत्र भगवत्सखो विदूषको ब्राह्मणवटुर्मधुमङ्गलो वक्ता । हासः स्थायी । एष वस्तुनिष्ठः । आलम्बनं वसन्तोत्सवः । उद्दीपनं विदूषकस्य वैक्लव्यम् । अनुभावो नयनस्फारताऽऽदिः । व्यभिचारी श्रममदचपलताग्लान्यादिः ।

उन्मत्तेति—वसन्तोत्सवजन्यहर्षमदैः करणैरुन्मत्ताभिर्गोपीभिर्मलयरुहां चन्दनानां घोटैश्चूर्णैरन्धीकृतोऽस्मि । तथा जलसेकैर्मम जाड्यमप्यजनि, अतः पलायितुमपि न शक्तोऽस्मि । हे वयस्य ! कृष्ण ! अहं व्यापद्ये, म्रिये, अतो मामव रक्ष ।

---

वैष्णवकविसम्प्रदायवर्णिता—तस्याचार्य स्वनिष्ठवर्णमाधुर्यस्य प्रकटनं, यथोगौरवं श्रीकृष्णे चैतन्यविग्रहे 'कृष्णवर्णं त्विषाऽकृष्ण'मित्यादिना सूचिते श्रीकृष्णचैतन्ये च सुमहदन्तरं इति साधकधनानामुपासकानामनुभवमिह, वैष्णवकवीनां परा मोक्षोपनिषच्च तद्रूपजीविवीति सर्वसम्मतमेतत् । "नवजलधरवर्णं चम्पकोद्भासिकर्णं विकसितनलिनास्यं विस्फुरन्मन्दहास्यम् । कनकरुचिदुकूलं चारुबर्हावचूलं कमपि निखिलसारं नौमि गोपीकुमारम् ॥" इति मुकुन्दमुक्तावल्यामस्यैव नवजलधरवर्णगोपवधूटीदुकूलचौरस्य वर्णस्तुत्यवलम्बिव्याख्यया । 'अंसालम्बितवामकुण्डलभरं मन्दोन्नतभ्रूलतं किञ्चित्कुञ्चितकोमलाधरपुटं साचिप्रसारिक्षणम् । आलोलाङ्गुलिपल्लवैर्मुरलिकामापूरयन्तं मुदा मूले कल्पतरोस्त्रिभङ्गललितं जाने जगन्मोहनम् ।' 'कस्तूरीतिलकं ललाटफलके वक्षःस्थले कौस्तुभं नासाग्रे नवमौक्तिकं करतले वेणुं करे कङ्कणम् । सर्वाङ्गे हरिचन्दनञ्च कलयन् कण्ठे च मुक्तावलीं गोपस्त्रीपरिवेष्टितो विजयते गोपालचूडामणिः ॥' इति श्रीलघुकथामृतादावलौकिकस्यापि तस्यैव रूपप्रकर्षस्य लौकिकवत् प्रतिपाद्यमानत्वम् । 'अमिया मथिया निमाइ करिया साधिल मनेर माथा । मरिया हइव श्रीनन्दनन्दन तोमारे करिव राधा ॥' 'ढल ढल काँचा अङ्गेर लावणी अवनी बहिया याय ।' इत्यादि गौडीयवैष्णवकवीनामनुपद्धतिः प्रतिभाऽस्लहारिणी नूपुरारोपोद्घाटनेन मत्स्यमात्रात्मारविन्दारस्य निमग्नोऽस्य नः कृतिपथतारो भवति । इत्यनयापि निदर्शनदिशा वर्णितानि भगवत्प्रभावानुभवोत्तमचिह्नमपि जगदनुकरणकारणस्य विकसदस्य सुन्दरतमस्य उपभोग्योपयोगिविदमस्त्वभेदमन:—

Into the Elysian fields of thought enters no satisfaction but brings with it youth and strength and ardour ; nor is there a thing in this world

एष त्रिविधः—स्मितं हासः प्रहासश्चेति (भ)।

अधरोष्ठस्फारतया सृक्कण्योरेव विस्फुरत् ।
अलक्षितद्विजं धीरा उत्तमानां स्मितं विदुः ॥
विकसद्दशनद्योतो गण्डाभोगे प्रफुल्लता ।
किञ्चित्कलः कण्ठरवो यत्र हासः स मध्यमः ॥
सघर्म्मः साश्रुताम्राक्षः स्फुटघोरकटुस्वनः ।
व्यात्ताननो व्यक्तदन्तः प्रहासो ग्राम्य उच्यते ॥ ७४का

अथ भयानकः—

दंष्ट्राकोटिकठोरकूटकटुना ब्रह्माण्डभाण्डस्थितं
सर्व्वं चर्व्वयतोव हन्त वदनेनोद्घोरघूर्णार्च्चिषा ।
जिह्वाग्रेण समग्रमुग्रमहसा संलिह्यसे रोदसो
त्रस्तं मामिह पाहि पाहि भगवन् पार्थोऽप्यपार्थोऽभवम् (म) ॥५

दंष्ट्रेति—वदनेन कथम्भूतेन? दंष्ट्राणां कोटिभिरग्रभागैः कण्ठैः कठोरत्वादपि कटुना। रोदसी द्यावापृथिव्यौ जिह्वया लेलिह्यसे। अतस्त्रस्तं मां पाहि। पार्थोऽप्यहम-पार्थो व्यर्थोऽभवम् अनुकार्य्योऽर्जुनोऽपि। आलम्बनेनैव कारणेन मकरन्दस्य भयं विना नानन्दोत्पत्तिः। यदि शौर्य्यं सति आपद्दर्शनेऽप्यानन्दस्तदोत्साह एव स्थायी।

on which the mind thrives more readily than *the ecstasy, nay the debauch, of eagerness comprehension and wonder* *The Buried Temple* of Maeterlinck translated by A Sutro

(भ) 'भौयश्चाकृतिवेषाभ्यां क्रियायाश्च विकारतः। कौतुकादेश्च परस्यानामेषामनुकृतेरिति। विकारश्चेतसो हास' इति हासलक्षणं रसार्णवसुधाकरे। द्विविधश्चायम्—'आत्मस्थः परस्थश्च। यदा स्वयं हसति तदाऽऽत्मस्थः, यदा परं हासयति तदा परस्थः।' इति भरतीये नाट्यशास्त्रे। एष आप्राकृतनिष्ठ उत्प्रासविजृम्भितो वा सुतरां पोषमेति। मुनीन्द्रोऽप्येवमाह—'स्त्रीनीचप्रकृतावेष भूयिष्ठं दृश्यते रसः।' मुनीन्द्रादीनां मतेऽस्य षड्भेदा विज्ञेयाः, ते नामतो लक्षणतश्च नाट्यशास्त्रादिग्रन्थेष्वेव द्रष्टव्याः। अप्राकृताश्रितस्यास्य उत्तममध्यमाधमप्रकृतिभेदेन वैरूप्यमपि तत्र दर्शितम्। आप्राकृतनिष्ठस्य हासस्य दिङ्मात्रमुदाहरणं शार्ङ्गधरपद्धतावुद्धृतोऽधोदर्शितः श्लोकः—'भोजनं प्राप्य दुर्ल्लभे मा प्राणेषु दयां कुरु। दुर्ल्लभानि परान्नानि प्राणा जन्मनि जन्मनि ॥'

(म) विश्वरूपदर्शनत्रस्तस्यार्ज्जुनस्य कातरोक्तिरियम्—तथा च श्रीमद्भगवद्गीतायाम्—

अत्रार्जुनस्य भयं स्थायि। स चैकनिष्ठः। आलम्बनं विश्वरूपप्रदर्शकः श्रीकृष्णः। उद्दीपनन्त्वद्भुतदंष्ट्रादि। अनुभावः 'पाहि पाही'ति कातर्य्यम्। व्यभिचारी 'अपार्थोऽभव'मिति दैन्यम्। एवञ्च कृष्णालम्बनत्वात् सामग्री-साविध्येनानुकार्य्येऽपि रसतां प्राक् प्राप्त एव। भयेऽपि कृष्णस्फूर्त्तेस्तत्-सम्बन्धादानन्द एवेत्यप्राकृत एव। न तु मालत्यादौ शार्दूलाद्यालम्बनेन मकरन्दस्य भयं विनाऽऽनन्दः। सति शौर्य्ये उत्साह एव स्थायी भवति। तेन कदाचिदानन्दो जायते, न भयतः। तेन प्राकृते न रसता (य)।

अथ वीभत्सः—

> दैत्येन्द्राणां मथितवपुषामन्त्रमेदोऽस्थिमज्जा-
> मांसासृक्कलकक्ष्यपुटपटलीस्वादमोदप्रमत्ताः।
> कौमोदक्या मधुविजयिनः कीर्त्तिमुद्घोषयन्तः
> साह्वं ग्रधैर्विदधति मुदं प्रेतरक्षा विशङ्काः॥ ६

कौमोदक्या गदया मथितवपुषां दैत्येन्द्राणाम्। अन्त्र 'आंत' इति प्रसिद्धः, कक्ष्यपुटं नाडी-ग्रन्थिविशेषः—तेषां पटलीनां समूहानामास्वादकेभ्यो यो मोदस्तेन प्रमत्ताः प्रेतरक्षा मुदं विदधति।

---

'लिलिक्षसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः। तेजोभिरापूर्य्य जगत् समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥' 'दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि। दिशो न जाने न लभे च शर्म्म प्रसीद देवेश जगन्निवास॥' इति। प्राकृताश्रितो भयानकरसः प्रायः स्त्रीनीचप्रकृतिः। परमप्राकृताश्रिते तस्मिन् यथेष्ट ऊर्ज्जस्विनः क्षत्रियोत्तमस्यापि भीतिजनने न किमप्यशोभनम्। लोकाश्रयत्वतः कालाह्वोक्तिर्न कदापि कस्यापि गर्हणीयम्।

(य) न रसता—किमभिप्रायमेतदभिधानमिति पृच्छायां वयं ब्रूमः—यदत्र प्राकृतास्पदेऽपि भयानकरसे रसता न तावदपह्नूयते कौस्तुभकृद्भिः, परं प्राकृतेऽनुकार्य्ये सञ्चारिभयेनानन्दस्य बाधात् रसस्यानन्दमयत्वात् न रसत्ता सम्भवति। उभयत्रापि सामाजिकानामानन्दो-द्बोधादसोपलब्धिरिति तु नान्यार्थ्यमिति प्रागेव दर्शितमस्माभिः। 'भयानकवीभत्सादेः काव्य-मात्रयोरेव रसते'ति (१६८ पृष्ठायाम्) ग्रन्थकृदुक्तत्वादेतत् सुप्रतीतमपि टीकाकृतो मतनिर्व्यक्तप्रागल्भ्यप्रकटनाय पुनरुल्लिख्यते। सर्व्वेषां रसानामप्राकृताधिकारित्वकथने न काऽपि हानिः—यतो निखिलरसमर्त्तिरमन्दस्फूर्त्तिः स्वानन्दरससन्दोहः श्रीकृष्ण इत्यनेकमयं सर्व्वेषां, परं तेषां प्राकृताश्रयत्वनिराके हानिरेव गाढं स्यात्। 'यदभिहितं रघोरागमादीनां रौद्रो रसः, किमन्येषां नास्ति? उच्यते। अस्त्यन्येषामपि--किन्त्वधिकारोऽत्र गृह्यते, ते हि

अत्र देवासुरसंग्रामावसानमालोकयतां व्योमचारिणां जुगुप्सा स्थायी। स चैकनिष्ठः। शवशरीराद्यालम्बनम्। प्रेतरङ्गाद्युद्दीपनम्। अनुभावो मुखवैकल्यादिः। व्यभिचारी ग्लानिदैन्यादिः। एतैः परिपुष्टा जुगुप्सा जुगुप्सैव यद्यपि तथापि भगवतः क्षतिरियमिति भगवत्प्रसादादेवानन्दः। प्राकृते नटानन्दः, अपि तु नटव्यापारदर्शनात् सामाजिकानामेव तत्र रसः।

यथा वा—

इयैव करुणार्द्रया सहचरान् समुज्जीवय-
नघस्य जठरं गतो गरलजातवेदोऽप्यसून्।
तदन्त्रधमनीवसारुधिरमज्जलालादिभिः
स्तुतोऽप्यनवलिप्तवच्छुचिरुचिः स जीयाद्धरिः॥ ७

अत्र भगवत एवालम्बनत्वात्तदन्त्रादिदर्शनेनाप्यानन्द एव लीलावतां, तथात्वात् भक्तानाञ्च तस्य स्फूर्त्तिमेव।

अथ रौद्रः—

स्वर्गेनापि न वेद्य एव भवता मृत्योर्मुखं गच्छता
किं दोर्दण्डनचण्डिमैष भवते विज्ञापनीयो मया।
येनाखण्डलशौण्डखण्डनकृता गेण्डूकृतोऽयं गिरिः
किं रे कष्टमरिष्ट दुष्ट तनुषे गोष्ठस्य नस्त्रिष्ठ रे (२)॥ ८

इयैवेति—गरलरूपेण जातवेदसाऽग्निना अमून् विगतप्राणान् मूर्च्छितानित्यर्थः, तेषां पार्षदत्वेन नित्यत्वान्न वास्तवप्राणत्यागः सम्भवतीति। स्तुतोऽपि व्याप्तोऽप्यनवलिप्त इव शुचिः शुद्धा रुचिः कान्तिर्यस्य सः 'सुन्दरे किमसुन्दर'मित्युक्तेः—उक्तञ्च दशमे—'पङ्काङ्गरागरुचिर'मिति। अत्रेति—भगवत आनन्दरूपत्वाल्लीलावतां पार्षदानामपि तथात्वादानन्दरूपत्वात्। अत्र तत्रानन्दोत्कर्षाधिक्येनान्त्रादिदर्शनेनानन्दोत्पत्तिरेव—

---

स्वभावत एव रौद्रः, (नाट्यशास्त्रे षष्ठाध्याये) इतिवदेनाद्दृश्यस्थलेऽपि मतपरिणामः सुधीक, सुस्पष्टस्थले पिष्टपेषणेन।

(२) अरिष्टवध, श्रीमद्भागवतसंहितोदितः अन्यकृतकृते आनन्दवृन्दावने पञ्चदशे स्तवके लक्षणीयः। स्वाधिदैवतादद्भुतकर्मैकशीलकादस्य रौद्र इति संज्ञेति पद्धवः। क्रोध स्थायिभावो रक्षोदानवोद्धतमनुष्यप्रकृतिकः सङ्ग्रामहेतुकश्चायं रसः। रक्तास्यनेत्रता भ्रुकुटीकरणदन्तौष्ठपीडनगण्डस्फुरणहस्ताग्रनिष्पेषादिभिरनुभावैरस्य प्रायशः सामाजिक

अत्र कोपः स्थायी। एष एकनिष्ठ उभयनिष्ठश्च—अत्र तूभयनिष्ठ एव। आलम्बनमन्योन्यम्। उद्दीपनमन्योन्यविक्रमः। अनुभावो वागाडम्बर्य्यादिः। व्यभिचारी गर्व्वादिः। एवं स्फुटोऽयं रसः—स च भगवति परोक्षः, सामाजिके प्रत्यक्षः। आद्ये विजातीयालम्बनोऽप्राकृतः; द्वितीयेऽप्राकृत एव।

अथ शान्तः—

वयो जीर्णं हा धिक् तदपि न हि जीर्णो मदभरः
श्रथं धर्म्माङ्गेभ्यस्तदपि न हि रागः शम इव।
रदाः शीर्णास्तदपि न हि मोहः, कथमयं
जनः कंसारातेश्चरणकमलाय स्पृहयतु (ल) ॥ ८

न तु प्राकृतानामिव दुःखं, तेषां दुःखरूपत्वेन भयानकानीभवृत्तिवत्तदर्शने दुःखमेवोत्पद्यत इति विशेषो ज्ञेयः।

स्पर्द्धेनेति—मत्कर्त्तृकस्पर्द्धयापि हेतुना त्वय्योन्मुखं गच्छता भवताऽहं न वेद्यः न ज्ञातुं शक्य एव—तथा च मद्विषयकज्ञानमेव तव न भविष्यति, किं दोश्चण्डिमा मया भवते विज्ञापनीय इति भावः। इन्द्रपराक्रमखण्डनकृता येन दोर्दण्डेनायं गोवर्द्धनगिरिरुद्धृतः। आद्ये असुरमात्रनिष्ठे कोपे विजातीयालम्बनो भगवान्। द्वितीये उभयनिष्ठे, तदा सुतरां भगवानप्राकृत एव।

---

प्रत्यक्षता। विजातीयालम्बनोऽप्राकृतः—विजातीयोऽरिरालम्बनं यस्य स भगवानप्राकृतः। अत्र चतुर्थचरणे 'ट'वर्गयुक्तवर्णानां निवेशनेन रसानुगुण्यं प्रकटम्।

(ल) वयो जीर्णमिति—एतमप्याचार्य्यशङ्करो समग्रे मोहमुद्गरे विधिष्य 'अङ्गं गलितं पलितं मुण्डं दन्तविहीनं जातं तुण्ड'मिति' पञ्झटिकायां निर्व्वेदमेवोपदिदेश। तदुक्त्या समाधिमय्येकान्तता चात्र विश्रमति। आह च भगवान् भरतः—'योगीव ध्यानरतो भवति हि निर्व्वेदवान् पुरुषः।' भरतीये तु निर्व्वेदस्य व्यभिचारिभावरूपेण परिग्रहः, न तु स्थायिभावतया—तेन तन्मतेऽष्टावेव रसाः। मतचैतन्तु प्राचीनालोचितमस्माभिः—सञ्चार्य्यादीनामभावयुक्तिस्तु स्थमपाला दर्शये—'युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्य्यादेः स्थितिश्च न विरुद्धा।' इति। अतएव ध्वनिकारादिमतानुसारिभिः शमस्य स्थायित्वमुक्ता शान्तरसस्य प्राधान्यज्ञापनाय यत्नेऽहि। एवमभिदधुश्चालङ्कारिकचूडामणयो लोचनकृदोऽभिनवगुप्तपादाः—"मोक्षफलत्वेन चायं परमपुरुषार्थनिष्ठत्वात् सर्व्वरसेभ्यः प्रधानतमः स चायं शान्तरसः" इति। भर्त्तृहरिकृतवैराग्यप्रसङ्गे भक्तहृन्दरचितसंवकदम्बे च रसस्यास्य बहुलः प्रसारस्तत्रैव स समास्वादनीयः शिक्षणीयश्च सहृदयैः।

अथ निर्वेदः स्थायी । स चैकविधः । आलम्बनं संसारदुःखम् । उद्दीपनं पुण्यतीर्थादि । अनुभावो विषयासक्तित्यागः । व्यभिचारी मतिधृतिहर्षादिः । एष रसोऽनुकार्य्ये परोक्षः, सामाजिके प्रत्यक्षः । चमत्कारी चायम् ।

तथा च—

"यच्च कामसुखं लोके यच्च दिव्यसुखं महत् । Mahabharata
तृष्णाक्षयसुखस्यैते नार्हतः षोड़शीं कलाम् ॥"

चमत्कारातिशयेनानन्दातिशयः । अयं श्रीकृष्णभक्त्युपयुक्तो यदि भवति तदाऽप्राकृत एव । यथाऽयं निर्व्वेदो व्यभिचारी सन्नपि शान्तरसे स्थायितां प्राप्य रसतामाप्नोति तथा सैव देवादिविषया रति'र्भाव' इति पारिभाषिकोऽपि भावः (12) स्थायी सन् तत्तद्विभावादिसामग्रीसमवेतो भूत्वा 'भक्तिरस' इति (व) द्वादश रसा भवन्ति । स पुनर्भक्तिरसः श्रीकृष्णाश्रयो भवन् रत्यादिभिः स्थायिभिर्दशविधो भवति । तदन्यत्रोह्यम् ।

यच्च इति—अङ्गेभ्यः सकाशाच्चर्म्म यथा, तदपि रागः स्वप्न इव क्षयतुल्योऽपि न भवति । केचिच्छान्तस्य रसत्वं न मन्यन्ते, तन्मतं दूषयितुमाह—अयमिति । चमत्कारित्वे हेतुं प्राचीनानां श्लोकमाह—तथा चेति । तृष्णाक्षयसुखरूपचन्द्रस्य षोड़शीमेकां कलामपीहलोकस्थस्वर्गस्थसुखे नार्हतः—तस्माच्चमत्कारत्वात् तस्य रसत्वमवश्यमङ्गीकार्य्यं 'रसे सारश्चमत्कार' इत्युक्तेः । द्वादश रसा इति—पूर्व्वमेकादश रसा उक्ताः, अयमेको रसो मिलित्वा द्वादश भवन्तीत्यर्थः । कस्यचिन्मतेऽसौ भक्तिरस एव श्रीकृष्णाश्रयो भवन् स्वातन्त्र्येण दशविधो भवति, तस्य स्वरूपलक्षणोदाहरणमन्यत्र तस्यैव ग्रन्थे ज्ञेयम् ।

---

(व) रतिर्भाव इति पारिभाषिकोऽपीति—व्यापकत्वात् 'रति'पदेन प्रीतिस्नेहानां निखिलानां चित्तवृत्तीनां परिग्रहः । पारिभाषिकस्य तस्येत्थमर्थो निर्दिष्टो रसामृतसिन्धौ—"मिथो हरेर्मृगाक्ष्याश्च सम्भोगस्यादिकारणम् । मधुरापरपर्य्याया प्रियताख्योदिता रतिः ॥" 'भाव'पदेन रतिशोकोत्साहक्रोधशमादीनां सर्व्वेषामेव व्यापकतया परिग्रहः, पारिभाषिकात्तस्मात् 'सञ्चारिणः प्रधानानि देवादिविषया रतिः । उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते ॥' इत्युक्तलक्षणपदार्थग्रहः । अत्र लक्षणे देवादौ'आदि'पदेन पुत्रादिविषया रतिरपि गृह्यतेति केचित् । रसगङ्गाधरकृत्प्रभृतयः । तन्मते वात्सल्यस्य रसत्वेन न पृथग्गणना । परं श्रीकृष्णविषया सा परो रसः—भक्तिरस इति तस्य संज्ञा । एतच्च प्रागेवास्माभी रसस्वरूपसंख्याद्यालोचनप्रस्तावे सम्यग्विवेचितमिति न पुनरवतारस्तस्यात्र कृतः ।

---

(12) 'पारिभाषिको भाव.' इति (क) (ङ) पुस्तकयोः ।

अथ वात्सल्यम्—

आराज्जानुकरोपसर्पणपरो जातस्मितं सत्वर-
मङ्कारोहमनाप्नुवन् रुदद्विम्लानचन्द्राननः।
अभ्यासार्थमुपेक्षितोऽपसरणप्रक्रान्तया सत्वरं
कण्ठेक्तनरं यशोदया न न न नेताश्लेषि बालो हरिः॥ १०

अत्र ममकारः स्थायी। एष एकनिष्ठः। आलम्बनं श्रीकृष्णः, उद्दीपनं तद्गतचङ्क्रमणादि। अनुभावः कण्ठेऽकृताश्लिङ्गनादिः। व्यभिचारी हर्षादिः। एष परोक्षो व्रजेश्वरीनिष्ठः, प्रत्यक्षः सामाजिकनिष्ठः। उभयथैवाऽयमप्राकृतः।

अथ प्रेमरसः—

प्रेयांस्तेऽहं त्वमपि च मम प्रेयसीति प्रवाद-
स्त्वं मे प्राणा अहमपि तवास्मीति हन्त प्रलापः।
त्वं मे ते स्यामहमिति च यत्तच्च नो साधु राधे!
व्याहारे नौ न हि समुचितो युष्मदस्मत्प्रयोगः॥ ११

अत्र चित्तद्रवः स्थायी। स चोभयनिष्ठः। आलम्बनमन्योन्यम्। उद्दीपनमन्योन्यगुणपरिमलः। अनुभावो विशिष्य निर्वचनाभावः। व्यभिचारी मतिरौत्सुक्यादिः। परोक्षः श्रीकृष्णराधयोः, सामाजिकानां प्रत्यक्षः। प्रेमरसे सर्वे रसा अन्तर्भवन्तीत्यत्र महीयानेव प्रपञ्चः। ग्रन्थगौरवभयाद्दिङ्मात्र

आरादिति—आरान्निकटे जानुकराभ्यां गमनपरो बालः श्रीकृष्णो मातुरङ्कारोहणार्थं प्रयतन्, यशोदयाऽपि गमनप्रक्रियायामभ्यासार्थं पुनरानयनाय सम्मुखगमनं विहायापसरणे तस्य पश्चाद्देशगमने प्रक्रान्तयोपेक्षितः श्रीकृष्णो मातुरङ्कारोहमप्राप्य रुदद्विम्लानमुखः पश्चाद्यशोदया सत्वरं यथा स्यात्तथा कण्ठे व्याप्याश्लिष्टः।

प्रेयांस्तेऽहमिति—श्रीकृष्ण आह—हे राधेऽहन्ते तव प्रेयान्, त्वं मे प्रेयसी त्वं मे प्राणाः, अहमपि तव प्राणा अस्मीति। त्वं मे मम, तवाहं स्यामिति च यत् तत् सर्वं न भाय, यतो भावयोर्व्यवहारे कथाप्रसङ्गे युष्मदस्मत्प्रयोगो न समुचितः—आत्मनोर्द्वि-

दावर्तेति कथं भवन्ति ते, तदप्यादरश्लोकेऽपूर्वेव स्तवैव दर्शितम्। स पुनर्भक्तिरसो दशविधो भवतीति—शान्त प्रीति प्रेयो वत्सल मधुराख्यभेदैः पञ्च, स्वार्थ परार्थेति प्रत्येकं द्वौ। अतो दशैव न। अन्योन्यम्—श्रीकृष्णराधाभ्यामितरेतरं विश्लेषेऽपि प्रेमः।

मुक्तम् (13)। केषाञ्चिन्मते श्रीराधाकृष्णयोः शृङ्गार एव रसः (ग)—तन्मतेऽप्येतदुदाहरणं नासङ्गतम्। शृङ्गारोऽङ्गी प्रेमाऽङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता। वयन्तु प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति विशेषः। तथा च—

उन्मज्जन्ति निमज्जन्ति प्रेम्ण्यखण्डरसत्वतः।
सर्व्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ (घ)॥ १२

देहत्व एव तादृशः प्रयोगः समुचितो भवति। अत्र तु श्यामपीतदेहद्वयोरेक एवात्मा— यथैकस्मात् कमलनालादुत्पन्नं नीलपीतकमलद्वयं, तद्वदिति ज्ञेयम्। उद्रिक्तता—चाङ्गिरसापेक्षयाऽङ्गरसस्याधिक्यम्। एतदभिप्रायेण वयमपि शृङ्गारोऽङ्गमिति ब्रूमः।

अखण्डरसत्वतोऽखण्डरसत्वात् सर्व्वे उन्मज्जन्ति निमज्जन्ति समुद्रे तरङ्गा इव।

---

(ग) प्रेमरसे चित्तद्रवरूपविशिष्टाया रतेर्व्वोधादस्य व्यापकत्वं शृङ्गाररसात् यथाकथञ्चिदपि गुणात् साधारण्यात् रतिभावमयादस्यमिति केचित्—अपरेस्तु तेनैव मार्गेण प्रेमरसस्य व्याप्तिरधिकैवानुमीयते। (If the connotation decreases, the denotation increases and *vice versa*) तन्मते प्रेमाऽङ्गी, शृङ्गारोऽङ्गमिति। वस्तुतस्तु यत्किञ्चिदपि पार्थक्यमुपकल्प्येतावान् विमानविस्तारः। ग्रन्थेऽत्र प्राक् सप्तविधगौणरतीनां वीरादारभ्य रौद्रं यावद्वर्णितानामुपन्यासः, पश्चात् शान्त-वात्सल्य-प्रेयो-भक्ति प्रीतीनां पञ्चानां मुख्यरतीनां पृथग्निर्द्देशः खमन्तव्यमतसानुवर्त्तनच्छलाय, ग्रन्थकृच्चित्तरालङ्कारिका इव सर्व्वे रसा इति खमतं सूचितवान्— स्वेच्छया लिखितं किञ्चित् किञ्चिदत्र परेच्छया। यत् पूर्व्वापरसंबद्धं तत् पूर्व्वमपरं परम्।'—अग्रे श्रीकृष्णस्य सर्व्वरसात्मकत्वं सूचयितुं रचितः श्लोकोऽपि तदाशयक एव। महीयानेव प्रयत्नः—मधुरोपनामकस्य भक्तिरसस्यैव महत्प्रपञ्चत्वं श्रीमद्रूपगोस्वामिनो ग्रन्थे—ग्रन्थावसाने सविनयमुक्तिश्च—'अतलत्वादपारत्वादाप्तोऽसौ दुर्व्विगाहताम्। स्पृष्टः परं तटस्थेन रसाब्धिर्मधुरो मया।' इति।

(घ) 'एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वय'मितिवत् प्रेमरसस्याखण्डत्वमितरेषां खण्डरसताऽशांशतः सूचिता। प्रेमरसे हि भूमस्वरूपस्य भगवतः प्रतिबिम्बिता—यदि शृङ्गाररसेन इतरेषां रसानां विपरिणामः सुकरः, कथं न संतुसारभूतात् प्रेम्ण एतत्सम्भवः? अतो नात्र केवलं प्रौढ़िः। मानवहृदये वैरं तथाऽस्तु, घृणा वाऽस्तु, सर्व्वमेव प्रेमप्रशमैकमूलं, प्रेम्णि निलीने हृदये सर्व्वेषां साधीयान् लय इति नासाधारणसंवेद्यं तत्त्वम्। प्रेम्णो वारिधिसाम्यं कथञ्चिदुदाहरणद्वाराऽनुमीयते—वैष्णवकुलशेखरजयदेवमुखदुमापतिधरस्याप्योदर्शितः श्लोको रसस्यैकस्याखण्डत्वं निपुणमनुमापयतीत्यस्माकं प्रतिभानम्—'रत्नच्छायाच्छुरितजलधौ मन्दिरे द्वारकाया रुक्मिण्याऽपि प्रबलपुलकोद्भेदमा-

---

(13) 'दन्यगौरवतया दिङ्मात्र' मिति मुद्रितपुस्तके, 'दन्यगौरव दिङ्मात्र'मिति (क) (ख) पुस्तकयोः, 'ग्रन्थगौरवभयादि'त्यादि (ग) (घ) (च) पुस्तकेषु।

'रसः शृङ्गारनामाऽयं श्यामलः कृष्णदैवतः।' Rasasudhakara (P)

एवञ्च सर्व्वेषामेव रसानां वर्णा देवताश्च बोद्धव्याः।

सर्व्वरसात्मकत्वं श्रीकृष्णस्य यथा—

शृङ्गारी राधिकायां, सखिषु सकरुणः क्ष्वेडदग्धेष्वघाद्रे-<br>
र्बीभत्सी तस्य गर्भे, व्रजकुलतनयाचेलचौर्य्ये प्रहासी।<br>
वीरो दैत्येषु, रौद्रो कुपितवति सुरासाहि, हैयङ्गवीन-<br>
स्तेये भीमान्, विचित्री निजमहसि, शमी दामबन्धे, स जीयात् (च) ॥ १२

अथ शृङ्गारः—

धृते पाणिद्वन्द्वे झटिति झणितं रत्नवलये-<br>
र्धृते नीवीग्रन्थौ मुखरितममन्दं रसनया।

शृङ्गारीति—शृङ्गारी शृङ्गाररसविशिष्टः, अघाहेर्विषदग्धेषु सखिषु करुणरसविशिष्टः, तस्याघासुरस्य गर्भे प्रविष्टः कृष्णो बीभत्सरसविशिष्टः, सुराषाडीन्द्रे कुपितवति सति रौद्ररसविशिष्टः, निजतेजसि विस्मयरसवान्,—यथापि दर्पणे यदा स्वकान्तिम्पश्यति तदा तस्य महान् विस्मयो जायत इति भावः, शमी शान्तरसविशिष्टः।

धृत इति—श्रीकृष्णस्य स्पर्शान्नातो य आनन्दस्तस्मात् प्रतिहतधियो विगतबोधाया

---

धारभूता गोरथो। एवमपि रसामृतसिन्ध्वादौ सर्व्वरसात्मकत्वेऽपि श्रीकृष्णस्य तस्मिन् मधुररसस्यैव विषयत्वमधिकं सूचितम्। सर्व्वरसकदम्बेति—यस्य नानारसात्मकत्वं तत्तत् नियतालम्बनविभावत्वमपेक्ष्य वर्त्तते। एवमाहू रसतरङ्गिण्यां श्रीमन्नारायणभट्टाः— 'शान्ते ब्राह्मण एव स्यात् प्रीते दासः प्रकीर्त्तितः। प्रेयसि स्युः सखायो हि यशोदा वत्सले मता। मधुरे राधिका ज्ञेया हास्ये स्वात्मप्रमङ्गलः। सखीयूथोऽद्भुते ज्ञेयो वीरे चानूरगोष्ठाः। करुणे वत्सहत्यादि कुटिलाद्यास्तु रौद्रके। गोवर्द्धनोऽभिमन्युश्च भयानक उदाहृतौ। तपस्विन्यादयो ह्यत्र बीभत्से परिकीर्त्तिताः। अमीऽस्या नियता ज्ञेया आलम्बनविभावकाः॥' रसानां वर्णदेवतानिर्देशो भरतीयादिषु द्रष्टव्यः। 'शृङ्गारे तु नीलमणिः श्यामवर्णो देवते त्वनुभवमात्रिकं तत्वम्।

(च) अत्र नव रसा लक्षिताः—एवमपि रुद्रभट्टीयशृङ्गारतिलकस्यावतरणिकायाम् 'शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया। रौद्रो दक्षविमर्द्दने च हसकृन्नग्नः प्रशान्तश्चिरादित्थं सर्व्वरसात्मकः पशुपतिर्भूयात् स वो भूतये।' द्वादश रसा लक्षिताः प्रागुदाहृते 'मल्लानामशनि'रित्यादिश्लोके। ग्रन्थकर्तृकृतानन्दवृन्दावनचम्पूकाव्ये 'शृङ्गारी'ति श्लोके उद्दिष्टानां बहूनां वार्त्तानुसन्धेया, 'तेषान्तु श्रीमद्भागवतपुराण एव कथा लभ्यता।

प्रियायाः स्वानन्दप्रतिहतधियः, किन्त्वपघनो
घनोत्कृण्ठं कृष्णं प्रति समतनोत्तर्ज्जनमिव ॥ १४

यथा वा—

मृदुमन्दं लीलाकरकिशलयोत्कम्पमुदयत्-
प्रसूनेषुक्रीडाविभ्रममुदितालिव्रजसुखम् ।
अमन्दीकुर्व्वाणाद्धिमपि कलकण्ठध्वनिकलां
निषेवे राधाङ्गं हरिरथ वसन्तानिलमिव ॥ १५

चिरस्य क्षणमात्रनिर्हतिकृते तस्या मुखं चित्रितं
सद्यः पद्ममभूत्ततः परमसौ पूर्णेन्दुरङ्कोज्झितः (14) ।
आनन्दामृतमण्डलम्पुनरभूदिङ्मां ततोऽभूदिव-
स्तत्पश्चादभूत तदत सखे ! मत्संविदो गोचरः ॥ १६

अर्थोऽरानन्दमूर्च्छितायाः राधाया अपघनो देह एव सम्भोगे घनोत्कण्ठं कृष्णं निवारयितुं तर्ज्जनमिव समतनोत्, तस्यास्तर्ज्जनेऽसामर्थ्येऽपि ततुपरिणतरूपो देह एव श्रीकृष्णं तर्ज्जयत्यनुप्रेक्षा। वस्तुतस्तु आऽनन्दवेवशेन वाम्यादिकमपि कर्त्तुं न शशाकेत्युत्प्रेक्षा-ऽलङ्कारगम्यो वस्तुध्वनिः। तर्ज्जनमेवाह—श्रीकृष्णेन तस्याः पाणिद्वन्द्वे धृते सति रन्तुमपेक्षितेति भणितं, तथाच रत्नवलयानामङ्कारशब्देनैव तर्ज्जनरूपो देहः श्रीकृष्णान्तर्ज्जते।

यथा वेति—हरो राधाया अङ्गं सिषेवे—यथा 'महाप्रसादान्नं सिषेवे' इत्युक्ते भक्तः प्रसादस्य भोजनमेव सेवनं बुध्यते, तथेहाप्यस्य सम्भोग एव सेवेति ज्ञेयम्। अङ्गं कीदृशम्? वसन्तकालस्यानिलमिव। साधर्म्यमाह—तत्सम्भोगसमये मृदुमन्दं, वसन्तानिलमपि मृदुमन्दं, निजाङ्गलीलया करकिशलयस्योत्कम्पो यत्र, अनिलपक्षे लीलाकरः कौतुककरः किशलयस्य नवीनपल्लवस्योत्कम्पो यत्र, उदयन्ती प्रसूनेषोः कन्दर्पस्य या क्रीडा तया विभ्रमम्, उदितानामलिव्रजानां सखीसमूहानां सुखं यत्र, पक्षेऽलिव्रजानां भ्रमरसमूहानाम्। कण्ठो मधुरास्फुटो 'न नेति' कण्ठध्वनिस्तस्य कलां वैदग्धीं किमप्य निर्व्वचनीयं यथास्यात्तथाऽमन्दीकुर्व्वाणं सर्व्वोत्कृष्टं कुर्व्वाणं, पक्षे कलकण्ठः कोकिलः।

श्रीराधाविरहेण व्याकुलः श्रीकृष्णः सुबलं प्रत्याह—चिरस्येति। पद्ममभूदिति—पद्मदर्शनजन्यतुल्यमहाप्रसादजनकत्वेन तच्चित्रितं पद्ममभूदित्यर्थः। पश्चात्तन्निजदर्शनेन जाता या तस्याः साक्षाद्दर्शनमहोत्कण्ठा तया तच्चित्रं विरहदाहकत्वेन विषमभूत्। तदनन्तरं तदभूतपचत संविदो मानस्य गोचरो न भवति—तथा च विरहपीडया मूर्च्छां प्राप्नोति भावः।

(14) 'परमसौ पूर्णः इत्यादेर्निर्व्विशेष (क) (ख) पुस्तकयोः पाठः।

मुग्धा सुधांशुकिरणे जालगते भवनदाहचकिताक्षी ।

याति तमेवधिलेखं प्रविशति भवनं निवार्य्य सख्यौ ताः (ङ) ॥ १७

एषु पूर्व्वौ सम्भोगे, परौ विप्रलम्भे । सर्व्वत्र रतिः स्थायी—स चोभय-निष्ठः, अन्योन्यमालम्बनम्, उद्दीपनमन्योन्यलावण्यादि विजनस्थानादि च, अनुभावः करग्रहणादिः, व्यभिचारी श्रमजडताऽऽदिः । विप्रलम्भे च रतिरेव स्थायी, स चोभयनिष्ठः, विप्रकर्षेऽपि रतेस्तथैव सतःसिद्धत्वात्, आलम्बनं पूर्व्ववत्, उद्दीपनं विप्रकर्षोऽन्योन्यदुःखानुभवचन्द्रचन्दनपवनादिश्च, अनु-भावश्चित्रलेखादिः । उभयोरेवानन्दधर्म्मत्वाद्रसत्वम्—आनन्दस्यात्मधर्म्मत्वा-दात्मनश्च बहिरिन्द्रियापेक्षित्वमात्रत्वाभावात् स्फूर्त्तिपर एवानन्दः (ढ) ।

अथ माथुरविरहेण्याव्यक्तव्याकुलाया राधाया गवाक्षद्वारा गृहमध्ये प्रविष्टां चन्द्रकिरणाम् दाहकत्वादग्नित्वेन आगन्त्वास्तस्याश्चेष्टामाह । चन्द्रकिरणस्याग्नित्वेन भ्रान्ता मुग्धा । भ्रमर इरिष राधयोक्तं 'मधुप कितवबन्धो' ( भागवते १० । ४७।१२) इत्यादि पद्यमुपश्रुत्वा व्याकुलेन श्रीकृष्णेन तस्याः प्रबोधनार्थं कापि स्वविधिपत्री प्रेषितेति ज्ञेयं, जीवनहेतुभूता सा यतो गृहमध्य आसीत्, तदानयनार्थं सा भवनं प्रविशति । सख्यौ ताः सखीर्निवार्य्येति —अनेन पत्रानयनार्थं मद्देहस्य दाहो भवति चेद्भवतु, सखीनां दाहो माऽस्त्विति तस्या अभिप्रायः ।

---

(ङ) सुधांशुकिरणोद्दाहाशङ्को विरहिण्यो सम्भवतीति हि कविसम्प्रदायसमयः । निवार्य्य सख्यौ ताः—मम प्रेम्णो निदर्शनं पत्रमहमेव रक्षिष्ये, कथं मत्प्राणप्रियाः सख्यो मदर्थेऽनलं व्रजेयुः इति चिन्तया तासां निवारणम्—वस्तुतस्तु तत्रावधिरेखे लिखितस्यावधि-दैर्घ्यकौतूहलमपि त्वराया हेतुः—स च चेत् दृष्टमन्त्रं इवं प्राणारामः प्रिय इव सत्वरं गोप्यो भवतीति कामिनीमाचारः । प्रतिबन्धमनुभूता अप्यपूर्व्वायमाणा निरवधि-मधुरास्तास्ताः प्रेमलीला केवलमतः कारिता वा भवेयुरिति ।

(ढ) उभयोरेवेत्यादि—सम्भोगरतावानन्दः स्पर्शादीनां बहिरिन्द्रियप्रवृत्तिगोचरः—विप्रलम्भे प्रियप्राप्त्याकाङ्क्षाजनित आनन्द उत्तेजना वा वर्त्तते । तथा च चौरकवेरभि-सारिणि पद्ये—'प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा पर्य्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य । हंहो चेतः प्रकृतिरपरा नास्ति ते काऽपि सा सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥' विप्रलम्भे बहिरिन्द्रियगणस्य तरभावादानन्दो नास्तीति वक्तुं न शक्यते, यत आनन्द आत्मधर्म्मः—'न खलु बहिरुपाधीन् प्रीतयः संश्रयन्ते ।' स्फूर्त्तिपर एव —प्रकाशशरीर एवानन्दः, स च प्रकाशो बहुधा बहुशो भवति । स्फूर्त्तिस्तत्र रस-धर्म्मस्तं निखार्थे पदा कोटा ।

यथा—

अभिलाषश्चिन्तनञ्च स्मृतिश्च गुणकीर्त्तनम्।
उद्वेगश्च प्रलापश्चोन्मादश्च व्याधिरष्टमः।
जड़ता नवमो ज्ञेया मरणं दशमं स्मृतम् (ग्र) ॥ ७६का

विरहस्तु भावी भवन् भूतश्चेति त्रिधा।
ईर्ष्याप्रभवोऽत्र मानपरः—स च द्वेधा। (15)

ईर्ष्याप्रणयसम्भूतो द्वेधा मानः प्रकीर्त्त्यते।
अन्यासक्ते प्रियतमे ईर्ष्यामानो भवेत् स्त्रियाः॥
द्वयोः प्रणयमानः स्यात् प्रमोदे सुमहत्यपि।
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना ॥ ७७ का

तथा च—

नदीनाञ्च वधूनाञ्च भुजगानाञ्च सर्व्वदा।
प्रेम्णामपि गतिर्व्वक्रा कारणमत्र नेष्यते॥ Rasasudhakara.

स च मानो द्विधा भवति—एक ईर्ष्यासम्भूतः, द्वितीयः प्रणयसम्भवः। ननु कान्तस्यापराधो माने कारणं, प्रणयकालेऽपराधस्य सम्भावनाऽपि नास्ति, कुतो मानप्रवृत्तिः, तत्राह—द्वयोरिति। कान्ताकान्तयोर्मध्ये प्रमोदेऽपि कारणं विनाऽपि प्रणयमानः स्यात्। प्रेम्णः कुटिलगामित्वे प्रामाणिकानामुदाहरणमाह—तथा चेति।

विभागश्चान्यत्रैव द्रष्टव्यः, न वा भागकथनमत्राश्रिता, यतः समर्थायां रतेरेव पञ्चस्विप्र भवभेदेषूक्तो हृश्यते।

(ग्र) समञ्जसरतिरूपस्य पूर्व्वरागस्येमा एव दशा यथाक्रमं मालमत्यादौ दर्शिताः। साधारणरतिरूपस्य तु उन्मादादिवर्ज्जमभिलाषादिकाः प्रथमनिर्द्दिष्टाः षट्। समर्थ रतिरूपस्य प्रौढ़ाख्यस्य पूर्व्वरागस्य लालसोद्वेगजागर्य्यातानवजडिमवैयग्र्यव्याधिउन्मादमोह-मृत्युक्रमेण दशेति च सत। न च तावत् प्रकृतं किमपि वैलक्षण्यमेतस्य 'नयनप्रीतिश्चिन्ते'-त्यादाय उदाहृतात् केषिद्दर्शितात् दशापारम्पर्य्यात्। पर स्थलविशेषतोऽवस्थाविशेषतश्च भिन्ना संज्ञा—नातः परं किमपि।

(15) इतः परात् 'वहूलमियमिति. पाठ (ख) (च) पुस्तकोदयमभवे।

यथा वा—

अर्धाकुञ्चितनिर्निमेषनयनं निस्पन्दतारं किय-
द्दीर्घश्वासमलक्ष्यकण्ठनिनदं सानन्दतन्द्रायिता ।
कृष्णे पाययति स्वकीयमधरं प्रागेव पीताधरे
किञ्चित्त्वं ललिते ! पिबेति किमपि स्वप्नायते राधिका ॥ २१

परस्परचुम्बनं यथा—

अङ्गाङ्गि स्खलनं कराकरि मनःसंवादसंवेदनं
कर्णाकर्णि कथाकथासु युगपच्चुम्बाः शतं गण्डयोः ।
स्कन्धास्कन्धि भुजौ मुखामुखि मुहुर्माध्वीकपानक्रमो
राधामाधवयोर्मधौ मधुमदक्रीडा जरीजृम्भते ॥ २२

राधायाः स्वप्नायितं जयति । निद्रादशायामस्फुटवर्णवाक्यार्थबोधकशब्दोच्चारणमेव स्वप्नायितं, तदेवाह । हे ललिते ! प्रेयसि ! श्रीकृष्णे स्वीयास्यं मां पाययति सति ममास्यं स्वयं पिबति सति त्वं च सुताऽसीति स्वप्नायितम् ।

अर्धेति—प्राक् प्रथमं पीतो मदीयाधरो येन तथाभूते श्रीकृष्णे स्वकीयाधरं मां पाययति सति हे ललिते ! त्वमपि किञ्चित् पिबेति किमपि स्वप्नायते राधिका । स्वप्नायत इत्यत्र क्रियाविशेषणान्याह—नेत्राङ्कं व्याप्याकुञ्चिते ईषन्मुद्रिते एवं निमेषरहिते नयने यत्र तद्यथा स्यात्तथा, स्पन्दरहिता नेत्रतारा यत्र स्यात्, कियन्तो दीर्घश्वासा यत्र, अलक्ष्योऽस्फुटः कण्ठनिनदो यत्र ।

मधौ वसन्ते राधामाधवयोर्वसन्तकालीनमदेन जाता या क्रीडा सा जरीजृम्भते अतिशयेन प्रकाशते । क्रीडामेवाह—तयोः स्खलनमङ्गाङ्गि अङ्गेनाङ्गेन निर्वृत्तं, तथा च मधुमदेन राधाया अङ्गे श्रीकृष्णः पतति, श्रीकृष्णस्याङ्गे राधा पततीत्यर्थः । मनसः संवादोऽभिप्रायस्तस्य संवेदनं ज्ञानं कराकरि कराभ्यां कराभ्यां निर्वृत्तं, तथा च श्रीकृष्णस्य हस्तौ ह्यादेव तस्य मनोऽभिप्रायो राधिकया ज्ञातः एवं राधाया अपीति ज्ञेयम् । कर्णाभ्यां कर्णाभ्यां निर्वृत्तासु कथाकथासु सतीषु परस्परगण्डयोः शतसंख्यकचुम्बनम् । भुजौ स्कन्धास्कन्धि—तथा च तयोर्भुजौ परस्परस्कन्धे निहिताविवत्यर्थः । मधुपानोपक्रमो मुखामुखि मुखेन मुखेन निर्वृत्तः ।

तद्रूपचिन्तानन्दस्य भागाहरणायान्यथाऽन्यदा च कल्पितानां प्रतिद्वन्द्विभक्तत्वेन चैतरेषां प्रायशोऽपि मधुरमधुरमाज्ञानम् । अतार्थाया द्वितीयार्द्धेऽन्योक्तिसूचककविवाक्यनिर्मितिः संस्कृतेनैव भवितुमर्हा । टीकासम्पृक्तप्राकृतसन्दर्भगतच्छायाऽपि नात्र प्रसरतीति निखिलमवदातम् ।

परस्परनखक्षतानि यथा—

जाताङ्कुराणि किममून्यनुरागबीजा-
न्युप्तानि नूनमुरसोरुभयोरुभाभ्याम् ।
आर्द्राणि कोमलतराण्युरुपाणि भुग्ना-
न्याभान्ति पश्य ललिते ! नखलक्ष्माणि ॥ २३

परस्परदशनक्षतं यथा—

माध्वीकाचमनोत्सवे कुतुकिनोरन्योन्यदन्तच्छदा-
वन्योन्येन कृतोपदंशरचनौ यौ राधिकाकृष्णयोः ।
क्षुब्धौ च द्विजकुड्मलैरभवतामच्छच्छलच्छोभरौ
पीतौ चार्पितौ बभूवतुरहो प्रेम्णो विचित्रा गतिः (१) ॥ २४

नीवीमोक्षो यथा—

निर्यातायां त्वयि विरमितो मालया रत्नदीपः
कृष्णे चोलं चपयति मया स्वस्तिकः सन्निबद्धः ।

तयोः परस्परनखक्षतानि परस्परानुरागरूपबीजस्याङ्कुरत्वेनोत्प्रेक्षते—जातेति । आर्द्राण्यपि स्निग्धानि भुग्नानि किञ्चिद्वक्रीभूतानि—वक्रीणामङ्कुराणामुत्पत्तिकाले भुग्नानीति ध्येयम् ।

माध्वीकेति—वृक्षकोटरेभ्यो निःसृतोऽत्यन्तमादको रसः माध्वीकः, तस्य पानोत्सवे कुतुकिनो राधाकृष्णयोरन्योन्योष्ठाधरौ—कथम्भूतौ ? अन्योन्येन कृता मद्यपानस्योपदंश-रचना यत्र तथाभूतौ. मद्यपानैर्मादकवस्तुपानानन्तरं किमपि भक्ष्यवस्तु भुज्यते, तस्यैव संज्ञा उपदंशः, लोके 'नक्कल' इति तस्य प्रसिद्धिः—ताभ्यान्तु परस्पराधरपानमेवोपदंशत्वे रचितम् ; द्विजरूपकुड्मलैः क्षुब्धावभवतां, तथापि तावोष्ठाधरौ अहो आश्चर्यमच्छच्छ-लच्छोभाभरौ बभूवतुः—एवमुभाभ्यां पीतावपि परस्पराधरावर्पितौ बभूवतुः ।

हे सखि ! त्वयि कुञ्जद्वारान्निर्यातायां सत्यामेकाकिन्या मया स्वरक्षकान्धकार-निर्माणार्थं रत्नप्रदीपो मालया विरमित आच्छादितः—तदपि बलात्कारेण मम कञ्चुलीं चोलकं चपयति सति कुचद्वयाच्छादनार्थं हस्ताभ्यां मया स्वस्तिकः सन्निबद्धः । संवृतोऽस्य यथाख्यातया मयोपविष्टम्. कृष्णस्य मिलितोऽत्र्योपवेशनेनैव परिधेयवस्त्र-

(१) उपदंशस्य गौडभाषायां 'चाट्' इति संज्ञा । क्षुब्धावप्यच्छच्छलच्छोभरावित, 'पीतावप्यर्पिता'विति च ध्वेयमर्थविरोधमयभणितिवशात् प्रेम्णो विचित्रगतित्वकथन-मपार्थर्यमिति । 'कुतुकिनो'रित्यत्र 'पुमान् स्त्रिया' इत्येकशेषः ।

नीवीग्रन्थिं हरति सहसा संहतोरूपविष्टे
बुद्धेरग्रं सखि ! समधिका वल्लभस्ते बलेन ॥ २५

आदिशब्दाद्वनविहार-जलविहार-मधुपान सङ्गीतादि । तत्र वनविहारो यथा—

अर्घं कुड्मलकैर्मरन्दपटलैः पाद्यं परागैर्मृदु-
स्यन्दार्द्रैरनुलेपनं किसलयैः पुष्पैश्च भूषां फलैः ।
नैवेद्यं पवनाहतैरवयवैर्नृत्यं मदालिस्वनै-
र्गीतं कल्पयता हरिर्वनगतो वल्लीचयेनार्चितः ॥ २६

अपि च—

एकेनानिलचपलेन पल्लवहस्तेनारौत्सीत् स्तवकपयोधरं परेण ।
आक्षेपं न न न न नेति चञ्चलालिभ्रूभङ्गया व्यधित हरिं विलोक्य वल्ली ॥ २७
सन्त्रासं किसलयपाणिकम्पनेन प्रोत्साहं कुसुममयेन सुस्मितेन ।
रोषञ्च भ्रमरघटाकटाक्षपातैरासन्ने मधुभिदि वीरुधोऽभ्यनैषुः ॥ २८

सीमन्तोपरि बन्धुजीवकुसुमं सिन्दूरबिन्दूकृतं
चित्रैर्नव्यदलैर्व्यरचायि मकरी गण्डे मृगाक्ष्याश्च तैः ।
चक्रे कञ्चुलिका पयोधरभरे नानाप्रसूनच्छदैः
कृष्णेन प्रणयातिरेकरभसस्तस्यामभिव्यञ्जितः ॥ २९

कार्यमपि कृतमित्यर्थः । अतएव ते तव वल्लभः श्रीकृष्णो बलेनाधिको न तु बुद्ध्या—बलस्याग्रे बुद्धेः प्रभावो न तिष्ठतीति । यद्भवितव्यं तदभूदिति ध्वनिः ।

एतैः करणैः पाद्यादिकं कल्पयता लतासमूहेन श्रीकृष्णोऽर्चितः, एतदेवाह—कुड्मलकैः पुष्पस्तबकैः, मधुक्षरणेनार्घैः, परागैः पुष्परजोभिरनुलेपनम् ।

वल्लीरूपा नायिका सम्भोगोन्मुखं नायकमिव हरिं चञ्चलभ्रमररूपया प्रणयकोपव्यञ्जकभ्रूभङ्गया विलोक्य स्तवकरूपं स्तनमरौत्सीत् वक्षमकरोत् ।

अधुना वल्लीरूपनायिकायाः कृष्णदर्शनाज्जातमनेकेषां व्यभिचारिभावानां प्रावल्यमाह—सन्त्रासमिति । श्रीकृष्णे आसन्ने सति वीरुधो वल्ल्यो भयव्यञ्जकसन्त्रासं पल्लवरूपपाणिकम्पेनाभ्यनैषुरभ्यासाभिनयं चक्रुरित्यर्थः । एवं पुष्परूपस्मितेनाभिलाषव्यञ्जकमुत्साहमभ्यनैषुः ।

श्रीकृष्णेन सख्यां राधायामेतैः करणैः प्रणयातिशयवेगोऽभिव्यञ्जितः । प्रणयातिशय-

जलविहारो यथा—

कृष्णः कर्षति कोकयुग्मकमियं दोर्भ्यां व्यधात् स्वस्तिकं
कण्ठे चारुमृणालमर्पयति सा बाहू दधे कुञ्चितौ ।
पद्मं जिघ्रति पाणिनास्यमनयोरित्थं जले खेलतो-
रस्यर्था सुरतिस्तयोः प्रियसखीवृन्दस्य रस्याभवत् (उ) ॥ २०

मधुपाने यथा—

'आलि ! प्रेयान् हरिरतिशठः' 'कृष्ण ! से सम्प्रसीद'
'श्यामे ! स त्वामभिसरति किं' 'नाथ ! दासी तवास्मि ।'
इत्यन्योन्यप्रकृतिविकृती भावतोऽनन्वितोक्ती
राधाकृष्णौ मधुमदमुदा मोहितौ वः पुनीताम् ॥ २१

चमत्कं पुष्पमण्डनमाह—सीमन्तेति । सिन्दूरबिन्दुस्थानीकृतं, नखाग्रचलितैश्चित्रैर्नीलावर्तैः कृतैर्मकरी मकर्याकारचित्रं गण्डे यथापि—नानापुष्पदलैः स्तनपयोधरे कञ्चलिका चक्रे ।

अथ जलक्रीडायां राधाकृष्णयोः स्पर्शं विनैव दूरे तिष्ठतोस्तयोः क्रीडामाह—कृष्ण इति । स्तनस्पर्शकाङ्क्षया चक्रवाकयुग्मं कृष्णो व्याकर्षति सतीयं राधा तदा सम्मतिसूचकं स्तनाच्छादकं स्वस्तिकं दोर्भ्यां व्यधात् । राधिकाया हस्ताभ्यां स्वकण्ठस्यालिङ्गनाकाङ्क्षया श्रीकृष्णे स्वकण्ठे चारु मृणालमर्पयति सति साऽपि तदासम्मतिसूचकौ कुञ्चितौ बाहू दधार । असम्प्राप्ता सम्प्रेक्षिता शोभना रतिः सखीसमूहस्य रस्याऽऽस्वादनीयाऽभवत् ।

मधुपानजन्येन मदेन कृतौ स्थितौ कथयन्तौ ? वासात् कृष्णविषयेऽधिकार्यैः कृष्णविहृसितार्थैः करयेरन्योन्यं इत्था व्याहरन्तौ । 'धरणिपतिते'ति वत्सके 'धरे'त्यधिकाचारं रेफविकारौ न स्तः, अतः स्वितारम् ।

(उ) श्लोकोऽयमेतदनन्तरो श्री. 'एकैनाभिश्चपयेने'ति (२०) श्लोकधामन्दवृन्दावने माध्वीकपान जलविहार वसन्तोत्सवादिवर्णनप्रसङ्गेषु वर्तन्ते । 'वचैतत्कालमगस'मित्यादि श्लोक [illegible] यद्यपि मूलालङ्कारविधायकस्येतरत्र नो निरूप्यादिकस्य वैशिष्ट्यं नात्र वर्तते, तथापि वचनभङ्ग्या हिरिवृत्तिरूपभोग्यं व्यस्तोत्तमतायत्तम । 'दा कष्ट'मिति परवर्तिनि श्लोके तृतीयचरणे 'वधिकवनिते'रिति वकारस्यमंयुक्ताक्षरस्यानुपस्थानात् 'प्रद्वे'त्यनुप्रासभावपूर्ववर्तिनो लघुवर्णस्य वैकल्पिकं लघुत्वमिति छन्दःशास्त्रसदामाश्रयालक्षणत्वं न दोषाय । एतेषु श्लोकेषु यथायोग्यं श्रीकृष्णो पूर्वरागी तत्र दैवतृप्रगल्भो नायको वा, नायिकाशिरोमणी राधा च पूर्वरागवती मुग्धा मध्या नायिका वा—इत्यपि बहु समायाति उभयोरलौकिकमधेयत्वम् ।

यथा वा—

हा कष्टं द्यौः पपतति कथं हन्त घूघूर्णते भू-
रालम्बे त्वां धध-पतिता कम्पते गात्रयष्टिः।
इत्यन्त्रासादधिकश्वसितैरुच्चरेर्व्व्रीडहरन्तौ
श्लिष्टान्योन्यं मधुमदजितौ नौमि राधामुकुन्दौ ॥ ३२

अथ विप्रलम्भः—

स्वप्नाद्वा श्रवणाद्वापि चित्राद्व्वा विलोकनात्।
साक्षादाकस्मिकाद्वापि दर्शनाद्दुर्लभे जने ॥
प्राप्नोति रतिरुद्भूता सम्प्राप्तेः पूर्व्वमेव सा।
पाकद्वयान्तरे पूर्व्वरागतां प्रतिपद्यते (ज) ॥७८ का

पाकद्वयान्तर इति—

भावः पूर्व्वरागश्चेति पाकद्वयं, तदन्तरे तन्मध्ये। तत्र स्वप्नद्वारा यथा—

इन्दीवरादपि सुकोमलमिन्द्रनीला-
दप्युज्ज्वलं जलधरादपि मेदुरन्तत्।
स्वप्नः स किं सखि! महो यदहो समेत्य
मद्यापि नो नयनयोः पदवीञ्जहाति ॥३३॥

श्रीकृष्णस्य प्राप्तेः पूर्व्वमेव दुर्लभे श्रीकृष्णे प्राप्नोति स्वप्नद्वारादिना पूर्व्वमेव स्वभावसिद्धा, किन्त्वेतैः कारणैरुद्भूता या रतिः सा पूर्व्वरागतां प्रतिपद्यते। भाव पूर्व्वराग रूपपाकद्वयान्तरे मध्ये अर्थाद्भावमपि व्याप्येत्यर्थः।

अथ स्वप्ने श्रीकृष्णस्य दर्शनं प्राप्य तद्दर्शनस्यातिचमत्कारित्वेन साक्षाद्दर्शनमेव जानती श्रीराधिका सखीं प्रत्याह—हे सखि! स किं स्वप्नः, अपि तु स्वप्नो न भवति, किन्तु साक्षाद्दर्शनमेव—यदस्मादिदं महस्तेजःस्वरूपं तदद्यापि नेत्रपदवीं न त्यजति। तन्महः कीदृशमित्याह—इन्दीवरादित्यादि। मेदुरं स्निग्धम्।

(ज) प्राप्नोतीति—'व्यतिषजति पदार्थानान्तरः कोऽपि हेतु'रिति—स च हेतुः पूर्व्व संस्कारभित्तिकः। संप्राप्तेः पूर्व्वं कथमस्य 'राग' इति चित्तरञ्जकत्वशक्तिनी संज्ञेति? अत्राहुर्नीलमणिकाराः—'दुःखमप्यधिकं चित्ते सुखत्वेनैव व्यज्यते। ततस्तु प्रणयोत्कर्षात् स राग इति कीर्त्त्यते।' भावपाकस्य लक्षणन्तत्रैव—'अनुरागः स्वसंवेद्यदशां प्राप्य

श्रवणद्वारा यथा—

तमालनीलं किमपि त्वदुक्तादिम्बोष्ठि ! कर्णेति पदादुदीर्णम् ।
अन्तः प्रविश्य श्रुतिवर्त्मना मे न वेद्मि तद्धाम किमातनोति ॥२४

चित्रदर्शनद्वारा यथा—

व्रजभुवि किमलोकि सञ्चरन्त्या यदिह विलिख्य पटे ममोपनीतम् ।
कुतुकिनि ! कुतुकेन ते समस्तं मम गतमेव हि जातिजीवनञ्च ॥२५

साक्षाद्दर्शनद्वारा यथा—

नो वा दृष्टचरी न वा श्रुतचरी नामापि न ज्ञायते
यस्याः काचन सा व्यलोकि विपिने मेघद्युतिर्देवता ।
आनन्दद्रववर्षिणः किमथवा ज्वालाहलोल्लासिनः
सौहित्यञ्च रुजञ्च नो विदधते यस्याः कटाक्षोर्मयः ॥२६

अथास्य दश दशाः । तत्राभिलाषो यथा—

मा किं निशा सखि ! भविष्यति सर्वदा मे
स्वापः स किं सुमुखि ! तत्र सदैव भूयात् ।
कश्चित्तमालदलनीलतमः स यस्मि-
न्नालोकि लोकरमणो रमणीयमूर्त्तिः ॥२७

हे बिम्बोष्ठि ! त्वदुक्तात् कृष्णेति पदादुदीर्णमुद्गतं तमालवन्नीलं किमपि धाम तेजःस्वरूपं ममान्तःकरणं प्रविश्य किमपि क्षोभादिकमातनोति, तन्न वेद्मि ।

हे कुतुकिनि ! व्रजभुवि सञ्चरन्त्या त्वया किमद्भुतमलोकि यदद्भुतं यल्लिख्य चित्रपटे विलिख्य ममाग्रे उपनीतम् । तव कुतुकेनैव मम जातिजीवनञ्च समस्तं गतम् ।

यस्याः श्यामदेवतायाः कटाक्षोर्मयो मम सौहित्यं सुखं कुर्व्वन्तीति हेतोः किमानन्दद्रववर्षिणः, अथवा मम पीडां कुर्व्वन्तीति ज्वालाहलोल्लासिनः ।

तत्र निशायां किं सदैव स्वप्नो भूयात् यस्मिन् स्वप्ने स नीलतमो मयाऽलोकि ।

---

प्रकाशितः । यावदाश्रयशक्तिभेदाच इत्यभिधीयते ।' अत्र जीवगोस्वामिमतमधोदर्शितं तयोः पूर्वरागयोरुदाहार्य्यम्—'अतएवात्र शास्त्रेषु श्रूयते राधिकादिषु । पूर्व्वराग-प्रसङ्गेऽपि प्रकटं रागलक्षणम्' । तत्पश्चात् तयोरुदाहृते श्लोकद्वये 'इन्दीवराक्षी'त्यादौ वैष्णवकविरचितेषु गीतेषु च नाटकाद्यभ्यो रसः शृङ्गारास्वादनीयः । 'इन्दीवराक्षी'त्यादि श्लोकः कविकर्णपूरगोस्वामिचरणानां श्लोकमध्ये प्रथम नायकार्थं ।

अथ चिन्तनम्—

आसंगो सिविणगओ मम्मप्फंसी महं क्खु अणुराओ।
पिअपरिअणो ण चउरो जीअण तुह णत्थि जीअणोबाओ (ट) ॥ ३८

स्मृतिः—'इन्दीवरा'दित्यादि ( ३३ श्लोकः )।

गुणकीर्त्तनम्—

धाम श्याममयातयाममधुरन्तल्लोचनानन्दनं
कस्तूरीघनसारकुङ्कुमरसामोदो य गात्रानिलः।
आलापः स सुधाम्बुधेरपि तिरस्कारी बभूवाधुना
सम्मोहाय विनोदनाय मनसः क्षोभाय लोभाय च ॥ ३९

अथोद्वेगः—

नो विघ्नः किमु गौरवं गुरुकुले, कौलीन्यरक्षाविधौ
न श्रद्धा किमु, दुर्जनोक्तिगरलस्वालास्तु किं नो भयम्।
उद्वेगाद्दलशश्मितं मम मनः कस्यापि मेघत्विषो
यूनः श्रोत्रगतैः क्षुणैरिव गुणैरस्तः क्षतं जर्झरम् ॥ ४०

आसङ्गः स्वप्नगतो मर्मस्पर्शी महान् खल्वनुरागः। प्रियपरिजनो न चतुरो जीवन! तव नास्ति जीवनोपायः। स्वाप्निकवस्तुनः शीघ्रं विस्मरणं भवत्वत आह—मर्मस्पर्शी विस्मर्तुं न शक्यतेऽस्यार्थः। कुतस्तर्हि तस्याभिलाष एवानुचितस्तत्राह—महाननुरागः। परिजनस्य चातुर्यं चेत्तदा तेन सह सङ्गसम्भावनया जीवनं रक्षितुं समर्थाऽस्मि। तदपि नास्तीत्याह—प्रियपरिजन इत्यादि।

तद्धाम कान्तिविशेषः। ननु मधुरवस्त्वपि पुनः पुनरास्वादनेन गतरसम्भवति, तत्राह—अयातयाममधुरं 'यातयामो गतरस' इत्यमरः। घनसारश्चन्दनः—एतेषां रसानामामोद इव च आमोदस्तद्विशिष्टः। अधुना तत्सर्वमेव मनसः सम्मोहाद्यर्थमेव बभूव।

'नो विघ्न' इत्यादौ शिरश्चालने नञ्, गुरुकुलस्य गौरवं किं न विघ्नः अपि तु भवत्येव

(ट) 'त्यजतु रात्रौ रात्रावश्चञ्चलः प्राणो'त्यादि मालत्यां स्थितात् भावात्, 'दुल्लहजणाणुराओ लज्जा गरुई परवसो अप्पा। पिअसहि विसमं पेम्मं मरणं सरणं णवरि एक्कं॥', इत्यादितो वा रसाख्यो वाधिकासिद्धोक्तिविजृम्भणेनैवास्वाद्यत्वादासाचिन्तनमयजीविता सुतरामुल्लसतीति तत्त्वम्। 'आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि' इति तु स्वाभाविकानुभावप्रथमप्यन्ते, यदा तु उत्कटा मनोरुजा, मादृशनिर्णय मनस्तदेव स्वल्पायमभिधानं, नच काव्योत्कर्षं नितरां जनयति।

पूर्व्वरागः कृष्णस्यापि स्यात्—इत्यतःपरं तथैव दर्शयते । तत्र प्रलापः—

उदयति शशी, श्रीराधाया न तन्मुखमण्डलं
स्खलति तिमिरं, प्रायेण्वर्य्या न नीलनिचोलकः ।
स्फुरति हरिताचक्रं, तस्या न नाम सखीगणो,
भ्रमति भुवने ज्योत्स्नैवास्या न देहरुचिच्छटा (ऋ) ॥ ४१

उन्मादः—

हे वासन्ति । विलोकिताद्य सुमुखी राधा त्वयास्मिन् वने ?
वातान्दोलितपल्लवैः करतलैर्'नो नेति (१९) किं भाषसे ?
यातानेन पथैव सा परिमलैस्तस्या यदन्धोद्धता-
स्त्वत्पुष्पेषु पतन्त्यहो न मधुपा भ्राम्यन्ति सर्व्वा दिशः ॥ ४२

एव । एवं कालीन्दरच्छायामपि अङ्गाऽस्त्येव, किं कर्त्तव्यम् । उद्वेगान्मम मनोऽनवस्थितं जातं, ततस्तत्सुकरमि प्रतिबन्धकं भवतीत्यर्थः । तस्मात् कस्यापि यूनो गुणैर्मम मानःकरणं जर्ज्जरं जातम्—घुणैरिवेति—घुणाः कीटविशेषा यथा काष्ठं जर्ज्जरं कुर्व्वन्ति ।

तदानीमेवोदितचन्द्रं राधिकामुखं मत्वा हर्षो जातः, पश्चात्तस्मिन् वैगुण्यं दृष्ट्वा कृष्णः सखेदमाह—उदयतीति । अयं राधामुखमण्डलं न भवति, किन्तु शशी चन्द्रः, यतोऽधुनैवोदयति, तन्मुखमण्डलन्तु सदा प्रकाशमानमेव । एवमन्धकारं रात्रिकालीनवस्त्रं मत्वाऽह । इदं प्रायेण्वर्य्या निकृष्टमपि नीलवस्त्रं न भवति, किन्तु तिमिरं, यतश्चन्द्रोदयात् स्खलति, इदन्तु न । तस्याः सखीगणो न, अपि तु हरितां दिशाचक्रं, यत चन्द्रोदयेनैव स्फुरति प्रकाशते, तेषान्तु सर्व्वदैव प्रकाशः । एवमियन्तस्या देहरुचिच्छटा न भवति, किन्तु ज्योत्स्नैव—यतो भुवनमध्ये इतस्ततो भ्रमति, सा तु सदैकरूपैव (१८) ।

हे वासन्तीति । नो नेतीति—मया राधिका न दृष्टेति प्रभाषसे चेत्तदा त्वद्वचनं मिथ्यैव,

(ऋ) निश्चयान्तेन सन्देहालङ्कारेण सूचितो दृढ़्यो नायकस्य—'नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः' इतिवदुपमेयः । 'तत्' 'अस्याः' इत्यादि पदेन पूर्व्वानुभूतानामामोदसम्पन्नानां आधराणीनां परामर्शः । तेन च सूचितेन साहृश्येन तदानीन्तनवैधुर्य्यस्य प्रकाशः । अत्र विधेयाविमर्शदोषस्पर्शः पद्यमेतत् कथञ्चित् गर्ह्यं करोति ।

(१८) एव (ग) (ङ) पुस्तकयोः । 'सदैकरूपैवे'ति (क) पुस्तके,'सदैकरसरूपैवे'ति (घ) (ङ) पुस्तकयोः ।

(१९) 'नो नेति' इति (ग) (घ) पुस्तकयोः पाठः । नञर्थं 'नो' इत्याकारान्तस्याव्ययस्य प्रयोगः कोषेषु दृश्यते, अतो नूनं नोकारादिकपाठाप्रचलनाय कश्चिन्नोऽयमात्राणामाकारः प्रचलनार्थोपरिदर्शित पाठ एव ग्राह्यः ।

अथ व्याधिः—

नो कथ्यते किमु कथाविषयो यदि स्या-
न्नो गोप्यते किमु भवेद्यदि गोपनीयः ।
आपच्यमान इव हृद्व्रण एष भावः
कृष्णस्य कामपि दशां भजते न विद्मः ॥ ४३

जड़ता—त्वां स्वप्नलब्धमवलोकयितुं विलिख्य
वैवर्ण्यमाप तव वर्णविलोकनेन ।
तूलीग्रहे सति कराजनि तूलिकेव
चित्रोद्यताजनि हरे ! स्वयमेव चित्रम् ॥ ४४

मरणममङ्गलत्वेन न वर्ण्यते, मूर्च्छा तु वर्ण्यते । तद्यथा—

निखिलेन्द्रियसंवर्त्ते श्यामसुधाधाममधुरिमावर्त्ते ।
मग्नानन्दविवर्त्ते मातर्नातः परं वर्त्ते ॥ ४४

केचित्तु—"नयनप्रीतिश्चिन्ता सङ्कल्पः स्वप्नविच्छेदः ।
कार्श्यं विषयनिवृत्तिर्ह्रीनाशः स्यादथोन्मादः ॥     Rasasudhakara

• किन्त्वनेनैव पथा सा राधिका गता, यस्मात्तस्याः परिमलैरन्धीकृता भ्रमरास्तत्पुष्पेषु न पतन्ति, किन्तु तस्याः सुगन्धग्रहणार्थं भ्राम्यन्ति ।

यदि कश्चिदर्थः कथाविषयः स्यात्तदा किं सोऽर्थो न कथ्यते अपि तु कथ्यत एव । एवं यदि गोपनीयः स्यात्तदा किं न गोप्यते, अपि तु गोप्यत एव । कृष्णेन तु हृदिस्थभावस्य निर्व्वचनासामर्थ्यात् स तावन्न कथ्यते न वा गोप्यते । अतः कृष्णस्य भावः कामनिर्व्वचनीयां दशां प्राप्नोतीति न विद्मः । एष भावः कीदृशः ? ईषत्पच्यमानहृद्व्रण इव— स यथा सर्व्वैरदृश्यः सन्नन्तरे पीडां जनयति तद्वत् ।

वर्ण्यते—हे हरे । त्वां विलिख्यावलोकयितुं तव चित्रोपयोगिवर्णादर्शनमात्रेणैव वैवर्ण्यस्वरूपसात्त्विकविकारमपि । तदनन्तरञ्चित्रार्थन्तूलीग्रहणे सति कम्पाऽजनि । तदनन्तरञ्चित्रायोद्यता सती स्वयमेव चित्रमजनि जडा बभूवेत्यर्थः ।

अधुना पूर्व्वरागावस्थयाऽत्यन्तव्याकुला श्रीराधा सखीं प्रत्याह—हे मातः सखि । सर्व्वेन्द्रियाणां संवर्त्तः प्रलयो यत्र तथाभूतानन्दविवर्त्ते । कथम्भूते ? श्यामसुधामयदेहस्य माधुर्य्यरूप आवर्त्ते भ्रमियन्त्रे । तत्र निमग्नाऽहमतःपरं न वर्त्ते न जीवामीत्यर्थः तत्क्षणे मूर्च्छिता बभूवेति भावः । 'संवर्त्तः प्रलयः कल्प' इत्यमरः । एवं सति नित्यसिद्धानां मूर्च्छापर्य्यन्तदशा वर्ण्यते, ततोऽधिका नाप्नोति ज्ञेयम् (च) ।

मूर्च्छा मृतिरिति कथिता दशा दशैमास्तु पूर्व्वरागस्य ।
स च ललनायाः पूर्व्वं पश्चान्नेतुः समाख्येयः (ख) ॥"

अथ नैलः कौसुम्भो माञ्जिष्ठश्चाथ हारिद्रः ।
रागश्चतुर्व्विधोऽतश्चातुर्व्विध्येन हि प्रकृतेः ॥ ७६ का ॥

अतः पूर्व्वरागात् पाकत इत्यर्थः । नैलो नील्या रक्तः ।

नैलः स एष कथितो न कदाचिद्ध्रसति शोभतेऽत्यर्थम् ।
कौसुम्भः स हि विदितः स्थित्वाऽपैति प्रशोभते पूर्व्वम् ॥
माञ्जिष्ठः स हि यः किल नापैत्येवातिशोभतेऽजस्रम् ।
हारिद्रः स तु बोध्यो यात्यपि न च शोभते यस्तु (ग) ॥ का

स्वप्नविच्छेदो निद्राक्षयः । केषाञ्चिन्मते पूर्व्वरागस्येमा दश दशाः कथिताः । स च पूर्व्वराग आदौ नायिकायाः पश्चान्नेतुर्नायकस्य कथितः । इदानीं पूर्व्वरागवर्णनप्रसङ्गे पूर्व्वोक्तो यः पूर्व्वरागपाकाज्जातो रागस्तस्य भेदचतुष्टयमाह—अथेति । प्रकृतेर्नायिकानायकयोः स्वभावस्य चातुर्व्विध्येन । नीलद्रव्यस्य घर्षणेन जातो वर्णो नैलो उच्यते । यथा नीलोवस्त्रस्य सुदृढक्षालनेनापि नीलिमा न ह्रसति, प्रत्युत शोभते च, तथा नैलरागोऽपि । यथा कौसुम्भवस्त्रस्य कौसुम्भरागः पूर्व्वं शोभते पश्चाद्वर्णकान्तौ तु ह्रस्त एव ह्रसति,

(ख) 'आदौ वाच्यः स्त्रियो रागः पुंसः पश्चात्तदिङ्गितैः ।' इति लौकिकपक्षे शोभना रीतिरिहाप्यालङ्कारिकसम्मता, तस्या एवात्राश्रयः कृतः । सकलनायकचूडामणौ श्रीकृष्णे च तस्यैव निर्देशो दार्शनिकमतविरोधं कमिह वहन्नपि सोढव्यः—तथा चोज्ज्वलनीलमणौ दार्शनिकशिरोमणिश्रीरूपगोस्वामिचरणाः—'यदपि माधवरागस्य प्राथम्ये सम्भवत्यपि । आदौ रागं मृगाक्षीणां प्रोक्तः स्याच्चारुताऽधिका ।' इत्यनेन कामदर्शनयोर्भेदविलासः ।

(ग) लौकिकरीत्याऽनुमितवर्णस्थितिसादृश्यादिकमुपमानमाश्रित्यैयं भेदकल्पना । एवमपि दशरूपकदर्पणादिनिबन्धेषु । 'न चातिशोभते यन्नापैति प्रेम मनोगतम् । तन्नीली रागमाख्याति यथा श्रीरामसीतयोः ।' इति दर्पणे नीलीरागलक्षणं तदुदाहरणञ्च । "कुसुम्भरागः स ज्ञेयो यश्चित्ते सज्जति द्रुतम् । अन्यरागच्छविव्यक्तो शोभते च यथोचितम् । मदाधारविशेषेषु कौसुम्भोऽपि स्थिरो भवेत् । इति [illegible] हानिरस्य न युज्यते ।" "आचार्याद्यनपेक्षो यः कान्त्या वर्द्धते सदा । अतिस्निग्धो माञ्जिष्ठरागोऽसौ राधामाधवयोर्यथा ।" [illegible] इत्युज्ज्वलनीलमणौ [illegible] ज्ञेयम् । हारिद्ररागस्य [illegible] 'श्यामाराग' इति संज्ञा, परं मम [illegible] भेदविवेचनमपेक्ष्य वर्णनम्—[illegible]

अथ विरहः—स च त्रिविधः, भावी भवन् भूतश्चेति। तत्र भावी यथा—

यास्यामि श्वः सुमुखि! मथुरामागतो राजदूतः
प्रत्यायातुं कति नु घटिका हन्त भावी विलम्बः।
नो जानीमः, प्रकृतिकठिनः कार्य्यभावस्तथा चेत्
सार्द्धं यान्तः प्रिय! मदसवः क्वापि कार्य्ये नियोज्याः॥ ४६

भवन् यथा—

यामीति कृष्णवचने|प्राणैर्विनिरुद्धकण्ठकुहरायाः।
बहिरेव भवितुमशक्तं प्रत्युत्तरमन्तरेव विजघूर्णे॥ ४७.

भूतो यथा—

सार्द्धं यन्निजदैवतेन न गतं दौरात्म्यमेतद्धि वो
जानीतावधिवासरश्च गणनागम्योऽस्ति लेखासु यः।
इत्याकर्ण्य वियुक्तगोपसुहृदः प्राणैः समं सद्दया-
मेकैकां प्रतिवासरं प्रियसखी रेखां दृशो लुम्पति॥ ४८

तद्वदन्यापि। कौसुम्भरागः शोभते, माञ्जिष्ठरागस्त्वत्यसमतिशयेन शोभत इति भेदो ज्ञेयः। यस्तु न शोभते शीघ्रं याति च स हरिद्रारागो ज्ञेयः। तेषां मध्ये कौसुम्भ, हारिद्रश्च प्राकृते, अप्राकृते तु केवलो माञ्जिष्ठश्चेति भेदो ज्ञेयः।

अधुना विप्रलम्भस्यावान्तरभेदं पूर्व्वरागं वर्णयित्वा क्रमप्राप्तस्यैव भेदान्तरं विरहं वर्णयति—अथेति। प्रत्यायातुमत्र पुनः प्रत्यागमने कति घटिका व्याप्य विलम्बो भावी? राजकार्य्यभावः प्रकृत्या स्वभावेन कठिनः।

भवन् वर्त्तमानो विरहः। अधुनैवाऽहं यामीति कृष्णस्य वचने सति तस्याः हृदयं यस्मात् प्राणाः कण्ठगता बभूवुः—अतस्तैरेव प्राणै रुद्धकण्ठकुहरायास्तस्याः कण्ठरोधेनैव प्रत्युत्तरं बहिरिव भवितुमशक्तं सदन्तर्हृदयमध्य एव विजघूर्णे। अत्र विरहजन्यपीडया ऽसामर्थ्यादेव तया नोक्तं प्रत्युत्तरं, कवीश्वरेण तु प्राणकर्त्तृककण्ठरोधनेनैव प्रत्युत्तर-स्फूर्त्तिनिर्गतमित्युत्प्रेक्षितम्।

हे प्राणाः भवद्भिर्निजदैवतेन सह मथुरागमनसमये यन्न गतम्, एतदेव वो युष्माकं दौरात्म्यं मया ज्ञातम्। म इति तेन कान्तेन मत्प्राणरक्षार्थं प्रेषिता या पत्री तत्र अद्यारभ्य त्रिंशद्दिवसे त्वन्निकटे मया गन्तव्यमिति योऽवधिवासरो वर्त्तते स तु भित्तौ मया दीयमानासु रेखासु गणनया गम्यो भवति, अतस्तं वासरं यूयं जानीत, ज्ञात्वा च तस्मिन् दिवसे तस्यागमने सति भवद्भिः शीघ्रमेव मद्देहात् गन्तव्यम्—इति प्राणैः सह वियोगयुक्ताया

त्वत्पल्लीप्रतिवेशपण्यजनताक्रय्यन्तु दध्यादिकं
क्रीत्वा सम्प्रतिपादितं प्रियजनैरश्नाति छद्मान्तरः॥ ५१

अथ सामान्यतो वर्णितस्य विभावस्यालौकिकतया विशेषमाह—

तत्रालम्बनं नायको नायिकाश्च।

तत्र कोऽसौ नायकः काच नायिका इत्यपेक्षायां नायकमाह—

सर्व्वशुद्धरससान्द्रकन्दलः सर्व्वनायकघटाकिरीटगः।
अत्यलौकिकगुणैरलङ्कृतो गोकुलेन्द्रतनयः सुनायकः (ऐ)॥८०का

सर्व्वशुद्धरससान्द्रकन्दलत्वं यथा—'शृङ्गारी राधिकाया'मित्यादि (१३श श्लोके)।

'सर्व्वनायकघटे'ति सर्व्वशब्दो धूर्त्तनायकवर्ज्जनपरः। 'अत्यलौकिकगुणै'-रिति विरुद्धाविरुद्धचमत्कारिगुणवान्। विरुद्धयन्नाभासते, न तु विरुद्धः स विरुद्धाविरुद्धः—'एकोऽनेकः परिच्छिन्नो व्यापी'त्यादिवदलौकिकगुणवति लौकिकगुणा अपि ज्ञेयाः।

एतावद्दिनपर्य्यन्तं कान्तेन सह विच्छेदो जातः, अवधिवासरे पुनरपि तेन मेलनं भविष्यतीति कालकृतविरहो भूतविरहः। मां विहाय श्रीकृष्णो दूरदेशे स्थित इति देशघटितविरहः प्रवासः। हे राधे! त्वद्विरहेण व्याकुलः श्रीकृष्णः सुहृदां यादवादीनां छन्देन शतानि गव्यानि नानम्देनात्ति। तथा तेरातीसं कवोष्णं दुग्धादिकमधिकं न भुङ्क्ते, किन्तु प्राणरक्षार्थं यत् किञ्चिदेव—अतएव केवलं श्वसित्येव जीवत्येव, न तु तस्य किञ्चिदपि सुखमत्र वर्त्तते। किन्तु तव पल्लीग्रामस्थस्य या प्रतिवेशपण्यजनता क्रयविक्रयादि-व्यवहारविशिष्टजनसमूहस्तेषां क्रय्यं क्रये प्रसारितं दध्यादिकं तस्याभिप्रायविद्भिः प्रियपरिजनैर्मधुमङ्गलादिभिः क्रीत्वा सम्प्रतिपादितं यत्नेन संस्कृतं तदेव छद्मान्तरः समश्नाति।

---

(ऐ) 'तत्रालम्बनं नायको नायिकाश्चे'त्यत्र नायकपदे यदेकवचनप्रयोग इतरत्र बहुवचन-विन्यासश्च तत् ग्रन्थकृतो स्वसम्प्रदायिमतसम्मतिं स्फुटमावेदयति। न चानेन तावदितरा-लङ्कारिकवर्गकल्पिते प्राकृतनायकसङ्घे दोषदृष्टिराघुष्यते यतस्तस्मिन्नपि महनीय-महिमत्वादिगुणगणभूषितता वरीवर्त्ति। तथापि 'सर्व्वशुद्धे'त्यादिपदैस्तावदेकस्यैव परामर्शो भवति—स चादयः साक्षात् भगवान् श्रीकृष्णेत्यन्वर्थनामरूपप्रच्छन्नो मन्मथजनकोऽपि स्वयं मन्मथमन्मथः। श्रीमद्भागवतमहापुराणे भक्तिशास्त्रे च बहुधा विजृम्भित-स्तस्य निर्द्देशक्रम इत्यलम्। 'सर्व्वशुद्धरसे'त्यादि पदस्यैकधा व्याख्या मूले लक्षिता, अन्यथा

ते यथा—

कृती कुलीनः सश्रीकस्त्यागी यौवनरूपभाक् ।
दक्षोऽनुरक्त उत्साही तेजोवैदग्ध्यभूषितः ॥ ८०(क)का

A little differently read in Bhagavata-purana-I. 16. 26 29.

अधिकास्तु—

सत्यं शौचं दया कान्तिरास्तिक्यं धैर्य्यमेव च ।
औदार्य्यं प्रश्रयः शीलं क्षान्तिः प्रज्ञोऽनहङ्कृतिः ॥ ८०(ख) का

इत्यादयो निजाः ।

तत्र 'नायकघटे'ति तद्भेदानाह—

उदात्त उद्धतश्चैव प्रशान्तो ललितस्तथा ।
सर्व्वेऽमी धीरशब्दाद्याश्चत्वारो नायकाः स्मृताः ॥ ८१का·

सर्व्वशब्द इति—धूर्त्तनायकं वर्ज्जयित्वा या सर्व्वनायकघटा तस्याः सङ्कटमपि । यद्यपि धीरोद्धतस्य गुणाः धीरप्रशान्तस्य गुणाश्च परस्परं विरुद्धा भवन्ति तथापि श्रीकृष्णे तेषां विरोधो नास्ति—यथा श्रीकृष्ण एकः सन्ननेकोऽपि भवति, एवं परिच्छिन्नः सन् व्यापकोऽपि भवति, तथैव विरुद्धगुणाश्रयोऽपि भवति। अलौकिकगुणवतीति—लोके न प्रसिद्धा ये गुणास्तद्वति श्रीकृष्णे लोकप्रसिद्धा गुणा अपि ज्ञेयाः, किन्तु लोकस्यासौ मायिकाः, भगवन्निष्ठा अमायिका इति भेदो ज्ञेयः ।

प्रश्रयो नम्रता । अमी उदात्तादयश्चत्वारो 'धीर' शब्द आद्य आदौ येषां तथाभूताः । तथा,च धीरोदात्त धीरोद्धत धीरशान्त-धीरललिता इतिसंज्ञा भवन्तीत्यर्थः ।

---

च वैष्णवरसशास्त्रकारैः पदं तद्व्याकृतं, तथात्वे 'शुरद्धरस'पदेन मधुररसस्यैव परिग्रहः, मम्मतौ—तस्यादितररसानामनुपपत्तिः प्रागेवास्माभिरुल्लिखिता । 'वृन्दारण्ये विहरतो' इत्यादि स्कन्दपुराणीयं पूर्वप्रदर्शितं पद्यं, 'केसवरहितं पेम्मो णहि होइ माणुषे लोए । जइ होइ कस्स विरहो विरहे होन्तम्मि को जीअइ ।' इति 'जयति ते' इत्यादिकस्य श्रीमद्भागवतीयस्य (१०।३१।) श्लोकस्य तात्पर्य्यप्रकटनप्रसङ्गे तोषणीकृता धृतश्च न्यायस्तमार्थं प्रमाणम् । 'गोकुलेन्द्रतनये'ति विशेषणेन व्रजपुरसम्बन्धस्य सुमधुरत्वे निदानमिति च सूचितमिति प्रतिभाति । 'दधिरोष्ठपुटमस्ते'त्यादि गौतमीयतन्त्रे श्रीगोपीजनवल्लभं व्रजपुरस्थापाठीनाभिप्रायकम् । भक्तिरसस्य प्राधान्येन सुष्ठुत्वेन च तत्रैव प्रकटनम् । 'गोगोप-गोपिकासङ्गे यत्र क्रीडति कंसहा' इति 'व्रजपुरवनितानां

धीरशब्दाद्या इति—धीरोदात्तादय इत्यर्थः । तत्र धीरोदात्तो यथा—

आत्मश्लाघारहितः क्षमी गभीरो महासत्त्वः ।
धीरोदात्तः स्थेयान्निगूढमानो दृढव्रतः सुवचाः ॥ ८२ का

आत्मश्लाघानिरतो मायी चण्डश्च चपलश्च ।
धीरोद्धतः स कथितोऽहङ्कृतिभङ्कारनिःशङ्कः ॥ ८३का

उभयगुणव्यतिरिक्तो भूयान् साधारणैश्च गुणैः ।
धीरप्रशान्तसंज्ञो भवति द्विजवैश्यादिकः साधुः ॥ ८४ का

मृदुलः कलाकलापी निश्चिन्तो मधुरवैदग्ध्यः ।
प्रथमरसप्रधानो ललितकथो धीरललितः स्यात् ॥ ८५का

सर्व्वोऽनुकूल-दक्षिण-शठ-धृष्टत्वेन षोड़शधा ॥ ८६ का

केषाञ्चिन्मते धीरललितस्यैवानुकूलादिभेदाः, न सर्व्वेषाम् ।

महासत्त्व उदारचित्तः, स्थेयानतिशयस्थिरः । अहङ्कृतिरहङ्कारस्तेन यो भङ्कार आत्मश्लाघाबोधकशब्दप्रयोगस्तत्र निःशङ्कः । उभयगुणाभ्यां धीरोदात्तगुणधीरोद्धतगुणाभ्यां रहितो धीरशान्तः साधुर्व्यवहर्त्तिसाधारणगुणैर्व्विशिष्टः स भूयान्, धीरोदात्तादिः स्वल्पः, तथा च ब्राह्मण-वैश्यादयो बहव एव धीरशान्ता ज्ञेयाः । कलेति—रसोपयोगिचतुःषष्टिकलाभिर्भूषित इत्यर्थः । मधुरे शृङ्गाररसे वैदग्ध्यं यस्य, शृङ्गाररस एव प्रधानं यस्य ।

---

वर्द्धयन् कामदेव'मित्यादि च तदेकशिष्टं तदेकान्तिकत्वं च सूचयतः । 'सर्व्वनायकघटे'ति 'सर्व्व'शब्दो धूर्त्तनायकवर्ज्जनपर' इति कृत्वा यत् घ्यास्यातो मतं तत् सार्व्वत्रिकं सर्व्ववादिसम्मतञ्च । तथा च 'प्रोक्तो धूर्त्तादिभेदस्तु सर्व्वैः सम्मत्यभावतः' 'शाठ्यधार्ष्ट्य परं नान्यप्रोक्त उपपतेरुभे । हर्य्यो तु सर्व्वं नायुक्तं तत्तद्भावस्य सम्भवात् ॥' इति श्रीमतां नीलमणिकृतामाशयव्याख्यानपुरःसरमभिधानम् । इह कौस्तुभेऽपि च 'लीलावशात् कदाचन धृष्टोऽपि शठश्च क्वापि" (८६ का)। नवतारुण्यत्व-नारीमोहनत्व-नित्यनूतनत्वातुल्यकेलिसौन्दर्य्यप्रष्टवंशीस्वनाढ्यत्वादयो बहवस्तत्रालौकिकगुणाः प्रामाणिकरसग्रन्थान्तरतो लभ्याः । 'यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवन्ति । कुर्व्वन्ति चैषां मुहुरात्ममोहं तस्मै नमोऽनन्तगुणाय भूम्ने ॥" इति श्रीमद्भागवते साधारण्येन, श्रुतिप्रतीकप्रदर्शितेन विरुद्धाविरुद्धनित्यचमत्कारिगुणत्वेन वा तेषां

एषां लक्षणम्—

एकाश्रितोऽनुकूलः समरागो दक्षिणस्तु सर्व्वासु ।
शठ एकत्रैव रतो वहिरन्यत्र प्रियोऽप्रियो मनसि ॥ ८७का

अपराद्धश्च विशङ्को दृष्टे दोषेऽपि मिथ्यावाक् ।
तर्ज्जनताड़नयोरपि कृतयोर्निर्लज्ज एव धृष्टः स्यात् ॥८८का

षोड़शविधास्त एते पुनस्त्रिधा चोत्तमादिभेदेन ।
अष्टाधिकचत्वारिंशद्भेदा नायकाः कथिताः ॥
पुनरेते स्युर्दिव्या दिव्यादिव्या अदिव्याश्च ।
स चतुश्चत्वारिंशच्छतमेकं तेन तद्भेदाः ॥

एषामनुकूलादीनां लक्षणमाह—एकामेव नायिकामाश्रितोऽनुकूलः, सर्व्वासु नायिकासु समरागो दक्षिणः, एकस्यामेव नायिकायां रतोऽन्यत्र नायिकायां मनस्यप्रियः, बहिस्तु कपटेन प्रियः शठः ।

पुनरेतेऽष्टचत्वारिंशद्भेदा नायका दिव्या अदिव्या दिव्यादिव्याश्च भवन्ति, तेन चतुश्चत्वारिंशता सहैकशतं नायकभेदा भवन्ति ।

---

परामर्शः । एषान्तु वैष्णवशास्त्रनिरूपितेषु 'लीला'पदेन प्रायशः परिग्रहो भवति । श्यामसुन्दरमहिमोल्लासवदौ 'लीला प्रेम्णा प्रियाधिक्यं माधुर्य्यं वेणुरूपयोः । इत्यसाधारणं प्रोक्तं गोविन्दस्य चतुष्टयम् ॥' सेषा लीला नित्यैव—तथा हि "यथा च सूर्य्यस्य वर्षदेश- विविधप्रमातॄ सदैवोदयः सदैव पूर्व्वाह्णः सदैव मध्याह्न इत्यादि तथैव कृष्णस्यापि ब्रह्माण्डभेद- प्रमातॄ सदैव जन्म सदैव बाल्यं सदैव बकाद्यसुरमोक्षं सदैव मथुराप्रस्थानमित्येवं सर्व्वा एव प्रकटलीला नित्या एव' इति ग्रन्थान्तरे । लीलयैवाभिव्यक्तिमंगलतो भक्तसाधक- सम्प्रदायमध्येऽपि भवति । प्राकृतनायकेषु सदामहिमत्वादिलौकिकगुणानां समन्वयेऽपि न नैर्मल्यविभाव्यं विनान्यं ख्यातेति गाढ़ं तत्त्वम् । एतदपि च कश्चित् प्रतीच्यभावुक- चूड़ामणिः (mystic) प्रमाणान्तरं—

'If in the emotion that this sight cause you, you do not proclaim that it is beautiful and if turning your gaze into your own heart, you do not then feel the charm of beauty, it is vain for you in such a mood to seek for intelligible beauty, for you would only seek it with what is impure and ugly.'—Plotinus

धीरप्रशान्तशठयोर्द्दृष्टस्य च भेदवर्ज्जितैरपरैः ।
लीलावशतः सर्व्वै रविरुद्धत्वाद्विरुद्धैऽपि ।
गोकुलराजकुमारस्तेन परं सर्व्वनायकाधीशः ॥
धीरोदात्तो गुरुषु ज्ञातिषु धीरोद्धतो विपक्षेषु ।
मायाविषु नियतमसौ व्रजपुर्य्यां धीरललितः स्यात् ॥
अनुकूलो राधायां सर्व्वास्वपरासु दक्षिणः कथितः ।
लीलावशात् कदाचन धृष्टोऽपि शठश्च कुत्रापि॥(ओ)८५का

अथानुकूलादीनां क्रमेणोदाहरणानि—तत्रानुकूलो यथा—
नान्यस्याः सदनं (२१) प्रयाति स मया सम्प्रार्थ्यमानोऽपि च
प्रायो मे हृदयन्दुनोति ललिते ! तासां मनस्तापतः ।

धीरप्रशान्त-शठ भेदभिन्नैरपरैर्धीरललितधीरोदात्तादिभिर्भेदैर्विशिष्टो गोकुलराजकुमारः कदाचिल्लीलावशाद्विरुद्धाविरुद्धधीरप्रशान्तादिभिः सर्व्वैरेव भेदैर्व्विशिष्टश्च भवति। तेषां परस्परविरोधेऽपि सति श्रीकृष्णेऽविरुद्धत्वात्तेन हेतुना श्रीकृष्ण एव परं सर्व्वनायकाधीशः। एतदेवाह—गुरुषु ज्ञातिषु च धीरोदात्तः, विपक्षेषु मायाविषु च धीरोद्धतः, धीरप्रशान्तो भक्तेषु, व्रजपुर्य्यान्तु सदैव धीरललितः।

referred to by Maeterlinck in his *Le Tresor des Humbles* and translated and discussed by M. Clark in his *Maurice Maeterlinck—Poet and Philosopher.*)

( ओ ) नन्दनन्दनस्य वृन्दावनरसकन्दस्यातुलगुणवृन्दारिकाधिकतरानन्दचिन्मकरन्दस्य गोपीरतिरवरोपियो भेदुरजलधरशोभिनः सकलकलाकलापमीवरस्य पुरुषवरस्य विभिन्नथप-देशाश्रयेणैव तावन्नानात्वतो निर्द्देशः।

भरतनाट्यशास्त्र-शृङ्गारतिलक-दशरूपक - भावप्रकाश - रसमञ्जरी-रसार्णवसुधाकर-साहित्यदर्पण-रसामृतसिन्धूज्ज्वलनीलमण्यादिषु निबन्धेष्वित परमिह्यपि नायकभेदप्रस्तावा-वतरणम्। तथ्यास्य भगवतः सुनायकत्वं परमन्येषां प्राकृतानां नायकत्वं न स्वाकृतमिति प्रदर्शयितुं तद्भेदावतारः कृतो वा। भरतीये रसामृतसिन्ध्वावंशतश्च चतुर्णामेव धीरोदात्ता-दीनामुल्लेखः। भरतीये तु नाट्यप्रोक्तेषु नायकभेदेषु 'देवा धीरोद्धता ज्ञेया स्युर्धीरललिता

(२१) 'सदयं प्रयातीति मुद्रितपुस्तके दृष्ट' पाठो दृश्यते।

एवं क्वचिच्छठोऽपि। यथा—

एकत्रैव लतावने निजनिजैरालीजनैः क्वचित्
क्रीडाकुञ्जगृहाङ्गने व्यवहितो दूरेण दृष्ट्वा प्रिये।
वंशीकूजितसूचितातिनिभृतं चन्द्रावलीं लम्भयन्
सङ्केतन्त्वरसा रसादभिसरन् राधां हरिः पातु वः ॥ ५५

अथ विभावप्रसङ्गे नायकस्य सहायाः सखायः, एवं नायिकायाः सख्यः। तेनादौ नायकस्य सहाया लक्ष्यन्ते।

**सहायाः स्युः सहचरास्ते भवन्ति चतुर्विधाः।**
**सखायश्च प्रियसखास्तथा नर्मसखा अपि ॥**

अथैकस्मिन् कुञ्जे सखीभिः सह राधाचन्द्रावल्यौ। लताऽन्तरितः श्रीकृष्णो दूरत एव दृष्ट्वा राधां चन्द्रावलीवियुक्तां कर्तुं दूरे सङ्केतकुञ्जं गत्वा मुरलीशब्देन चन्द्रावलीमाजुहाव, तं शब्दं चन्द्रावल्येव शृणोति, नान्या तस्या अचिन्त्यप्रभावत्वात्। तच्छ्रुत्वाऽतिहृष्टा चन्द्रावली सखीभिः सहिता केनचिन्मिषेण तत उत्थाय तदैव सङ्केतस्थलं जगाम। ततः श्रीकृष्णः सुखेन राधिकामभिससार। एतदेवाह-एकत्रेति। एकत्रैव लतावनं याभ्यामेवम्भूते प्रिये राधाचन्द्रावल्यौ लताऽन्तरितः श्रीकृष्णो दूर एव दृष्ट्वा वंशीशब्देन सूचितमतिनिभृतं सङ्केतस्थलं लम्भयन् स्वयन्त्वरया वेगेन रसादानन्दात् राधामभिसरन् वो युष्मान् पातु।

---

'उदात्ताद्यैश्चतुर्भेदैस्त्रिभिः पूर्णतमादिभिः (पूर्णपूर्णतर-पूर्णतमाख्यैरिति)। द्वादशात्मा चतुर्विंशत्यात्मा मध्यादियुग्मतः। नायकः सोऽनुकूलाद्यैः स्यात् षण्णवतिधोचितः॥' इत्युज्ज्वलनीलमणौ। तत्र नीलमणौ कृष्णे उत्तमादिभेदकल्पनं न सम्यक्, अतस्तत्स्थले पूर्णतमादित्रितयेनैव भेदकल्पना। दिव्यादिभेदस्यापि स न विषयः—इतरनायकेष्विव न तत्रोपपत्त्यासङ्गतिरपि, अतः संख्यानयनवैमत्यमित्यलं बहुना। एषां भेदानां प्रत्येकशो भिन्नान्युदाहरणानि दर्पणनीलमण्यादिषु निबन्धेषु स्पष्टानि। अनुकूलनायकस्य विश्वप्रसिद्धमुदाहरणं रामायणकथानायकः सुचरितनिकषो दिव्यादिव्यः श्रीरामचन्द्रः, वैष्णवतन्त्रस्थितौ तु 'राधायामेव कृष्णस्य सुप्रसिद्धाऽनुकूलता। तदालोके कदाप्यस्य नान्यासङ्गः स्मृतिं व्रजेत्॥' इति कृत्वा तस्यैव तथात्वेन निर्देशो ज्ञेयः एवमेव श्रीगीतगोविन्दे "राधामाधाय हृदये तत्याज व्रजसुन्दरीः॥" अनुकूलस्य दक्षिणस्य च तस्य देशपात्रकालादिप्रभूततमभेदकलनया धृष्टत्वं शठत्वं वा कादाचित्कमिति नात्याज्यम्। मधुररसकदम्बस्य भगवतो धृष्टत्वेन

अथ नायकानामुक्तानियतसामान्यगुणादतिरिक्ताः सत्त्वजा गुणा उच्यन्ते—

शोभा विलासो माधुर्य्यं गाम्भीर्य्यं धैर्य्यतेजसी ।
औदार्य्यं ललितञ्चेति गुणा अष्टैव सात्त्विकाः ॥ ९१ का

तत्र शोभा (23)—

शौर्य्यं दाक्ष्यञ्च सत्यञ्च महोत्साहोऽनुरक्तता ।
घृणा नीचेऽधिके श्रद्धा (A) सा शोभा मिलितोच्यते ॥ ९२ का

यथा— शौर्य्यं शत्रुषु दाक्ष्यमात्मकुहने सत्यं भुवो धूःक्षये
रागो गोकुलमध्यवर्त्तिषु महोत्साहो गिरेर्धारणे ।
अहेयं पितृमातृबन्धुषु हरे शोभैव ते सर्व्वथा (24)
नीचे मय्यघृणेति केवलमसावेकाङ्गहीनाऽभवत् ॥ ५६

सत्त्वजा इति- शुद्धसत्त्वाविर्भूता इत्यर्थः।
मिलितेति—शौर्य्यादय, परस्परं मिलिता, सन्त एकाधिकरणे वर्त्तन्ते चेत्तदा शोभोच्यते।

आत्मकुहने रासारम्भे गोपीभिः सह प्रेमपरीक्षार्थं स्वकृतकपटे दाक्ष्यं सम्यक्तया विप्रकारित्वमित्यर्थः। धूः पृथिव्या भारक्षये। हे हरे! मयि नीचे ते तवाघृणा अकृपा, अतस्तव शोभैकाङ्गहीनाऽभवत्।

---

(A) भरतनाट्यशास्त्र दशरूपक रसार्णवसुधाकरादिष्वेषां विस्तारः। यद्यप्यर्वाचीन-ग्रन्थेष्वाकरादितो लक्षणलक्ष्ये किमपि वैलक्षण्यं न तत् सर्वत्रानुपादेयम्। वस्तुतस्तु मुनिकृतलक्षणानां भित्तिमूलत्वे स्वीकृतेऽपि स्मृतिमान्द्यात् व्याख्यानभेदात् मतान्तर-कल्पनस्याप्यादरणीयत्वान्न किमपि सिद्धान्तपक्षे लक्षणवैलक्षण्यविवादावसरे वक्तव्यमस्ति। लक्षणवैलक्षण्यमपि गुणलक्ष्य एव सुतरां पर्यवसितं। 'अधिके स्पर्द्धे'ति दर्पणकारादीनां लक्षणे पाठो लभ्यते। 'अधिके श्रद्धे'ति कौस्तुभकृतः। इदानीन्तनलभ्ये भरतीये नाट्यशास्त्रे २४शाध्याये ( निर्णयसागरमुद्रिते तु २२शाध्याये ) शोभालक्षणमित्थमुद्दिष्टम्—'दाक्ष्यं शौर्य्य-मथोत्साहो नीचार्थेषु जुगुप्सनम्। उत्तमैश्च गुणैः स्पर्द्धा यत्र शोभेति सा स्मृता॥' स्पर्द्धास्थाने श्रद्धायाः ग्रहणं वैष्णवाचारसम्मतमिति नास्ति कापि विप्रतिपत्तिः, उदाहरणे च चमत्कारिताप्रसङ्गोऽस्मादेव कारणाल्लक्ष्यः। एवमपि विलासादिगुणानां प्राचीनमत

---

(23) अयमंशः (ख) (ङ) पुस्तकयोर्नास्ति।

(24) 'सर्व्वदे'ति, (क) (ख) (ङ) पुस्तकेषु पाठः।

रम्यवेशविभूषाद्यैर्विलासः शिल्पकौशलम् । ६२का-

तच्च स्वविषयमन्यविषयञ्च। यथा

क्वचिद् गुञ्जाधातुस्तवकदलबर्हप्रभृतिभि-
र्वनेऽनल्पाकल्पैः प्रणयिसखिभिर्भूषिततनुः।
स्वयञ्चैषा वेशानतिकुतुकतः शिल्पकुशल-
स्ततोऽप्युच्चैर्विलासान् हरिरहह तेरैव तनुते ॥ ५७

अन्यविषयेऽन्यदपि।

गुञ्जाशिखण्डगिरिधातुदलप्रसूनै
राधां विभूष्य मुरलीञ्च करे निधाय।
पीताम्बरञ्च परिवेष्ट्य हरिः प्रसीद
हे कृष्ण मय्यनुगते कृपयेत्यवादीत् ॥ ५८

'संक्षोभेऽपि निरुद्वेगभावो माधुर्यमिष्यते।' इति केचित्।
केचित्तु 'सर्वावस्थाविशेषेषु माधुर्यं रमणीयता।' Sahityadarpan Chap III under नायिकालङ्कार।

वस्तुतस्तु

येन केनापि वेशेन माधुर्यं रमणीयता (A)। ६४का

यथा—

क्व रत्नालङ्काराः क्वचन वनवेशो (25) सुरहरे
न तत् पश्याम्यस्मिन् यदतिमधुरत्वं न लभते ॥ ५८

**भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यमविकारिता । ६५ का**

'नो कथ्यते किमु कथाविषयो यदि स्या'दित्यादि (४३पद्यश्लोके) ।

**स्वभावादप्रतिच्यावो धैर्य्यं शोके महत्यपि ॥ ६६ का**

यथा— किमेषा तापिच्छद्रुमलतिकया मङ्गुलधिया
स्वकण्ठं तन्वङ्गी शिवशिव दृढ़ं पीड़ितवती ।
स्थिता वा कालिन्दीपयसि मम वक्षःस्थलधिये-
त्यसुष्येते तर्काः परमहह जीर्य्यन्ति हृदये ॥ ६०

**अवक्षेपावमानादेः प्रयुक्तस्य परेण यत् ।**

**निर्वापकं भवेत्तेजः— ६७का**

यथा— मदान्धेनेन्द्रेण स्वमखविधिभङ्गव्यसनिना
महावृष्टिं सृष्टां व्रजनगरनाशाय कलयन् ।
गिरीन्द्रं श्रीकृष्णः करकिसलयाग्रेण मृदुना
सलीलम्बिभ्राणो व्रजमवितवांस्तञ्च जितवान् ॥ ६१

स्वमतमाह—वस्तुतस्त्वित्यादि। उरसि वक्षःस्थले गुञ्जादाम एवं स्तवकयुक्तलतावलयश्च —अस्मिन् श्रीकृष्णे तद्वस्तु न पश्यामि यदतिमधुरत्वं न लभते।

महत्यपि शोके स्वभावादप्रतिच्यावोऽचलनं धैर्य्यम्। माथुरविरहेऽत्यन्तव्याकुलां राधां स्मृत्वा स्वयमपि व्याकुलः श्रीकृष्णः स्वमतमाह—किमेषेति। एषा मङ्गलबुद्ध्या तमालद्रुमस्य शाखया स्वकण्ठं पीड़ितवती, अथवा मद्वक्षःस्थलधिया कालिन्दीजले स्थितेति नानाविधतर्का अमुष्य श्रीकृष्णस्य हृदय एव जीर्य्या भवन्ति—न तु बहिः कोऽपि विकारः प्रकटीभवतीति भावः।

परेण कृतस्यावक्षेपावमानादेः प्रतिकारं विनैव स्वत एव निर्व्वापजनकं यद्भवति तत्तेजः। स्वस्य मखस्य भङ्गाज्जातं व्यसनं श्रीकृष्णे कटूक्त्यादिकं यस्य। तेन सृष्टां वृष्टिं पश्यन्।

धैर्य्यादि लक्षणं दशरूपकादिसम्मतं, द्वितीयन्तु नाट्यशास्त्रादौ नायिकासात्त्विकभावानामन्यतमस्य माधुर्य्यस्य निदर्शनकम्। इत्थं कुत्रचित् ग्रन्थकृन्निर्नायकगुणलक्षणविचारे प्राचीनोक्तनायिकागुणसंवादस्वेच्छितः, स च न सर्व्वथा शोभन इत्यलम्।

(25) 'क्व वनचरवेश' इति (क) पुस्तके पाठः।

अथ नायिकाभेदाः—

तत्र 'परोढ़ां गणिकाञ्चापि वर्जयित्वाऽत्र नायिका'इति परोढ़ागणिकयोः साधारण्येन रसाभासपरत्वमेवेति (26) लौकिक एव । अलौकिके तु कृष्णाधिकरणक-रतेस्तदेकमात्रनिष्ठत्वान्न रसाभासः, 'अनौचित्यप्रवर्त्तिता आभासा' इति, तदभावात् (27) (D), प्रत्युतौचित्यमेव । तेन परकीयाऽवान्तरभेदमात्रं परोढ़ात्वमङ्गीकृत्य नायिकाभेदानाह—

स्वकीया परकीयेति नायिकाऽद्यौ द्विधा मता ।

मुग्धा मध्या प्रगल्भेति स्वकीया तु त्रिधा भवेत् ।

मध्याप्रगल्भयोर्भेदाः षड् धीरादिप्रभेदतः ॥ १०० का

धीरा, अधीरा, धीराधीरा - इति भेदास्त्रयः ।

कनिष्ठजेष्ठरूपत्वात्तयोर्द्वादशधा मतम् । १०१का

अनौचित्येन नरकमन्यादृशात्वयारिमित्याद्दिदोषेण प्राकृते प्रवर्त्तिता रसा आभासा भवन्तीत्यर्थः। पारिमित्यन्तु स्त्रियाः सम्पूर्णायष्टमसमये पुरुषस्यासामर्थ्यरूपं, श्रीकृष्णे त्वनन्तकोटिगोपीभिः सह विहारेऽपि सम्पूर्णसामर्थ्यम्, अतस्तासामेव पराभवो न तु कृष्णस्य, अतोऽत्र सम्पूर्णरस एव, अतएव कृष्णे तदभावादीश्वरत्वेनानौचित्यदोषाभावात्। परोढ़ात्वमिति—अप्राकृते परोढ़रसस्यापि रसमङ्गीकर्त्तव्येत्यर्थः।

---

पुष्णाति। देवानां कृष्णपक्षप्रपथत्वं कल्प्यम्। देवतानां मध्ये कृष्णदेवता वा श्यामतरुदलशोभिनी।

(D) अत्र 'तद्भावादि'ति पाठे कृष्णाधिकरणक रतेरनौचित्यभङ्गेन प्रकृतरसपरत्वादित्याकारोऽर्थः कल्प्यः। अप्राकृते रसाभासादिविचारोऽस्माभी रसस्वरूपोद्घाटन एव विहितः। अत्र तत्त्वे 'आसामहो चरणरेणुजुषामहं स्यां वृन्दावने किमपि गुल्मलतौषधीनाम्। या दुस्त्यजं स्वजनमार्यपथञ्च हित्वा भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्याम्॥' इति श्रीमद्भागवतपुराणीयो ग्रन्थः, 'नेष्टा यदङ्गिनि रसे कविभिः परोढ़ा तद् गोकुलाम्बुजदृशां कुलमन्तरेण। आशंसया रसविधेरवतारितानां कंसारिणा रसिकमण्डलशेखरेण॥' इति प्राचां मतस्य प्रमाणम्।

---

(25) 'परत्वमेवेति मतादौ लौकिक एवे'ति पाठः (क) (ख) (घ) पुस्तकेषु।

(27) 'तद्भावादि'ति (क) (ख) (घ) पुस्तकेषु पाठः। स च टीकाकृदसम्मत इति प्रतिभाति।

तयोः षट्प्रकारयोर्मध्याप्रगल्भयोः कनिष्ठज्येष्ठत्वं श्रीकृष्णप्रेमतारतम्येनैव, न तु वयसा । मुग्धाया एकरूपत्वेनानयोर्द्वादशत्वेन—

तेन त्रयोदश स्वीयाः—१०२ का

परोढ़ा स्यादलौकिकी ।

त्रयोदशविधा साऽपि—१०२ (क) का

यतोऽलौकिके परोढ़ाऽपि सम्मन्यते, ततः साऽपि त्रयोदशविधा ।

तेन षड्विंशतिर्भिदा । १०२ (ख) का

तेन मिलित्वेत्यर्थः ।

अवस्थाभिरथाष्टाभिरष्टोत्तरशतद्वयी ।
कन्याज्येष्ठकनिष्ठत्वान्मृदुमध्यस्फुटत्वतः ॥
चतुर्भेदास्ततस्तासां सद्वादशशतद्वयी ।
अत्युत्तम-प्रकृत्यादितया ताः स्युः पुनस्त्रिधा ।
षट्विंशत्सहिता तेन षट्शती नायिकाभिदा॥१०२(ग)का

अत्युत्तमा, उत्तमा, मध्यमेति त्रैधम् ।

तत्र सिद्धाः सुसिद्धाश्च नित्यसिद्धा इति त्रिधा ।
स्त्रियोऽवतीर्णास्तेन स्युर्वसुशून्यग्रहेन्दवः (१९०८)(E) ॥ १०२का

मुग्धाया एकरूपत्वमेव, यतो मध्याप्रगल्भयोरेव धीराऽऽदिभेदतः षड् भेदा उच्यन्ते। अनयोर्मध्याप्रगल्भयोः। तेनेति—स्वकीयायास्त्रयोदशभेदैः सह मिलित्वा षड्विंशतिर्भेदा उक्ताः, अभिसारिका वासकसज्जेत्याद्यष्टाभिरष्टोत्तरशतद्वयी।

परोढ़ाभिन्ना कन्या केनाप्यविवाहिता—तस्या भेदचतुष्टयमाह—कन्येति। ज्येष्ठा कनिष्ठा, अत्यन्तस्फुटा मध्यस्फुटा च।

नित्यसिद्धा इत्यस्य व्याख्या स्वभावसिद्धाः। एताः स्त्रियो गोकुलेऽवतीर्णाः, तेन पूर्वोक्तसंख्यायास्त्रिगुणीकृतेन वसुशून्यग्रहेन्दवो नायिकाभेदा भवन्ति।

(E) सिद्धाः सनिरूपा इत्यादि—इदञ्च वैष्णवागमस्य मतानुसारेण। भक्ताः सर्वं भगवती मायारूपा—प्रोक्तेन भगवान् लभ्यः। ऋषिभिः श्रुतिरूपाभिः देवीभिश्च स लब्धः, अतोऽयमत्र। स्कन्द ब्रह्मवैवर्तादिपुराणेभ्यो विस्तरो ग्राह्यः।

सिद्धा मुनिरूपाः साधनसिद्धाश्च, सुसिद्धाः श्रुतिरूपा देव्यश्च, नित्यसिद्धा राधाद्या रुक्मिण्याद्याश्च स्वभावसिद्धाः। अथैतासामादितो लक्षणानि—

स्वकीया तु कृतोद्वाहा पित्राद्यैः स्वयमर्पिता ॥
या तु व्यूढ़ाऽपि गोपेन लोकधर्मानपेक्षिणी।
कृष्णैकताना रागेण परोढ़ा व्रज एव सा (F) ॥
पित्रादिदानात् प्रागेव पित्रादेरप्यसम्मतौ ॥
जातानुरागा या कन्या सा भैष्मी कुण्डिने यथा ॥
पितृभ्रात्रादिसङ्कोचात् स्वधार्ष्ट्यादिभयादपि ॥
गूढ़ा यस्या रतिर्गाढ़ा सर्वथा सुरसायते।
कात्यायनीव्रतपरा सा कन्या सर्वदा व्रजे (28) ॥ १०४का

अथ मुग्धादेर्लक्षणम्—

अभिनवविकसितयौवनमदनविकारा मृदुर्माने।
वार्त्तायामपि सुरते पराङ्मुखी सत्रपा मुग्धा ॥ १०५ का

कुण्डिनपुरे भैष्मी रुक्मिणी। व्रजस्थकात्यायनीव्रतपरायां कन्यायां स्वरूपमाह—
ः दृभ्यादेति। परोढ़ानामिव रसोत्कर्षहेतुभूतस्य पित्रादिकृतनिवारणदुर्लभताप्रच्छन्न-
कामत्वादेः सत्त्वात् गोपान्तरेण विवाहाभावेऽपि न क्षतिः।

---

(F) परकीयानामपि तासां श्रीकृष्णपतित्वं दर्शितं बहुशो भागवतसंहितायां यथाऽवोचाम प्राक्। तथा चानन्दचन्द्रिकायाम् 'न हि पत्यादिशब्दानां परिणेतर्य्येव केवलं शक्तिः सर्वैर्व्येव रसग्रन्थेषु।' एवमेव स्वकीयासु स्वाधीनभर्त्तृकाऽऽदिरन्तर्भुक्ता।

---

(28) इत' परम् 'एवविधैव कथिभि' परकीयैव वर्ण्यते।
परपाणिग्रहीत्री तु कृष्ण एव हि शोभते।
नैवान्यनायके यस्मात्तस्मात्राध्यव सा किल ॥'
इत्यधिकोऽयो हृद्रितपुस्तक उपलभ्यते। स चाशः प्रक्षिप्त इव प्रतिभाति।

तत्र नवयौवना यथा—

पदोः पारिप्लव्यं नयनमहरन्मध्यगुरुतां
स्तनश्रोणी मान्द्यं धिय इव (G) ह्रियो वाग्व्यवसितिः ।
शिशुत्वे राधाया विगलदधिकारे सति तनौ
किमङ्गान्यन्योन्यं दधत इव लुण्ठा नपदवीम् ॥ ६५

नवमदनविकारा यथा—

कटाक्षं सोऽचन्ती (G) व्यधत इव नेत्रान्तलहरी
निरातङ्कं वक्रो जननयनतः शङ्कत इव ।
शिशुत्वं तारुण्योदयमपि नयन्त्यास्तनुतुलां
स्मरोऽस्या निःस्पन्दं कलयति मनः कष्टकमिव ॥ ६६

अथ बाल्ये सर्वत्र स्वच्छन्दगमनागमनेन पदद्वयस्य चाचल्यमासीत् नेत्रद्वयस्य कन्दर्पविकाराद्यभावात्पारिप्लव्यं नासीत्, यौवनारम्भे तु वैपरीत्यमभूदित्युत्प्रेक्षयाऽलङ्करोत्याह—पदोरिति। बाल्ये स्थितं पदोश्चाञ्चल्यं यौवनारम्भे नयनमहरत्, एवं बाल्ये स्थितां मध्ये गुरुतां स्तनश्रोणी अहरताम्, यौवने स्तननितम्बयोः पुष्टताऽभूदिति भावः। तथा च बालेः यथा बुद्धेस्तथा लज्जाया अपि मान्द्यम्, एवं वचनस्याधिक्यमासीत् यौवनारम्भे तु तयोर्मान्द्यं वाग्व्यवसितिर्वाक्प्रयोगोऽहरत्। यथा च बुद्धिलज्जयोराधिक्यं वचनस्याल्पत्वमभूदिति भावः। राधायास्तनुरूपदेशे तान्यङ्गराज्यस्याधिकारे गते सति।

एवं यौवनारम्भे बाल्यस्य यत्किञ्चिन्मात्रसत्त्वात् चौरत्वं, यौवनस्याप्यारम्भमात्रत्वात् चौरत्वम्—एवं सति शिशुत्व तारुण्ययोरपि तनुतुलां चौरयस्तुतुल्यतां नयन्त्याः प्रापयन्त्यास्तस्या राधाया नेत्रान्तलहरी कटाक्षं सोऽचन्ती व्यधत इव। षुङ् प्रसवे धातुः। तथा च कटाक्षसम्पादनप्रसवं करिष्यन्ती तत्पूर्वं यथा प्राप्नोतीव, यथाभिकप्रसवपूर्वं काचित्प्राप्नोति। यौवनस्यारम्भात् कटाक्षे चिकीर्षा, बाल्यस्य शेषात् कर्तुं न शक्नोतीति यथा जायत इति भावः। पूर्वं निरातङ्कं निःशङ्कं वक्षःस्थलमधुना जननयनतः शङ्कते, तथाऽस्याः स्मरः कन्दर्पः निःस्पन्दं निष्क्रियमर्थात् कन्दर्पक्रियारहितं मनः कष्टकमिव पश्यति।

(G) मुग्धामध्यारम्भोत्कण्ठादिष्वपि मुग्धा शामानिकलता—यथा मध्येऽर्धमाधाकां वक्षमादिमध्यनाकारेतिाव इव विम्भति। एवञ्च दर्शनश्रवणादाना चौर्यमध्याः प्रतिमायेति वक्रांकितादौ नवयौवनाया मुग्धाया उद्देशः। अत्र चाराद्यं कवियोदितकम्पनेन मयति चमत्कारस्तु मुग्धाभूति सुधोनिर्देशम्।

मानि मृदुर्यथा—

सख्या शिक्षितपाठितानि सुभृशं वाम्योपदेशाचरा-

ण्ययावश्यमभीष्टसङ्गसमये सम्पादनीयानि हि ।

इत्थं चेतसि निश्चयो व्यजनि यः कृष्णस्य सन्दर्शने

सद्योऽसौ सह चेतसाऽपहृतवांस्तस्मिन् तस्या हृदः ॥ ९७

सुरतपराङ्मुखी यथा—

अयि प्राणेभ्योऽपि प्रणयवसतिस्त्वं प्रियसखी

ममैवेति प्रायो निरणयमहं पङ्कजमुखि ।

इदानीन्तु ज्ञातं व्रजपतिसुतस्यैव भवती

यतस्तत्प्रीत्यर्थं मदनभिमताय स्पृहयते ॥ ९८

अनभिमतमत्र सुरतम् ।

सत्रपा यथा—

आदृष्टा नमयति वक्त्रमीक्ष्यमाणा नेत्राब्जे मुकुलयति व्रजेशजेन ।

यान्तीषु प्रणयिसखीषु याति पश्चादनङ्गो नमयति कोमलं मनोऽस्याः ॥ ९९

मध्या सुललितसुरता मध्यमसमुदीर्णयौवना नोच्चैः ।

व्रीडावतीषदीषत्प्रागल्भ्या निभृतवैदग्ध्या ॥ १०६ का

तत्र सुललितसुरता यथा—'निर्यातान्त्वयो'त्यादि (२५ श्लोकः) ।

मध्यमसमुदीर्णयौवना यथा—

काचिद्यूथेश्वरी स्वगतमाह—सख्येति । असौ निश्चयश्चेतसा सह हृतो मम हृदयादपहृतवान्, अतस्तस्याः सख्याः सकाशादहं तस्मात्तस्मिन्, न जाने सा किं वदिष्यतीति शङ्काकुलाऽस्मीत्यर्थः ।

अयि पङ्कजमुखि ! प्राणेभ्योऽपि प्रेमपात्री त्वं ममैव प्रियसखीत्यहं निरणयं निर्णयं कृतवती । यतस्तस्य श्रीकृष्णस्य प्रीत्यर्थं ममानभिमतं सुरतं वाञ्छति ।

श्रीकृष्णेन दृष्टा सा वक्त्रं नमयति, तेनेक्ष्यमाणा सती नेत्राब्जे मुकुलयति मुद्रिते करोति, तस्मादस्याः कोमलं मनः कन्दर्पो न नमयति, कोमलत्वान्मनः कदाचित्त्रुट्यत्यपीति भयान्न नमयतीत्यर्थः ।

मध्याया लक्षणमाह—नोच्चैरपि तु ईषद्व्रीडावती ।

हे राधे ! त्वं कन्दर्पस्य भुवि स्थिता कल्पवल्ली भवसि । कल्पवल्लीसाधर्म्यमाह—तव

स्तनौ स्तवकविभ्रमौ विहसितं प्रसूनोद्गति-
र्वचो मधुरसो दृशावभिमुखस्थितौ खञ्जनौ ।
भ्रुवौ भ्रमरमण्डली करपदं नवाः पल्लवा-
स्त्वमेव सखि राधिके ! मदनकल्पवल्ली भुवि ॥ ७०

नीचैर्व्रीडावती यथा—

आकृष्टे रमणेन नीलवसने (१९) निर्मोचितैरायतैः
केशौघैर्निरवाहयं सखि ! तनोः साम्मुख्यसङ्गोपनम् ।
जिह्रेमि स्मरणेऽपि तस्य यदियं कृष्णाष्टमी यामिनी-
वासीत् सुन्दरि ! सम्मुखार्धतिमिरा पश्चार्धचन्द्रप्रभा ॥ ७१

ईषत्प्रागल्भ्या यथा—

मम श्रोत्रे शब्दः सुरतमिति हे कृष्ण ! न गतः
सखीभ्यो याचित्वा यदि भवति दास्यामि भवते ।
इति श्रोक्तं प्रातः शुकयुवतिभिर्भाषितमसौ
कयोदूढं वः प्रोक्तं वच इति सखीष्वेव निदधे ॥ ७२

स्तनौ स्तवकविभ्रमौ पुष्पगुच्छविलासवन्तौ । परस्परसम्मुखतया स्थितौ कल्पवल्लीनिष्ठखञ्जनौ तव दृशौ । तव भ्रुवौ कल्पवल्लीस्थितभ्रमरमण्डलौ । 'करपद'मिति प्राण्यङ्गत्वात् समाहारद्वन्द्वः ।

श्रीकृष्णेन मम नीलवस्त्रे आकृष्टे सति तदात्मानं नग्नां दृष्ट्वा निर्मोचितैः केशसमूहैः करणैः सम्मुखदेशस्य सङ्गोपनं निरवाहयं निर्वाहं कृतवती । तस्य सङ्गोपनस्य । यत् यस्मादियं मे तनुर्यामचतुष्टयात्मिका कृष्णाष्टमी यामिनीवासीत्—सा यथा पूर्वं प्रहरद्वयं व्याप्य चन्द्राभावेनार्धतिमिरा पश्चादर्धचन्द्रप्रभा तथैवाहमप्यभवम् ।

हे सुरतरङ्गिणि ! सुरताभिलाषिणे मह्यं सुरतं दास्यसि नवेति श्रीकृष्णेन पृष्टा काचित् मुग्धेश्वरी आह—'सुरत'मिति शब्दः मम श्रोत्रगतोऽपि न इति प्रथमवचनं, तदनन्तरं 'युष्माकं सुरतमस्ति मया श्रुत'मिति श्रीकृष्णस्य वचनं श्रुत्वा सा पुनराह—'मयि सम्भावनाऽपि नास्ति, किन्तु सखीषु भवति चेत्ताभ्यो याचित्वा दिनान्तरे भवते दास्यामि ।' एतदर्धं पदमपरामीभाव स्थिताभिः शुकाङ्गनाभिः कण्ठस्थं कृत्वा प्रातःकाले सखीनामग्रे पठितं, तच्छ्रुत्वाऽसौ मुग्धेश्वरी श्रोतृमपि वचो यो युष्माकं मध्ये कयोक्तमित्युक्त्वा सखीष्वेव निदधे । तथा च प्रोक्तं वचनतया सखीनां शिरसि निक्षिप्तम् ।

(१९) 'कमलाक्षेण वसने' इति (ख) (ग) पुस्तकयोः पाठः ।

निभृतवैदग्ध्या यथा—

परीरम्भं वेद्दि कथमपि मुखाम्भोजमधुनः
प्रपाणे मा मेति (३०) व्यधित करकम्पं किमपि या ।
स्वयं लब्धोच्छ्वासं जघनभुवि वासः स्थगयितुं
स्वयं सा श्रोकृष्णं किमपि परिरेभे दृढ़तरम् ॥ ७३

अथ प्रगल्भा—

तरुणी मदनमदान्धा रतिरणकुशला दरव्रीड़ा ।
भावोन्नता प्रगल्भा वैदग्ध्याक्रान्तनायका कथिता ॥ १०७का

तत्र तरुणी यथा—

दाहोत्तीर्णसुवर्णपूर्णकलसौ वक्षोजयोर्युग्मकं
सेरेन्दीवरदाममतोरणततिः स्निग्धाः कटाक्षोर्मयः ।
श्रोणिः शिल्पतरङ्गमङ्गलमयं सिंहासनं निर्मिता
कामोत्सवमण्डलेकरचना केनासि चन्द्रावलि ! ॥ ७४

मदनमदान्धा यथा—

क्लिष्टा श्लिष्यति गोकुलेन्द्रतनयेनाचुम्बिता चुम्बति
स्वच्छन्दं लिखिता नखैर्नखपदैराभूषयत्यङ्गकम् ।

अथ कुञ्जप्रदेशात् किञ्चिन्निर्गत्य सखीषु निर्गतास्वेकाकिनीं यूथेश्वरीं प्राप्य श्रीकृष्णस्तया सह विलासारम्भं कृतवान्, गवाक्षद्वारा तं विलासं दृष्ट्वा काचित् सखी स्वसखीं प्रत्याह । या श्रीकृष्णकृतपरीरम्भं कथमपि कृतिमदुःखव्यञ्जनेन वेद्दि अधरमधुपानेऽपि 'मा मे'ति वाग्यभेदकरकम्पं चकार, अधुना सा वाम्यं विहाय श्रीकृष्णस्य व्यापारं विनैव कामोन्मादेन स्वयमेव नीवीबन्धनाल्लब्धमोक्षं परिधेयवस्त्रं जघनदेशे स्थगयितुं स्थिरीकर्तुं तन्निधेय स्वयमेव श्रीकृष्णं दृढ़तरं परिरेभे ।

वैदग्ध्येनाक्रान्तो नायको यया सा प्रगल्भा कथिता ।

श्रीकृष्ण आह—हे चन्द्रावलि । त्वं कन्दर्पस्योत्सवे केनापि मण्डलरचनानिर्मिताऽसि । तस्या रचनाखरूपत्वमाह—दाहेति । व्याघ्रसुतुमवे पूर्णकुम्भोऽपेक्षितो भवति तत्स्थानीयं तत्र स्तनयुगलकम्, एवमीषद्विकसितेन्दीवरमालया बन्धनमालाततिरपेक्षिता भवति, तत्स्थानीयास्तत्र कटाक्षोमय., एवमुत्सवे नानाविधशिल्पकौशलविशिष्टं सिंहासनमपेक्षितं भवति, तत्स्थानीयन्तत्र नितम्बदेशो भवति ।

(३०) 'मां मेति' इति (ख) पुस्तके पाठः ।

शिक्षिता तत एव पुष्पधनुषः संग्रामविद्यामियं

तस्य क्षोभकरी यदेष्ट तदियं विद्या गुरुक्षोभिका ॥ ७५

रतिरणकुशला यथा—

अन्योन्यप्रणयप्रकाशपरयोरन्योन्यनिर्माल्ययोः

श्यामामाधवयोर्निरीक्ष्य वपुषोर्लक्ष्मीं रजन्याः क्षये ।

सख्या एव मनोजसङ्गरजयश्रीसूचकाचार्यके

सामानाधिकरण्यमप्रतिहतं मेने सखीनां गणः ॥ ७६

इयमेव दरव्रीड़ाभावोन्नताऽदिः ।

अथ मध्याप्रगल्भयोर्धीरादिभेदकथनम्—

तत्र मध्याधीरा—

प्रियं वैदग्ध्यवक्रोक्त्या मध्याधीरा वदेद्रुषा । १०८

सा यथा—

'पद्मिन्यहं कुमुदिनी किल नैव सत्य'मित्यादि (३य किरणे ३८ श्लोकः) ।

धीराधीरा तु रुदितैः— १०९ का ।

यथा—

उत्खातं गुरुगौरवं कुलवतीमौलिश्च निःसारिता

कृष्ण ! त्वत्प्रणयेन, तत् कथमिदं कापट्यमालम्बसे ।

इत्यालप्य तदीयपीतवसनेनाहृत्य वक्त्राम्बुजं

बाला केवलमश्रुमिश्रितमुखी चाटस्वं रोदिति ॥ ७७

श्रीकण्ठेन मखेलिर्विना शिक्षिता यतो स्वयमपि नखचिह्नैः श्रीकृष्णाङ्गमाभूषयति यद्यस्मादियं ततः श्रीकृष्णादेव कन्दर्पयुद्धविद्या शिक्षिता तस्य श्रीकृष्णस्य क्षोभकरी यती येष्ट ऐश्वर्यं कृतवती तस्मादस्या इयं विद्या गुरुक्षोभिका भवति ।

अन्योन्यनिर्माल्ययोः परस्परसम्भक्तयोरत्र सम्भोगजन्यश्रमेण सुप्तयोः श्यामाकृष्णयोर्वपुषो नखचिह्नादिजन्यशोभां गवाक्षद्वारा निरीक्ष्य इयोर्मध्ये सख्या एव कन्दर्पयुद्धजयसम्पत्तिसूचकाचार्यत्वे सामानाधिकरण्यमवैयधिकरण्यमप्रतिहतं सखीगणो मेने । तथा च सख्याः स्ववैयधिकरण्ये जयहेतुत्वं तु कृष्णस्य, तस्य तु युद्धे पराभवेऽपि त्वयैव जितमिति वैयधिकरण्येन जयसम्पत्तिरिति भावः ।

अथ धीरत्वादिकं मानदशायामेव प्रकटीभवतीत्यतो मानिनीष्वेव धीरादयस्तु' धीरादिभेदमाह—यथेति ।

—अधीरा निष्ठुरोक्तिभिः। ११०का

यथा—

साधारदर्शिनि जीविते मम कथं शाठ्यन्त्वमालम्बसे ?
धिङ्मां त्वाञ्च, धिगावयोः सुजनतां, धिक् प्रेम, धिक् तद्यशः।
किं ब्रूमः, पुरुषोत्तमोऽसि, जगतां भर्तासि, मय्येव ते
धूर्तत्वं, न हि तेन ते गुणगणः किञ्चित्तरां क्षीयते ॥ ७८

सत्यभामोक्तिः।

अथ प्रगल्भाधीराऽदिलक्षणम्—

यदि प्रगल्भा धीरा स्यात्छादितावहेलया।
उदास्ते प्रकृतात् कोपाद्दादरं दर्शयेद्बहिः ॥ १११ का

यथा—

किं पादान्तमुपैषि, नास्मि कुपिता, नैवापराद्धो भवान्,
निर्हेतुर्न हि जायते कृतधियां कोपोऽपराधोऽथ वा।
योग्या एव हि भोग्यतां दधति, तन्नानौचितो क्वापि नो,
तेनाद्यावधि गोकुलेन्द्रतनय। स्वातन्त्र्यमेवास्तु ते (31) ॥ ७९

धीराधीरप्रगल्भा तु साकूतैर्वचनैर्मुहुः।
प्रियमुच्चैः खेदयति— ११२ का

अथैकस्मिन् दिवसे नारदो द्वारकामागत्यैकपारिजातपुष्पं श्रीकृष्णाय ददौ। तत् पुष्पं श्रीकृष्णेन रुक्मिण्यै दत्तं, नारदेन कौतुकार्थमेतद्वृत्तान्तं सत्यभामायै कथितम्। तच्छ्रुत्वा सत्यभामा मानिनी बभूव, तदनन्तरं तस्या मानभङ्गार्थं निकटे गत्वा श्रीकृष्ण आह—हे प्रिये, एकपुष्पस्य का कथा, पारिजाततरुसमूहमेवेन्द्रपुरादानीय तुभ्यं दास्य इति वदन्तं श्रीकृष्णं कुपिता सत्याह—साधारेति। सत्यभामायाः प्रेम्णोऽधीनः श्रीकृष्ण इति यशोऽपि धिक्।

उदास्ते—नाहं कोपवतीत्युदासीना भवति।

योग्या एव तव भोग्यतां दधति भोग्या भवन्तीत्यर्थः. तथा चायोग्यत्वान्मत्तागमनौचित्य इति भावः। स्वातन्त्र्यमिति—यत्र तवेच्छा तत्रैव गच्छ। सम्प्रत्यहन्तु देहाद्वियुक्ता भविष्यामीति ध्वनिः।

(31) अत्र स्थले 'यद्वा या दूरादुत्थितमन्तिक'मित्यादि ८८तम. श्लोकोऽत्र उदाहृतो दृश्यते।

नैतावताऽपि समयेन तवोपलब्ध-
श्चेतो यदन्तरगतेव तदाह्वणोति।
तत्रेऽपि चेतसि ममाविरतं यदास्से
पूर्णाऽस्मि तेन, किमनेन बहिःस्थितेन ॥ ८०

—पराऽवीच्यैव निन्दति। ११३ का

परा अधीरप्रगल्भा। अवीच्यैव अदृष्ट्वैव। यथा—

'सख्यः! कथं परिमलो विमलः प्रसर्पी'
'श्यामो निलीय चिरमस्ति' 'कुतः स वामः?।'
'तस्यान्तिके तव' 'निवारयताशु, यातु,
'धूर्तस्य तस्य वदनं न विलोकयामि' ॥ ८१

अथासां ज्येष्ठकनिष्ठत्वभावो यथा—

एकत्रैव लतासने स्थितवती राधा समं श्यामया,
श्यामेन प्रहितं समं सुमनसामासाद्य दामद्वयम्।

एतावताऽपि समयेनैतावत्कालपर्यन्तं तव चेतो मया नोपलब्धं न प्राप्तं, यद् यस्मात् सा मम वैरिणी तवान्तःकरणं गता सतो त्वच्चेत आवृणोति, तथा च सर्वदैव त्वच्चेतो व्याप्य सा तिष्ठति। अतो मत्स्मरणं तव कथं भवेदिति ध्वनिः। किन्तु त्वद्विद्वेष्य तत्रेऽपि मम चेतसि त्वं तादृशतापमध्ये यत् सततमास्से तेन हेतुनाऽहं पूर्णाऽस्मि, ततस्त्वागमनेन बहिःस्थित्या किम्? तथा च सम्प्रति तवागमनं व्यर्थमिति भावः। तेन च त्वत्स्मरणमहं सततं करोमि, त्वया तु स्वप्नेऽपि न स्मर्यते इत्युपालम्भो ध्वनिः। खिन्नमिति भावसाधनं ज्ञेयम्।

सखीयूथेश्वर्योरुक्तिप्रत्युक्ती आह—सख्य इति। सर्वत्र प्रसर्पी श्रेष्ठपरिमलः कुत आयाति? सख्याह—श्रीकृष्णश्चिरं व्याप्य निलीयास्ति। यूथेश्वर्याह—स मम वामः प्रतिकूलः कुत्र? यूयं निवारयत मत्निकटात् शीघ्रं गच्छतु।

एकस्मिन्नासने श्यामया सह स्थितवती राधा श्रीकृष्णेन प्रहितं समसमेकाकारं माल्यद्वयं

(H) "यत्र निषेधविशेषो दुर्लभत्वञ्च मृगाक्षीणाम्। तत्रैव नागरस्य निर्भरमासज्यते हृदयम्।" इत्यभिज्ञातोक्तेः श्रीकृष्णे आपाततदाकृष्टे तत्तच्चित्तानां गोपीनां प्रथयद्भिः राधाऽऽद्यासु रमणीशिरोमणिषु वाम्यकलुषास्वपि श्रीकृष्णस्य सतो भावप्रश्रयः। एवमपि गोपीषु श्रीकृष्णप्रेमसारात्मकासु राधाचन्द्रावल्यादिष्वन्यासामसुभगानां तदानीं श्रीकृष्णविरहितानां प्रकटं परां कोटिमापद्यमानं हैन्याऽहमहमिकाविलसनं प्रीत्युज्जृम्भित-

श्यामावक्षसि दातुमैच्छदुभयं, साऽक्षय तद्वक्षसि
प्रादादेकमथावतीर्य्य कवरीपूजां (H) चकारात्मनः ॥ ८२

अत्र श्यामायाः कनिष्ठत्वं व्यङ्ग्यं 'कबरी' 'पूजा' शब्दाभ्याम्।

**मुग्धा मध्या प्रगल्भा च मिश्रभावात् पुनर्नव। ११४क॥**

आदिमुग्धा मध्यमुग्धा अन्तिममुग्धा—एवमन्येऽपीति नव।

तत्र मुग्धात्रैविध्यं यथा—

मानप्राड्वपाचप्रियसखीशिक्षोपरोधादसौ
तूष्णीमेव चिरं निमील्य नयने नम्रानन्द्रैव स्थिता।
रोषान्धस्य मदीयदूषणकथावेशेन (I) वाचालतां
श्रुत्वा वन्धुजनस्य कातरमुखी कर्णौ करेणावृणत् ॥ ८३

नेत्रे किं विनिमीलयामि, दयितस्तत्रापि सन्दृश्यते
चेतः किं कठिनीकरोमि, सततन्तत्राप्यसौ खेलति।

प्राप्योभयमेव श्यामाया वक्षसि दातुमैच्छत् श्यामा तु माल्यद्वयमादाय राधाया वक्षसि प्रादात् पश्चादेकं माल्यं राधायाः कण्ठादवतार्य्य तेन माल्येनात्मनः कवरीपूजां चकार तन्निर्माल्येन स्वस्य मस्तकस्थसंयतकेशपूजाकरणेन श्यामायाः कनिष्ठत्वमायातमिति ज्ञेयम्।

मिश्रभावात्—आदिशब्देन सह मिलनादादिमुग्धेत्यादि भवति। आदिमुग्धाऽव्यक्त मुग्धा, अन्तिममुग्धाऽल्पमुग्धेत्यर्थः।

श्रीकृष्णः सुबलं प्रत्याह। मानग्राहयाऽऽग्रहेण सह वर्त्तमाना या प्रियसखी तस्याः शिक्षोपरोधात्। रोषान्धस्य बन्धुजनस्य वाचालतां श्रुत्वाऽत्यन्तमौग्ध्यवशात् प्रत्युत्तरदानेऽसामर्थ्यात् केवलं कर्णावेव रुद्धं चकारेत्यर्थः।

---

मेव न कृत्रिमम्, यतोऽवरा एताः श्रीकृष्णदयितानां सेवातात्पर्य्येणैव सार्थकम्मन्यजीविता भवन्ति। चित्रालिताश्यामाऽऽद्या अष्टौ एव नित्याताः श्रीकृष्णलीलासु लिख्यन्ते। आसामवरत्वं प्रेमतारतम्येन वैयावादमे व्यवस्थितत्वेऽपि क्वचित् कविभिरितरेच्य वयोभावादिनाऽपि दर्श्यते। तत्त्वत्वेन वर्णितेषूदाहरणेष्वेवमेव तत्स्थलत्वसङ्गतिर्भक्तिप्राणभित्तिमवलम्ब्य सुधीभिर्विभाव्या।

(I) .उपरिदर्शिते श्लोके राधायाः समधिकमुग्धात्वमेवादिमुग्धास्वभावं तस्या विनिगमयति। तदग्रवर्त्तितोत्तरे च श्लोके कोपप्रस्तावप्यसहायत्वव्यपदेशः स्वकीयं मध्यामुग्धत्वम्, एवमन्तिमे च पद्ये श्रीकृष्णोपरि प्रणयरसोर्ज्जितत्वात् क्षोभाणवकल्पितो

दोषान् किं गणयामि तस्य, गुणतां गच्छन्ति ते तत्क्षणा-
न्मानोऽन्येन यथा भवेद्यदि, तदा सख्यः स एवोच्यताम् ॥ ८४

रोमाञ्चैः समसुत्थितं प्रथमतो, मानेन सार्धं दृशो-
रश्रु व्याविलमाननेन च समं नीतं ममांहोऽप्यधः ।
सख्यश्चाभरणैः समं मुखरितास्तूष्णीकतां प्रापिता (I)
मामालोक्य चिरार्जितोऽपि सुदृशा कोपस्तया विस्मृतः ॥ ८५

तत्रापि—निमीलितनेत्रेऽपि दयितः सन्दृश्यते । ते दोषास्तत्क्षणे दोषत्वेन दर्शनक्षणे गुणतां गच्छन्ति । हे सख्यः भवतीभिरुपदिष्टोऽस्मार्गेणयाऽन्येन यथा यदि मानः सम्भवेत्तदा स एव मन्या उच्यताम् ।

सखीभिर्यैर्व्यवस्थितं मम दर्शने तत् सर्वं विपरीतमभूदिति श्रीराधा आह । प्रथमतो मामालोक्य सुदृशा तयाऽऽसनादुत्थितं, 'रोमाञ्चैः समसुत्थित'मित्यनेन रोमाञ्चोऽपि जात, मानस्य का कथेति भावः । व्याविलं भूमौ पातितं, 'मानेन सार्द्ध'मिति मानोऽप्यधः पातित इत्यर्थः । अंहो ममापराधोऽपि सुखेन सहाधो नीतं लज्जया मुखमपि नम्रीकृतमिति ध्येयम् । अस्माकं निकटे माऽऽगच्छ, इतो दूरीभवेत्यादि वाक्यैर्मुखरिताः सख्योऽप्यधामध्ये तया तूष्णीकतां प्रापिताः । 'आभरणैः सम'मिति हस्तादिचालनेन निवारणसमये तासां कङ्कणाद्यलङ्कारा अपि मुखरिता बभूवुः—तासां तूष्णीकत्वे ते तूष्णीं बभूवुरित्यर्थः ।

त्रिविधमुग्धा एव मानग्रहणेऽसामर्थ्यान्मानाक्षमा इति पूर्वमुक्तम् ।

---

ऽव्यभिनन्दनभरो राधाया अन्तिममुग्धाप्रकृतिमनुमापयति । एषु लक्ष्येष्वेवंविधेष्वन्येषु च पद्येषु क्वचित् प्रश्नोत्तरकौतुककृतो वेद्यः क्वचिदुचितभाववर्णनानिबन्धो वा सुतरामास्वादः । आसां भावतादात्म्यनिर्द्धारणे कृष्णप्रेमगरिमैव वरीवर्त्ति । आविष्कृतश्च तदा नन्दवृन्दावने कैशोरादिलीलाप्रस्तावे कयाचिदनतिप्रगल्भया गोपललनया—

मां घ्नो यदि निघ्नन्ति हन्यतां बान्धवो यदि जहाति हीयताम् ।
साधवो यदि हसन्ति हस्यतां माधवः स्वयमुरीकृतो मया ॥

अग्निमदशाश्रितप्रगल्भाहृदयान्ते 'दूरादुत्थित'मित्यादौ यच्छन्नकोपाकृतेश्चन्द्रावल्याः सुचारु भावाकारवर्णनं तदमवधानकीयस्य 'एकत्रासनसंस्थितिः परिहृते'त्यादिकस्य 'चतुरया कोपः कृतार्थीकृत' इत्यन्तस्याकरग्रन्थोद्धृतस्य पद्यस्यापाततो विभिन्नकथागतमपि स्वरूपतः समं समस्तस्य । वस्तुतश्छन्नकोपाकृतेः पृथक् पृथक् विकाशः । गूढमानिका नायिका, इतरा तु व्यक्तिगूढमाना, यथोक्तमेवेह मूले ।

अत्र स्मृतिभावोऽङ्गी, मोह-चपलता-ग्लानि-जड़ताप्रभृतीन्यङ्गानि। अङ्गत्वेन नैतद्भावशावल्यम्।

अथ भावोदयादि—तत्र भावोदयो यथा—

आलीजनैर्मण्डनकेलिकाले विभूष्यमाणा वृषभानुपुत्री।

उरोगते नीलमणीन्द्रहारे स्विन्ना सकम्पा पुलकाकुलाऽसीत्॥ १८२

अत्र हर्षोदयः। प्रशमो यथा—

'स्नानाऽसि किं प्रेयसि!' 'मामकीनं ब्रूत् पृच्छ' 'पृच्छामि तदि'त्युरोऽस्याः।

स्पृश'न्निदं स्वस्थ'मिति स्म कृष्णो ब्रवीति सा नम्रमुखी बभूव॥ १८३

अत्र विषादप्रशमः। शावल्यं यथा—

क्रोधान्धा गुरवो जनास्तरलितं दुर्वारमेतन्मनो

मर्मच्छेदकरी खलोक्तिरचना रम्यः स वंशीस्वनः।

कीनाशो भवनेश्वरस्त्रिजगतीलावण्यलक्ष्मीपतिः

प्रेमानन्दरसः स एव तनुमान् कृष्णः किमीहे सखि! (W) ॥१८२

ईर्षासूयौत्सुक्यानि पृथक् पृथगेव स्थितानि।

अथ सन्धिः—'स्नानाऽसि किं प्रेयसी'त्यदौ (५म किरणे १८३ श्लोके) चतुर्थपादार्द्धे 'सा नम्रमुखी बभूवे'ति विषादनिर्गमे लज्जाऽऽगमः, अनयोः सन्धिः। यथा वा—

सुचिरमनुचरीभिः पाठितां कृष्णगाथा सदसि शुकवधूभिः शृण्वती गीयमानाम्।

प्रणयसदयमेकान्तासु विन्यस्यतीयं चकितचकितमन्यन्नेत्रमास्ये गुरूणाम॥१८५

अत्रौत्सुक्यत्रासयोः सन्धिः।

मोहादीनामङ्गत्वेन परस्परप्राधान्याभावान्नैतेषां भावशावल्यमिति ज्ञेयम्।

श्रीराधाऽऽह—मामकीनं चुम्बनस्थं पृच्छ। श्रीकृष्णस्तु 'इ'च्छन्दस्य हृदयवाचित्वमभिप्रेत्याह—तत्तव हृदयं पृच्छामि।

भवनेश्वरी गृहपतिः स्वामी कीनाशः कर्षक इत्यसूया। किमीहे किं चेष्टे किं करोमीति यावत्। 'क्रोधान्धा' इत्यनेन भयम्, इत्येवंरीत्या सर्वत्र यथासंख्यं सम्बन्धो ज्ञेयः। एतानि पृथक् पृथगेव स्थितानि, न त्वङ्गाङ्गिभावतया, अत. शावल्यमिति बोध्यम्।

(W) अत्र 'कीनाश'पदे श्लेषोऽपि भवितुमर्हः—कीनाशः कृतान्तः। भवनपतिः कृतान्तदारुणः ग्रामीणश्च, ग्रामपतिस्तु अपरूपवेशरूपसम्पत्तिमान् नागरः कलावैदग्ध्य-भूषितश्चेत्यद्यो महानयोर्भेदः। अत एव चेतस्तदभिमुखं धावतीत्यौत्सुक्यं भावः।

एते चोक्तप्रकाराः स्वयंव्यङ्ग्या अपि भावान्तरव्यञ्जकाः स्युः । यथा—'क्वाहं गोपवधू'रित्यादौ (४र्थे किरणे ५म श्लोके)। दैन्यादिभिः प्रतिपदव्यङ्ग्यैर्भावैरवहित्थाभाव एव व्यज्यते । यथा वा—

'नाभ्यञ्जनीयं सखि ! मे भवत्या नोद्वर्त्तनीयञ्च वपुः कदाऽपि ।
'न सावधाना स्तनयोर्व्वसो'ति ननान्दुरग्रे निजगाद गोपी ॥ १८६

अत्र स्तनावलग्ननखक्षतगोपनं प्रत्यवहित्था व्यङ्ग्या, तया च न मे इष्टपतेः सङ्गः कदाऽप्यभूत् येनैतत् सम्भावनीयं, तेन क्षणमङ्गमनेनेति व्रीडा—तेनैते व्यङ्ग्या व्यङ्ग्यान्तरव्यञ्जकाश्च भवन्तीति ( )।

अथ प्रस्तारप्रकारेणोक्तानां षोड़शविधानां शावल्यानां भेदानाह ।

तत्र सम्पूर्णतराः—

उं प्र म स—'पादं मुञ्च' 'विमुञ्च मानिनि ! रुषं' 'प्रत्येहि, रुषमे गता,
'श्रीगोपेन्द्रसुते स्वभावकुटिले का रोषमाकाङ्क्षति ?'
इत्यन्योन्यकथासु के'शमथने भूयः पदं धित्सति
श्रद्धाऽधिकमर्पितेन तत्करयुगेनास्यं हसत्यप्यधात् ॥ १८७

अत्र 'पादं मुञ्च'त्यमर्षोदयः, 'विमुञ्च मानिनि ! रुष'मिति क्षणमात्राकूतेन, 'रुषमे गते'ति रोषप्रशमः । ततः 'श्रीगोपेन्द्रसुत,' इति मतिः, 'स्वभावकुटिल' इत्यसूया, 'का रोषमाकाङ्क्षती'त्यवहित्था—एभिः शावल्यम् । 'श्रद्धे'त्यादिनौत्सुक्यं, 'हसती'ति दैन्यम्—अनयोः सन्धिश्च ।

स्फूर्त्याऽनन्दलयेन तेन महता स्वाभाविकेनाप्यहो

तद्विच्छेददवोष्मणा च युगपद्द्वेधाऽभिभूतो हरिः ॥१८८

अत्र 'परिष्वजस्वे'त्यौत्सुक्यं, 'कठिने'त्यसूया, 'ते ते गुणा' इति स्मृतिः—त्रिभिः शबलता । 'तूष्णी'मिति जडतोदयः । 'ततो निर्वृतः स्फूर्त्ये'ति पूर्वपूर्वभावप्रशमः । ततः स्फूर्त्यनन्तर'मानन्दलयेन' 'विच्छेददवोष्मणा' च 'द्वेधाऽभिभूत' इति हर्षविषादयोः सन्धिः ।

*यथा वा—'गतो मे सन्तापो' 'भवति ! प्रियः मनस्यागत इव*

*प्रियस्ते' 'हा कष्टं ! मनसि कथमद्यागत इति' ।*

*'पुरः पश्चात् पार्श्वे मनसि च सदैवे'ति पुलकि-*

*न्यभूद्राधा पश्चादमृतविषनद्योः किमपिवत् ॥ १८९*

अत्र स्फूर्त्या स्वाप्याशुभवे 'गतो मे सन्ताप' इति ग्लानेः प्रशमः । ततः सखीवाक्यानन्तरं 'हा कष्ट'मिति विषादः, 'मनसि कथ'मित्यादि सखीं प्रत्यसूया,'पुरः पश्चादि'त्युन्मादः—एभिः शाबल्यम् । 'पुलकिनी'ति हर्षोदयः । 'अमृतविषनद्यो'रिति हर्षमोहयोः सन्धिः ।

तूष्णीमभूत् । ततस्तदनन्तरं स्फूर्तिप्राप्तया तया सह मानसालिङ्गनेन निर्वृतः—तथा चागन्तुकानन्दजन्यलयसात्त्विकेनैवं स्वाभाविकेन तेन महता विच्छेददवोष्मणा च युगपदेकस्मिन्नेव काले हृष्टो विषण्णश्चेति द्विधाभूतो हरिरभूदिति ।

माथुरविरहेणात्यन्तव्याकुलचित्ता श्रीराधिका सखीं प्रत्याह—मयाऽद्य श्रीकृष्णो दृष्टः, ततो मे सन्तापो गतः । सख्याह—हे भवति राधे ! तव प्रियो मनस्यागत इव, कुतस्तस्य साक्षाद्दर्शनम् ? इति सखीवाक्यानन्तरं साऽह—'हा कष्ट'मिति विषादः । पश्चादुन्मादस्यातिशयप्राबल्योदयेन सखीवाक्यमयथार्थं मत्वा कुप्यन्ती मत्याह—हे सखि ! मम मनस्येव श्रीकृष्ण आगत इति त्वया कथमुक्तम्—न तु मम पुरोऽग्रे पश्चात् पार्श्वेऽपि मनसि च सदा तिष्ठत्येव, तद्दर्शनमपि मया प्राप्यत एवेत्यागन्तुकानन्देन कदाचिदमृतनद्यां तस्याः प्रवेशः, स्वाभाविकविरहस्फूर्त्यां च विषनद्यां प्रवेशः । उन्मादावसानेऽद्वैवास्ये ह्यविचारविपरीत्यौ यौ संयोगवियोगौ तज्जन्ययोर्हर्षमोहयोः सन्धिरित्यर्थः ।

---

भारतयोस्तनोऽप्यादिमे चनादिकामतो वर्त्तमाने वेदवाक्ये चापीयं प्रथा वरीवर्त्तीति न चित्रम् । कश्चिच्छन्दतोऽपरत्वार्थतो वा चङ्गाद् व्यञ्जकानुव्यञ्जकता । तेन 'सर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ । परस्परस्य शोभायै शब्दार्थौ भवत' इति राजानककुन्तलोक्तदिशा शब्दानां व्यञ्जकानुव्यञ्जकत्वम् । अर्थस्यापि परस्परोद्भूतत्वजनितचमत्कारातिशय. कदापि यथा, 'आलिङ्गन्ते गुणवति मया ! ते तुषाराद्रिवाताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेत्य'स्य

प्र उ श स—पश्चादेत्य शनैररिष्टमथनस्तां सस्वजे साहसा-
त्तत्संस्पर्शरसेन सा स्मितमुखी सद्योऽविचारादभूत् ।
आलिभ्यः परिशङ्कयाऽरुणमुखी 'धिग् धूर्त्ततां धूर्त्त ! ते,
'धिङ्गे'ति त्वरयाऽपसारिततनुर्व्यावृत्य तूष्णीं स्थिता ॥ १८०

अत्र 'स्मितमुखी'त्यमर्षप्रशमः । 'आलीभिः परिशङ्कये'ति शङ्कोदयः । 'अरुणमुखी'ति 'धिग् धूर्त्तता मिति 'धिङ्ग'ति पुनरमर्षोग्रताग्लानिभिः शावल्यम् । 'त्वरयाऽपसारिततनु'रिति चपलता, 'व्यावृत्य तूष्णीं स्थिते'ति धैर्यम्—अनयोः सन्धिः । एते सम्भूयत्तराश्चत्वारः ।

स उ प्र श—अक्रूरोऽयागत इति मुखग्लानिहृत्कम्पभाजः
स्तम्भो जातश्चिरमथ सखीसान्त्वनैर्बोध आसीत् ।
'प्रातः कृष्णोऽप्यहह मथुरा'मित्यपूर्णे जनोक्ते
प्रत्यावृत्तैस्त्रिभिरथ पुनः सैव पूर्णा बभूव ॥ १८१

अत्र 'मुखग्लानिहृत्कम्पभाज' इति ग्लानि-शङ्कयोः सन्धिः, ततः 'स्तम्भो जात' इति जडतोदयः । 'सखीसान्त्वनै'रिति तत्प्रशमः । 'प्रत्यावृत्तैस्त्रिभि'रिति ग्लानि शङ्का-जाड्यैः शावल्यम् ।

स प्र उ श—मेघालोके पुलकिततनुर्विद्युदालोकने सा
व्याभुग्नभ्रूस्तदुपशमने सुप्रसन्नाननेन्दुः ।
भूयो विद्युद्वलयकलने लोहिताक्षी मृगाक्षी
धारापाते रुदितमलिनीभावमूर्च्छाः प्रपेदे ॥ १८२

तस्या मानो गतप्राय एव, किन्तु सखीनामनुरोधेन मानाभास एव वर्त्तत इति दूतीवाक्येन ज्ञातो यत् साहसमस्मात् श्रीकृष्णस्तां सस्वजे । अविचारादिति—अहं मानिनी, मम स्मितमनुचितमिति विचारं विनेत्यर्थः । त्वरयाऽपसारिता श्रीकृष्णाद्वियुक्तीकृता तनुर्यया तथाभूता सती व्यावृत्य श्रीकृष्णे पृष्ठं दत्त्वा स्थिता ।

प्रातः कृष्णो मथुरामित्येव न तु यास्यतीत्यपूर्ण जनानामुक्ते सति प्रत्यावृत्तैः पुनरागतै-स्त्रिभिर्मुखग्लानिहृत्कम्पस्तम्भैर्भावैः सा पुनः पूर्णा बभूव ।

मेघस्यालोके श्रीकृष्णभ्रमात् पुलकिततनुस्तत्र विद्युदालोकने सति प्रतिपक्षरमणी-भ्रमेण कोपेन व्याभुग्नभ्रूस्तस्या विद्युत उपशमने क्रोधाभावात् प्रसन्नमुखेन्दुः । धारापाते सति 'नायं कृष्णः, किन्तु मेघः' इति ज्ञानाद्रुदितम् ।

---

मेघलोकस्य भावस्याशाऽनुमापिकेति' प्रत्योऽरविन्दमुरभि, कथयाहो मालिनीतरङ्गाया' मित्यादि प्राकृतप्रपद्ये प्रत्यक्षाऽनुमापककारणकार्यपरम्पराभ्यन्तमावयअवप्रपश्चे । यथा

'मेघालोके' कृष्णागमनभ्रमात् 'पुलकिततनु'त्वेन हर्षः, 'विद्युदालोकनेन' विपक्षरमणीबुद्ध्याऽसूया—अनयोः सन्धिः। 'तदुपशमने 'सुप्रसन्ने'त्यसूया-प्रशमः। 'भूय' इत्यादिना 'लोहिताक्षी'त्यमर्षोदयः। 'धारापाते' सति मेघ एवायमिति 'रुदित'मिति विषादः, 'मलिनीभावे'ति ग्लानिः, 'मूर्च्छे'ति मोहः—एभिः शाबल्यम्।

प्र उ स श—'असाक्षादेव त्वं भवसि न हि साक्षा'दिति रुषे
प्रकुप्यन्ती कृष्णे गतवति निरागस्यपि पदम्।
त्वराऽतङ्कव्यग्रा कपटमिति तस्मिन् विदितव-
त्यहो नानाभावव्यतिकरवतीयं विजयते ॥ १८३

अत्र 'साक्षान्न भवसी'ति प्रागुजातस्यामर्षस्य प्रशमः। ततो 'रुषे क्रुप्यन्तो'ति रोषं प्रति कोपोदयः। पश्चात् कृष्णपादपतने 'त्वराऽतङ्कव्यग्रे'ति चपलता-शङ्कयोः सन्धिः। ततो 'नानाभावे'ति व्रीड़ा-मद-स्मृति-शङ्का-त्रासा-दिभिः शाबल्यम्।

उ प्र स श—गण्डे कुण्डलपद्मरागमहसो बिम्बं प्रति (X) प्रेयसः
पारक्योऽधरराग इत्यरुणितापाङ्गी चलं वीक्ष्य तम्।
स्निग्धाक्षी 'दयितो रुषं विदितवानो वे'ति दोलायिता
न्यञ्चद्भ्रूलतया विधार्य च त्रपा मानं दधे राधिका ॥ १८४

काचित् सक्रोधं प्रत्याह—श्रीकृष्णस्यासाक्षादेव त्वं प्रादुर्भवसि, न तु तस्य साक्षात्। इति रुषे सक्रोधाय कुप्यन्ती सा निरपराधे श्रीकृष्णे स्वपादं गतवति (48) सति त्वरा-शङ्काभ्यां व्यग्रा बभूव। स्वकर्तृकपादग्रहणे सति तस्या वैयग्र्यदर्शनेनाहो अयं मानो न क्रोधजन्यः, अपि तु कपटमिति तस्मिन् कृष्णे विज्ञापिते सतीयं व्रीड़ामदादिनानाभाव-समूहवती विजयते।

प्रेयसः श्रीकृष्णस्य गण्डे कुण्डलस्थपद्मरागकान्तेः रक्तं प्रतिबिम्बं पारक्योऽधरराग इति मत्वा मत्प्रतिपक्षरमण्यधरसम्बन्धिताम्बूलराग इति मत्वेत्यर्थः। आदौ क्रोधेनारुणापाङ्गी पश्चात्तं प्रतिबिम्बं चञ्चलं वीक्ष्य 'अहो! नायमधररागः किन्तु प्रतिबिम्ब' इति ज्ञानात्

विलासोऽलङ्कारनिबन्धेषु द्राक् यथा लक्ष्यते न तथा काव्यनाटकादिष्विति सुविदितमेव जिज्ञासूनामित्यत्र पल्लवितेन। 'बिम्बं प्रती'ति प्रतिबिम्बार्थे क्लिष्टम्।

(48) 'स्वपदं गृहीते सती'त्यमशोधः पाठ (क) (ख) (ग) पुस्तकेषूपलभ्यते।

अत्र 'गच्छ' इत्यादिनाऽमर्षोदयः। 'चलं वीक्ष्ये'ति तस्य प्रशमः। 'कथं विदितवान्नो वे'ति शङ्कावितर्काभ्यां सन्धिः। 'न्यञ्चदक्तनये'ति व्रीड़ा; 'विचार्ये'ति मतिः। 'मृषा मान'मित्यवहित्था—एभिः शावल्यम्। एते चत्वारः शबलोत्तराः।

उ श म प्र—प्रियाऽलोके दृष्टिं नमयति नमन्त्यां प्रति सख-

दृशं स्निग्धारक्तप्रचलनयना पश्यति वधूः।

पुनः पश्यत्यस्मिन् स्मितपुलकसङ्गोपनपरा

हठात्तेनाश्लिष्टा सपदि गतवाम्या समभवत् ॥ १८५

अत्र 'दृष्टिं नमयती'ति व्रीड़ोदयः। 'स्निग्धा रक्तप्रचलनयने'त्यौत्सुक्य-क्रोध चपलतानां शावल्यम्। सामनाहत्यान्यां पश्यतीति क्रोधः, 'स्मितपुलके'ति मद-हर्षयोः सन्धिः। 'सपदि गतवाम्ये'ति क्रोधादिप्रशमः।

म उ श प्र—यदालोके पूर्वं भुजग इति सम्भ्रान्तचकिता

प्रियाग्रे तामेव स्रजमुरसि सख्यो विदधतो।

सखीषु स्मेरासु भ्रुकुटितरलारक्तनयना

ग स उ प्र—'मां पश्यन्तास्तव किमरुणाभुग्नभग्ना दृगन्ता
'निस्पन्देऽवाधरकिशलये गूढलज्जा विवज्ञा ।
'हासो जाताङ्कुर इव कियत्तेन चित्ते प्रमोदो
'वामलन्तो बहिरिति हरेर्वाचि राधा जहास ॥ १८७

अत्रा'रुणे'ति कोपः, 'आभुग्ने'त्यसूया, 'भग्ने'ति त्रपा—ताभिः शावल्यम् । 'निस्पन्द'त्व'गूढ''विवज्ञा'भ्यां धृति-चपलतयोः सन्धिः । 'हासो जाताङ्कुर' इति हर्षोदयः । 'जहासे'ति कोपप्रशमः ।

स श उ प्र—'त्वं मे प्राणाः' 'कथमिव विभो !' 'त्वां विना नैव वर्त्ते'
'नाहं, या ते वसति हृदये सैव ते प्राणहेतुः ।'
'त्वं मे नित्यं वसति हृदये''ना न नै'त्यश्रुपूर्णां' (49)
कृष्णो दोर्भ्यां हृदि विनिदधे सा विसस्मार वाम्यम् (Y) ॥१८८

अत्र 'कथमिवे'ति वितर्कः; 'विभो' इत्यसूया—हाभ्यां सन्धिः । 'नाह'मिति दैन्यं, 'या ते वसति हृदये सैवे'त्यसूया, 'प्राणहेतु'रित्युग्रता—एभिः शावल्यम् । 'अश्रुपूर्णा'मित्यौत्सुक्योदयः । 'विसस्मार वाम्य'मिति कोपप्रशमः । एते प्रथमोत्तरार्थलारः ।

स श प्र उ—'कोदृग्वेणुमवीवदो व्रजपुरी'त्यापृष्ट एव प्रियो
रुक्मिण्या व्रजकेलिकौतुककथासंवेदनासंविदोः ।
सन्धौ बन्धुरमानसः पुनरहो रोमाञ्चनेत्राम्बुनी
संहृण्वन् प्रकृतो बभूव स पुनः पारिप्लवात्माऽभवत् ॥१८९

चकिता पश्चात् श्रीकृष्णे मिलति सति तामेव मालामौत्सुक्याद्दर्शनि धृतवती । आदौ यस्यां सर्पबुद्धिरधुना तामेवाम्लानबुद्ध्या दधारेति सखीषु स्मेरासु सतीषु ।

हे राधे ! तथा तव निष्क्रियाधरे वक्तुमिच्छा गूढाऽतएव लज्जा यत्नेन लङ्घयितुं शक्या । 'कियदि'ति जातिक्रियाविशेषणम् । वाम्र्यैन्तु बहिः काल्पनिकम् ।

संवेदनं ज्ञानमेवं काव्यत्वादसंविद् ज्ञानाभावः, तयोः सन्धौ बन्धुरमानसः सन् पुनश्च जाते रोमाञ्चनेत्रजले संहरन् स्वस्थो बभूव ।

(Y) विधुर्निग्रहानुग्रहसमर्थः— मयि निग्रहः, 'या ते वसति हृदये' तस्यामनुग्रह इति निग्रहानुग्रहयोः स्थानमाननिर्धारणे तवैवाव्याहतोऽधिकार इति सत्यैव । किमिति त्वं मयि

(49) 'हृदयी मो न नै'ति पाठः (क) पुस्तके । 'हृदयेऽन्या न नैत्यश्रुपूर्णा'मिति (ख) (ग) पुस्तकयोः ।

अत्र 'व्रजकेलिकौतुककथासंवेदनासंविदोः सन्ध्या'विति स्मृतिजड़तयोः सन्धिः। 'रोमाञ्चे'ति हर्षः, 'नेत्राम्बु' इति विषादः, 'संहृणु'त्रित्यवहित्था—तैः शावल्यम्। 'प्रकृतौ बभूवे'ति तत्तत्प्रशमः। 'पारिप्लवाक्षे'त्यौत्सुक्योदयः।

अ स अ उ—लिखिष्यामीत्यग्रे स्फुरदभिनिवेशाऽऽर्त्तितरला
ततोऽश्रुस्राताक्षी धिगिति विधिनिन्दां विदधती।
अवष्टभ्य स्वान्तं(Y) प्रकृतिमिव याता क्षणमसौ
लिखन्ती प्रायेशं शिवशिव विसस्मार सकलम्॥ २००

अत्र 'स्फुरदभिनिवेशे'ति स्मृतिः, 'आर्त्ते'त्यावेगः, 'तरले'त्यौत्सुक्यम्—एभिः शावल्यम्। 'अश्रुस्राते'ति विषादः, 'धिगिति विधिनिन्दा'मित्यसूया, तयोः सन्धिः। 'अवष्टभ्य स्वान्त'मित्यादिप्रशमः। 'विसस्मार सकल'मिति मोहोदयः।

अ स अ उ—'विश्रान्तः सखि! संशयः, स रमते, नैकाऽपि तस्य त्रपा
'व्यर्थे'त्यालपनप्रयोगसमये क्षणं विलोक्यागतम्।
दृष्टा किं श्रुतमश्रुतं किमथवेत्याशङ्कमाना नम-
द्वक्त्रा तेन विचुम्बिताऽथ सुमुखी स्पन्देन मन्दाऽभवत्॥२०१

अत्र 'विश्रान्त' इत्यादि वितर्कप्रशमः। 'स रमते' इत्यसूया, 'नैकाऽपि तस्य त्रपा व्यर्थे'त्यमर्षः—अनयोः सन्धिः। 'दृष्टे'ति हर्षः, 'श्रुतमश्रुतं वेति' वितर्कः, 'आशङ्कमाने'ति शङ्का, 'नमद्वक्त्रे'ति व्रीड़ा—एभिः शावल्यम्। 'स्पन्देन मन्दाऽभव'दिति जड़तोदयः।

माथुरविरहेणात्यन्तव्याकुला काचित् स्वचित्तस्य क्षणिकविनोदार्थमग्रे प्रथमतः श्रीकृष्णं लिखिष्यामीति स्फुरन्नभिनिवेशो यस्याः पश्चादार्त्ता तरलाऽश्रुस्राताक्षी चाभवत्। ततश्च लिखने विघ्नं दृष्ट्वोपायान्तरमपश्यन्ती विधिनिर्मातुर्विधेर्निन्दां विदधती स्वान्तमवष्टभ्य मनः स्थिरीकृत्य स्वयं प्रकृतिं स्वभावं प्राप्ताऽसौ सुस्था भूत्वा प्रायेशलिखनसमये मूर्च्छोदयेन सकलं विसस्मार। शिवशिवेति खेदे। स्पन्देन मन्दा रहिता जड़ाऽभवदित्यर्थः। विश्रान्तोऽमीत्याकूतपूर्णमावेदनम्। तृतीयचरणे 'हृदयेऽन्ये'ति पाठे, न ते सदैद्वृपतेव सुधानां माहशामभाग्यहेतुरपि तु धृष्टनायकसुलभोत्कटा कपटताऽपीति सरसमस्तमालनिवेदनम्। अयञ्च काकुताऽत्रापि किमपि वक्रोक्तिचातुर्य्यं लक्ष्यम्। अवष्टभ्य स्वान्तमिति—वस्तुतस्तु चित्तस्थैर्य एव प्रशमाख्यभावोद्गमो नातिसुलभः, निर्वेदस्थायिभावे पदवन्देऽव्यवमादिक्रमेण बहूनां भावानां प्रकृताभ्यायेन सन्निवेशः. यथा 'अहौ वा हारे वा' इति काव्यप्रकाशोदाहृते, 'एषोऽरेणुरन्ः यथापि कलिकाः कण्गुम्फ लिङ्गोऽलमि'ति दर्शिताशाशेरवरेण भक्तिरमणी·

अ प्र स उ—मनो रागज्वालाज्वरकवलितं भस्मातु चिरा-
दयं प्रेम्णे बद्धोऽञ्जलिरजनि दुःखस्य विगमः ।
गुरूणामाक्षेपः खलहसितमित्यपैतु पृथुता-
मिति स्वालीवृन्दे रुदति समरोदीदथ वधूः ॥ २०२

'राग' इत्युत्कण्ठा, 'ज्वाले'ति ग्लानिः, 'कवलित'मिति मोहः, 'भस्मत्वि'ति ग्लानिः—एभिः शाबल्यम् । 'अयं प्रेम्णे बद्धोऽञ्जलि'-रित्याद्यौत्सुक्यप्रशमः । 'गुरूणामाक्षेप' इति शङ्का, 'खलहसित'मित्यसूया—अनयोः सन्धिः । 'समरोदीदि'ति विषादोदयः । एते उदयोत्तराश्चत्वारः ।

अथालङ्कारसाङ्कर्येण ये प्रकारा भवन्ति तेषामपि दिग्दर्शनम्—तत्र 'हुँ मातरि'त्यत्र (१२८ श्लोके) 'मात'रिति त्रासः, 'धूर्तेय'मित्यसूया, 'आप भिय'मित्यवहित्था—अत्र शाबल्यं मौग्ध्यालङ्कारसङ्कीर्णम् । तेषामपि सेङ्गितनिरिङ्गितत्वेन पुनर्यद्द्वैविध्यमुक्तं तत्र निरिङ्गितमुदाहृतं, सेङ्गितस्य दिग्दर्शनं क्रियते । तत्र 'बाहुं दक्षिणमाश्लिष्टकण्ठवलय' इत्यादौ (१४० श्लोके) सेङ्गितो विलासनामाऽलङ्कारः । तत्र 'प्रौढमनोजविभ्रमभरैः श्यामेव विभ्राजते' (Y) इति श्रमगर्वयोः सन्धिः ।

एवमुदयशाबल्यादीनां दिग्दर्शने (Z) यथा—

निश्चितं परिसमापितमेव प्रेमशास्त्रपरिशीलनमालि ।
श्यामनाम कथमद्य गृहीतं हन्तयो यदखिलाः समुदीयुः ॥ २०३

अत्र 'खिला हन्तय' इति सर्व एव प्रागनुभूता विषादव्याधिग्लान्युन्मादा-मर्षासूयाऽदयः समानकालमुदितवन्तः । एवं 'श्यामनाम्नि विरता भव,

काचित् स्वस्य देहत्यागं निश्चिन्वती सखीः सनिश्चयमाह—मन इति । अनुरागज्वाला-रूपज्वरेण ग्रस्तं मनश्चिरकालं व्याप्य भस्मतु भस्मेवाचरतु, अहन्तु न जीविष्यामीति ध्वनिः । देह त्यक्ष्यन्त्या मम दुःखस्यापि विगमोऽजनि । इत्येवं स्वालीवृन्दे रुदति सति ।

प्रेमशास्त्रपरिशीलनं मया समापितमिति त्वदग्रे निश्चयं कृत्वा बहुधोक्तम्, हे आलि ! तथापि मदग्रे श्यामनाम त्वया कथं गृहीतम् ? यतः श्यामनाम्नो हेतुभूतान्मम ग्लान्यादयो-ऽखिलवृत्तयः समुदीयुः ।

मणिविशेषकेण कुलशेखरनृपेण प्रणीतायां मुकुन्दमालायां उत्तरार्द्धनिबद्धे पद्ये च । 'बाहुं दक्षिण'मित्यादि पूर्वपठितश्लोकेऽत्र किञ्चित् पाठभेदमाश्रित्य आविष्कृतम्—तत् लक्ष्यलक्षण-सङ्गतिं प्रत्यनुकूलमिति निर्देशेनैव व्याख्यातम् ।

शान्तिं यान्तु हन्त हृदयस्य विकाराः' इति प्रशमशाबल्यम्। एवं सन्धिशाबल्यं यथा—

उन्मादमोहावपि दैन्यचिन्ते वितर्कशङ्के समकालमेव।

दिशो दिशस्तस्य कथाप्रसङ्गे पूर्वानुभूत्या कुरुतोऽतिदुःखम् ॥२०४

'दिशो दिश' इत्यवस्थाभेदात्। तथाहि—विरहे 'उन्मादमोहौ', विप्रलम्भावस्थायां 'दैन्यचिन्ते', वासकसज्जाऽवस्थायां 'वितर्कशङ्के' दुःखमेव कुरुतः, तस्तत्प्रसङ्गं त्यजतेत्यर्थः (50)।

एवं स्वबुद्धिकौशल्यादनुमेयाः सुदृढिभिः।

ग्रन्थगौरवभीत्यैव मया नोदाहृताः परे॥

अनेनैव हि मार्गेण कवयो भावकोविदाः।

विदध्युर्भावकाव्यानि ( ) तेनायं प्रक्रमः कृतः॥

॥ इत्यलङ्कारकौस्तुभे रसभावतद्भेदनिरूपणो नाम पञ्चमः किरणः॥

एवमिति—पूर्वश्लोकस्यैवोत्तरार्द्धस्थाने यदि 'प्रशममान्विरते'त्याद्यर्द्धपद्यं पठ्यते तदा प्रशमशाबल्यं भवतीति। ***

(Z) उदयशाबल्यस्य 'समुदीर्ण'रिति पदादेव परामर्शः, प्रशमशाबल्यस्य 'विरता भव शान्तिं यान्त्वि'ति पदाभ्यामामानत एव प्रतीतिः। भावकाव्यानि विदधुः—न केवलं भावकाव्यनिर्मितावेव ग्रन्थकर्ता तातुपत्नेमपि तु बहुधा वितन्यमानेनानेनालोचनमयाकाव्याधारस्य गौरवमानेऽपि। 'भावकाव्यानी'ति पदादस्यालङ्कार-ध्वनि प्रतिष्ठापितकाव्यतो रमणीयानुभूतानामुत्तमोत्तमकाव्यलक्षणानां व्याप्तिरपि। इति

येषां वमतमायातोऽत्र भोक्ष्यामि परिसन्निलीनतादाम्भ्रो।

यदि मियं यदि मम कविता न कथा सुभग्राथमद्य मा।

मालिन्यतो मदभराद्गुरु श्रुतिसक्तं निबध्नतो हृदयवास्य दुर्लक्षलक्ष्म्।

एको रसः शतदुरन्तदशालिवनुभोगीहतः प्रजनितः स निहन्तु सत्।

रागो देवधामारं चोभजाते आर्तिं पातं यत्र लीनस्य यातु।

भावदेतादेतनीनाथपचे भाचोमूनः सोऽस्तु भूतान्तरात्मा।

इति मौक्तिकावल्यां पूर्वार्द्धमवसितम्। श्रीः——

(५०) 'अस्मीनेर्द [illegible]' (क) (ख) (ग) पुस्तकेषु।

# षष्ठकिरणः ।

अथ 'गुणा माधुर्य्याद्या' इति (१म किरणे १म कारिकायाम्) कृतोद्देशस्य गुणस्य लक्षणपरीक्षे करिष्यन् प्रथमतो लक्षणमाह—

**रसस्योत्कर्षकः कश्चिद्धर्मोऽसाधारणो गुणः ।**
**शौर्य्यादिरात्मन एव वर्णास्तद्व्यञ्जका मताः ॥ १७६ का**

आत्मन इति—यथा शौर्य्यादिकमात्मन एव नाकारस्य, (क) तथा माधुर्य्यादिकं रसस्यैव,न त्वाकाररूपयोः शब्दार्थयोः[1]। न ह्ययमाकारः शूरः स्थूलत्वादिति सद्धेतुः, अस्थूलस्यापि शूरत्वदर्शनात्, यथा महामतङ्गजपञ्चाननयोः। यत्तु वीरसूक्तयोः शिशुयूनोराकारगतमेव शूरत्वं तच्च वयःकृतमेव, तेन सव्यभिचारदोषादाकारस्य शौर्य्यादिगुणो न भवति किन्तु तस्य व्यञ्जक

अथ गुणस्वरूपस्योद्देशलक्षण-रीक्षा इति त्रय एव व्यवहाराः, तत्र काव्यरूपपुरुषवर्णनप्रसङ्गे 'गुणा माधुर्य्याद्या' इत्यनेन (१म कारिकायाम्) गुणस्योद्देशः कृतः। सङ्केपतो नाममात्रेण कथनमुद्देशः। उदाहरणं परीक्षा—साऽग्रे वक्ष्यते। अधुना गुणस्य लक्षणं करोतीत्याह—अथेत्यादिना। यथा जीवात्मन उत्कर्षजनक आत्मनिष्ठः कश्चिद्धर्मविशेष एव शौर्य्यं तथा रसस्योत्कर्षजनको रसनिष्ठः कश्चिद्धर्मविशेष एव माधुर्य्यम्। यथा नानाविधासाधारणगुणक्रिया एवात्मनः शौर्य्यव्यञ्जकाः, तथा कठोरवर्णभिन्नाः सुकुमारवर्णा एव रसनिष्ठमाधुर्य्यव्यञ्जका भवन्तीत्याह—वर्णा इति। तस्य माधुर्य्यस्य। नन्वनुमानादेव शौर्य्यमपि देहधर्म एव भवतीत्याह—नहीति। तत्र हेतुः यतोऽस्थूलस्य सिंहस्य शौर्य्यं, तथा स्थूलस्य मतङ्गजस्य न सिंहवच्छौर्य्यम्। वीरं सूते वीरसूस्तस्याः

(क) अथ गुणदोषालङ्काराणां स्वरूपनिर्णये सुखनसावद्यो गतिरभ्युपगम्यते। प्राचो दण्डिवामनादयस्तदनुसारिणः केचन नवीनालङ्कारशास्त्रविदश्च संघटनाश्रयत्वादिलौकिकन्यायमनुसन्धाना अदृष्टस्वरूपं रसमभावपक्षे स्थापयन्तो गुणानां प्राणत्वं शब्दार्थगतत्वश्चैवोद्घोषयन्ति। तेषामयमाशयः, गुणादिविवेचने प्रत्यक्षतः शब्दार्थचमत्कारित्वप्रतीतिरेव मुख्यं लिङ्गं. रसस्य कथञ्चिदनुभवसिद्धत्वेऽपि निर्दोषसिद्धस्याश्रयस्याभिव्यक्तिक्रमस्यास्य चोत्कर्षापकर्षप्रकाराः कथङ्कारं सम्भवेयुः, काव्यकर्त्तृणां काव्यकरणे शब्दार्थद्वारैव चमत्कृतिक्रमतो प्रवृत्तिश्चात्र प्रमाणम्। अर्वाञ्चो ध्वनिकारमम्मटविश्वनाथप्रभृतयस्तु काव्यस्य

(१) 'आकारो वर्णमयत्वा'दित्यधिकवाक्यांश. पाठ. (ज) पुस्तके।

आकारः । अत 'उत्कर्षकत्वं गुणत्व'मिति मुख्यं लक्षणम् । सदैकरूपस्यानन्दस्य रसत्वेनोत्कर्षापकर्षयोः प्रमाणाभाव इति रसशब्दोऽत्र तदास्वादार्थः (क), तेन रसास्वादोत्कर्षकत्वं गुणत्वम् ।

## गुणस्य व्यञ्जका वर्णाः—१७७ का

यथाऽयं शब्दार्थव्यतिकरः काव्यतया व्यवहरणीयो रसात्मकत्वाद् इति रसात्मकत्वहेतुमतोरेव शब्दार्थयोः काव्यव्यवहारः, तथाऽयं वर्णसमूहो मधुररसादिव्यञ्जकः सुकुमारादित्वात् इति सुकुमारत्वादिहेतुमतामेव वर्णानां रसस्य माधुर्यादिव्यञ्जकत्वे व्यवहारः । तेन समुचितमेव वर्णानां माधुर्यादिव्यञ्जकत्वम् (क) । ननु 'उत्कर्षकत्वं गुणत्व'मिति चेत्तदाऽलङ्काराणामप्युत्कर्षकत्वं वर्त्तते, तेषामपि गुणत्वमस्तु । सत्यं, यथा हारादयो ह्यलङ्काराः कण्ठाद्यङ्गान्येवोपकुर्वन्ति नात्मानं, तथाऽनुप्रासस्वभावोक्त्यादयोऽलङ्काराः शब्दार्थमेव, न तु काव्यम् । एवञ्चेत्तदा श्रुतिकटुपुष्टार्थादिदोषाणां शब्दार्थाश्रयत्वेन तदपकर्षकत्वमेवास्तु, कथं रसापकर्षकत्वं, यन्मूला तेषां दोषता ?

पुत्रयोः शिशुयूनोर्मध्ये शिशोरपेक्षया युवा शूर इत्यत्र यद्देहगतशूरत्वं तत् वयःकृतमेव, न तु गुणकृतमित्यतो निर्गुणकृतशौर्य्यं एवात्र दृष्टान्तो बोद्धव्यः । तेन स्थूलत्वरूपहेतोर्व्यभिचाराद् न शौर्य्यादिगुणो देहस्य न भवति, तस्य शौर्य्यस्य नानाविधगुणक्रियाविशिष्ट आकारो व्यञ्जक इत्यर्थः । अत इति—रसोत्कर्षजनकताऽवच्छेदकधर्मत्वं गुणत्वमित्यर्थः । न च 'गोपीभिः सह विहरति हरि'रित्यत्र शृङ्गाररसात्मकत्वं वर्त्तते, न तत्र काव्यत्वव्यवहारः, अतोऽत्र व्यभिचारात् कथं रसात्मकत्वस्य हेतुत्वमिति वाच्यम्, यतोऽत्र हेतौ (२) काव्यत्वजातिमत्त्व इति विशेषणं देयम् । 'गोपीभिः सह विहरती'त्यत्र काव्यत्वजातेरभावादेव न व्यभिचार इति भावः ।

तावत् स्वल्पोपेक्षानिर्दूभिततत्तरथामयं कुमतदुर्मितमिकरोचयमानाः स्वाश्रयोत्कर्षादिद्वारा रसोत्कर्षादिकृतत्वमित्वं गुणादीनां निर्दिशन्ति । प्राचीनपक्षीयाणां युक्तिमयमन्वयव्यतिरेकाभ्यां, लोकन्यायादरणीयस्य रसशब्दस्यास्वाद्यिकत्वनिर्वचनेन, काव्यघटनाऽनुकूलशब्दार्थयोर्व्यतिरिक्तत्वेऽपि सत्स्वन्यायेन रसाव्यभिचारित्वं प्रतिपादयता कवीनामाशयो हृद्येन च स्वीकुर्वन्ति । तत्र प्रकाशकृतां मम्मटभट्टानां 'तददोषौ शब्दार्थौ

(१) पत्र (२) पृष्ठे । [illegible] (४) पृष्ठे, 'यतोऽत्र हेतौ काव्यत्वजातिमत्त्वे [illegible] देय' मिति (५) पृष्ठे, [illegible]

उच्यते—*यथैव शौर्य्यादयो गुणास्तथैव कातर्य्यादयो दोषा अप्यात्मन एव* धर्माः, तस्यैवोत्कर्षापकर्षहेतव उपलभ्यन्ते। एवमेव माधुर्य्यादयो गुणाः श्रुतिकट्वादयो दोषा अपि रसस्यैवेति(3) ।

वर्णा माधुर्य्यादिव्यञ्जकाः सुकुमारत्वादिति, अत्र न तु सुकुमारत्वं कोमलत्वं, तस्य शिथिलत्वात्। यथा 'शिथिलं, मालतीमाला लोलालिकलिला (4) यथे'त्याचार्य्यदण्डिनः (क)। Kavyadarsa, Chapt 1 Verse 43

एवञ्चेदिति—तयोर्देहरूपयोः शब्दार्थयोरपकर्षकत्वमस्तु यन्मूला रसापकर्षकत्वमूला तेषां श्रुतिकट्वादीनां दोषता। तथा च 'रसापकर्षकत्वं दोषत्व'मिति दोषलक्षणात्तेषां रसापकर्षकत्वाभावेन माऽस्तु दोषत्वमिति पूर्वपक्षः। ननु सुकुमारत्वं यदि कोमलत्वमुच्यते तदा वर्णनिष्ठकोमलत्वं शिथिलत्वमेव भविष्यति, तत्र कठोरवर्णभिन्ने सर्वत्रैव वर्त्तते। एवञ्चेत् यत्र कवितायां लकारबाहुल्यमात्रं तत्र माधुर्य्यं नास्ति, किन्तु भवन्ति माधुर्य्यव्यञ्जका बहुतरलकारघटितकोमलवर्णा वर्त्तन्ते, इत्यतः सुकुमारत्वं न कोमलत्वमित्याह—न तु सुकुमारत्वमिति। तस्य कोमलत्वस्य शिथिलरूपत्वात्। यथा लोलालिभिः कलिला युता मालतीमालेति दण्डिनोक्ते पद्ये माधुर्य्याभावेऽपि कोमलवर्णा वर्त्तन्ते, एवमत्रापि शृङ्गाररसवर्णनप्रसङ्गे ।

नगुणा'वित्यादिना काव्यस्वरूपं प्रकटयता गुणानां विवेचनमाभासेन निर्दिशता पुनः 'ये रसस्याङ्गिनो धर्मा' 'आत्मन एव हि यथा शौर्य्यादयः, नाकारस्य, तथा रसस्यैव माधुर्य्यादयो गुणा' इत्यादि चाभिदधता प्राचीनपद्धतिसङ्गतिस्यागे काऽप्यनिच्छा स्फुटमेव वरीवर्त्तीति नवीनानां मध्ये तेषामनन्यतन्त्रत्वम्। कौस्तुभकृतो मम्मटमतानुसारिणोऽप्यत्र विषये द्वैधीभावकातराः यथोक्तमेव तैः 'शरीरं शब्दार्थौ ध्वनिरथव आत्मा किल रस' इत्याद्यादिमकारिकायाम्। एवञ्च 'रसोत्कर्षहेतुत्वे सति रसधर्मत्वं, तथात्वे सति रसाव्यभिचारिस्थितित्वम्, अयोगव्यवच्छेदेन रसोपकारकत्वमिति लक्षणत्रयं गुणानां द्रष्टव्य'मिति प्रदीपोक्तौ न केषामपि तेषामाधुनिकानां विमतिः। यद्यप्यत्र पक्षोऽपि नासम्यङ् यतो विमृश्यवर्णघटनेनापि गुणत्वं भाति, एवं सति वर्णादीनां व्यञ्जकत्व-

(3) इत ऊर्द्ध देहस्य काणत्वखञ्जत्वादिदोषेऽपि 'काणोऽयं देह' इति न कश्चिदपि वदति अपि तु काणोऽयं देवदत्त इत्यादेव, न तु देवदत्तो देह', देवदत्तस्य देहोऽयमिति प्रतीतेः, तेनोपचारादेव दोषाणां रसापकर्षकत्वं, वस्तुतस्तु शब्दार्थयोरेव। एवमलङ्काराणामप्युपचाराद्रसोत्कर्षताऽस्तु तथा सति तेषामपि गुणत्वेन भूयताम्? नैवम्, तेषां शब्दार्थालङ्कार्य्यं चोपचीयत्वात्, कथं रसापेक्षत्वं, येनोपचारेण भवितव्य'मिति मुद्रितपुस्तके एतावानतिरिक्तः पाठः।

(4) 'कलिते'ति (ख) (क) पुस्तकयोः पाठः।

अत्रापि—लीलाऽम्बुजमानिताङ्गी लघु लघु ललनाललाममौलिमणिः ।
ललिताऽऽदिभिरालीभिर्विलसति ललितस्मिता राधा ॥ १

तेन सौकुमार्यं नाम रञ्जकत्वम् (5) ।

यदुक्तमन्यैः, 'कर्णारः काव्यशोभाया धर्मा एव गुणाः स्मृताः ।
अलङ्कारास्तदुत्कर्षहेतवः स्युरिति क्रमः ॥' इति

ललनाया उत्कृष्टमुकुटमणिः श्रीराधिका सखीभिः सह लघु लघु यथा स्यात्तथा विलसति—इत्यत्र माधुर्याभावेऽपि मसृणलकारघटितकोमलवर्णा वर्तन्ते। रञ्जकत्वमिति—चेतश्चमत्कारकारित्वमित्यर्थः। यथाऽद्भुतवस्तुदर्शने सति नेत्रस्य स्फारकताजनक-चमत्कारो जायते तथैवाद्भुतसुकुमारवर्णानां श्रवणे सति चित्तस्य स्फारकताजनक-चमत्कारो भवतीति बोध्यम्।

मेव, नेतरदिति राद्धान्तः सुष्ठु। गुणालङ्कारविवेके च त्रयः पक्षाः—तत्र 'न कान्तमपि निर्भूषं विभाति वनितामुख'मिति लौकिकन्यायमुपजीवतां भामहादीनामलङ्कार एव काव्यस्वरूपे प्रधानं लिङ्गमिति व्यपदेशिनामुभयोरभेदकल्पनेत्येकः पक्षः। तथा च तदुपजीव्य वर्त्तमानानामाचार्योद्भटानां मालूतसूक्तौ 'समवायवृत्त्या शौर्यादयः संयोगवृत्त्या तु हारादयः इति गड्डलिकाप्रवाहेणैवैषां भेदः' 'केनापि प्राक्तनालङ्कारिकेण गुणालङ्कारौ कथाचिद् भ्रान्त्या भिन्नत्वेनोक्तौ, इतरे चाधुनिकास्तु विनैव हेतुविचारं तदनुसारेण तद्भेदं वदन्ती'ति चाचार्यदण्डिवामनयोरुपरि कलङ्कपङ्कलेपार्थे। द्वितीयः पक्षो रीतिगुणालङ्कारादिभिः वर्द्धितो वामनादिमतं 'यदुक्तमन्यै'रिति प्रतीकेन मूले व्याचिख्यासुः। चन्द्रालोकप्रतापरुद्रीयादिनिबन्धानां मतमालम्बिताकारोत्याभासव्याप्तैव मूले। 'निर्दोषा लक्षणवती सरीतिर्गुणभूषिता। सालङ्काररसानेकवृत्तिर्वाक् काव्यनामभाक् ॥' इति स्वरूपनिर्देशकारिकायाः विद्यानाथीयलक्षणस्य वा 'कर्णारः काव्यशोभाया धर्मा एव गुणाः स्मृता' इत्यादिकारिकया सह सम्वादः। तृतीयपक्षस्तु नवीनानां मतानुयायी 'शब्दार्थयोरस्थिरा ये धर्मा अलङ्कारास्ते' इत्यलङ्काराणां गुणतः स्वरूपतो भेदः। वामनोऽपि कश्चिदस्फुटतयाऽत्र तदीयमभाति ( ३।१।२ काव्यालङ्कारसूत्रवृत्ति ) सुद्धाटयामास। तथाच तत्र तट्टीकाकारा च्छिप्पभूपालचरणाः—'नित्यानित्यत्वाभ्यां गुणालङ्कारभेदः सिद्ध' इति। अलङ्काराणां शुभचाराद्रसोत्कर्षता, वस्तुतस्तु ते गुणोत्कर्षतोऽभिन्ना इति पक्षः 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति नयेनालङ्कारस्योपचीयत्ते प्रध्वस्तकल्पः। अतोऽव्याप्त्यतिव्याप्तिवारणाय वर्णानां गुणव्यञ्जकत्वमायातीत्यनूद्यते। एतच्चिपद्याश्रस्तु स्पष्टशैथिल्यस्याप्य शिथिलस्य नव्यतेऽशी शय्यास्वरूपस्य निदर्शनम् अत्रेदमवधेयम्, न तावदाचार्यदण्डिमतेऽत्र शिथिलत्वदोषस्पर्शः—परमयं गुणगुम्फित एवेति कश्चित्। 'उज्ज्वलमङ्गुल्यं'रित्यत्र प्रथम किरणे स्वल्पः पाठभेदः। 'अथैकस्ये'त्यादि टीकालतामाश्चैषस्ततृसमाधानञ्च प्रागुक्तदिशा सूचितकल्पमिति विरम्यते।

---

(5) 'व्यञ्जकत्व'मिति (ख) (ग) पुस्तकयोः। (क) पुस्तके टीकायामपि स एव पाठो गृहीतः ।

तदपि नातिमनोज्ञम्—यतः खलु गुणालङ्कारादिमद्वाङ्निर्मितिविशेषस्यैव (6) काव्यत्वाङ्गीकारे न गुणालङ्कारादिभ्योऽन्यः काव्यनामा पदार्थोऽस्ति, नापि काव्यादन्ये गुणालङ्काराः, के कस्य शोभायाः कर्त्तारो भविष्यन्ति ? किञ्च काव्यशोभायाः कर्त्तार इत्येकस्यैव काव्यस्य किं सर्वे गुणा शोभाकर्त्तारः, किं पृथक् ? आद्येऽसमग्रगुणयोः पाञ्चालीगौड्योः काव्यशोभाकरत्वानुपपत्तिः । यदि वा पृथगेव तदा 'अर्जन्तृस्फूर्जद्गर्जने'त्यादौ(१म किरणे ६ श्लोके) सत्यप्योजोगुणे नास्य शोभा । तेन वर्णा एव माधुर्यादिव्यञ्जकाः, माधुर्यादयो मधुररसाद्युत्कर्षका इति स्थितम् (क) ।

—ते माधुर्य्यादयः पुनः (7) ॥ १७८ का

अथ कति ते इत्याह (7)—

माधुर्य्यमपि चौजश्च प्रसादश्चेति ते त्रयः ।
केचिद्दशेति ब्रुवत एष्वेवान्तर्भवन्ति ते ॥ १७९ का

ते गुणाः सप्त एष्वेव माधुर्यादिष्वेव । के ते सप्तेति दर्शयति—

कस्यचिन्मते माधुर्य्याद्या गुणाः काव्यपुरुषस्य शोभाकर्त्तारः, अलङ्कारास्तस्योत्कर्षहेतव', तन्मतं दूषयितुमुपन्यस्यति—यदुक्तमिति । एतन्मतं दूषयति—यत इति । गुणालङ्कारविशिष्टस्यैव तन्मते काव्यत्वाङ्गीकारे गुणालङ्कारावपि काव्यपुरुषान्तर्भूतावेव, तत् कथं गुणस्य काव्यशोभाकरत्वं कथं वाऽलङ्कारस्य काव्योत्कर्षकत्वं, स्वस्य स्वशोभाजनकत्वाद्यभावात् । दोषान्तरमाह—किञ्चेति । यद्येकस्य काव्यपुरुषस्य सर्वे गुणा एव शोभाकर्त्तारो नान्ये (क), किंवा गुणजन्यशोभां प्रति गुणस्य कारणत्वं, गौड़ीप्रभृतिरीतिजन्यशोभां प्रति रीतेः कारणत्वमिति पृथक् पृथक् कारणत्वम्—इति पक्षद्वयं क्रमेण दूषयति । आद्य इति । नापि द्वितीयः पक्ष इत्याह—यदि वेति । पाञ्चाल्यादीनां पृथक् शोभाजनकत्वाङ्गीकारे पाञ्चाल्यादीनामपि गुणत्वापत्तिः, यदि तत्र गुणत्वं वारयाय 'पाञ्चाल्यादिरीतिभिन्नत्वे सति काव्यशोभाकरत्वं गुणत्व'मित्युच्यते तदा 'उर्ज्जन्तृस्फूर्ज'दित्यत्रौजोरूपगुणेऽव्याप्तिः, तत्र काव्यशोभाजनकत्वाभावात्—माधुर्यप्रसादगुणयोरेव काव्यशोभाजनकत्वं, न तु ओजोगुणस्येति ज्ञेयम् ।

पुनः स्वमतमाह (ख)— ते इति ।

(6) '—मद्वाङ्निर्मिति, काव्यमिति विशेषस्यैव काव्यत्वाङ्गीकार' इति (ख) पुस्तकेऽन्यः पाठ ।

(7) 'अथ के ते माधुर्य्यादयो गुणा' इत्यसमाप्तश्लोकांशकारिकावर्जितः सुगरामसङ्गतः पाठ (ख)

(क) पुस्तकयोः ।

अर्थव्यक्तिरुदारत्वं श्लेषश्च समता तथा ।
कान्तिः प्रौढ़िः(ख) समाधिश्च सप्तैते तैः समं दश ॥१८०का

तैर्माधुर्य्यादिभिः । समानां लक्षणमाह—

प्रसाद एवौजोमिश्रशैथिल्यात्मा भवेद्यदि ।
तदाऽर्थव्यक्तिरिष्येत, विकटत्वमुदारता ॥
पदानामेकरूपत्वं सन्धग्राढावस्फुटे सति ।
श्लेषो, मार्गाभेद एव समतो,ज्ज्वलमेव हि ।
कान्तिः, साभिप्रायतया समासव्यासयोः सतोः ॥
वाक्यार्थे पदविन्यासः पदार्थे वाक्यनिर्मितिः ।
प्रौढ़ि,रारोहावरोहक्रमः समाधिरिष्यते ॥ १८१ का

तदन्तर्भावे युक्तिं वक्ति ।

तेष्वेवान्तर्भवन्त्येक एके वैचित्र्यबोधकाः ।
एके दोषपरित्यागाद्गतार्था इति (8) नो दश ॥१८२का
अर्थव्यक्तिः प्रसादान्तः प्रौढ़िर्वैचित्र्यबोधिका ॥१८२(क) का

न तु गुण इत्यर्थः (ख) ।

समता तु क्वचिद्दोषः—१८३ का

समता तु क्वचिद्दोषोऽपि भवति । कुत इत्याह—

वैषम्यं यत्र वाञ्छ्यते ।
सजातीयविजातीययुगपद्दर्शने सति ॥ १८४ का

समानामिति—प्रस्तुतमिदानीं समानां लक्षणमात्रं कृतं, न तु तेषामुदाहरणम्—अनन्तरदिता लक्षणव्याख्याऽपि स्पष्टतया न भविष्यतीति । यत्र म सर्वेति—न वैषम्यमभीष्टं

(ख) प्रौढ़िरिति—इतिरागमनादिशिक्षिते गुणत्वे गृहीतस्य सौकुमार्य्यस्य स्थलेऽस्योद्देशः । सदयमोऽस्तु अर्थगुणविवेचनप्रस्तावे वामनेन 'अर्थस्य प्रौढ़िरोजः' (३।२।२) इति कृतनिर्देशस्यौजसो विभेदप्रदर्शनेऽस्यावरोह इति ज्ञेयम् । माधुर्य्यसौकुमार्य्ययोः प्राचीनपरिभाषितयोर्भेदे सतोऽनयो भेदानुपलब्धिरपीह प्रथा । प्रसादनादेति—सरमसैवेति यत् गुणम् । एतन्मतन्तु कौस्तुभकृता प्रकाशकृदादीनमनुसृतया दर्शितम् । गुणानां

(8) '—न [illegible] इति [illegible] [illegible] कृतिपुस्तके ।

यत्र परस्परविसदृशयोर्युगपद्दर्शने वैषम्यमभीष्टं तत्र समता दोष एव । यत्र न तथा तत्र गुणः । यथा—

ऊर्द्धोर्द्धस्थदिगोवर्द्धन (ख) शिखरिवरोद्धारसारोहुरोऽहं
यद्दे पङ्केजनेत्रे ! तव कुचमुकुलालोकने जातकम्पः ।
उद्दण्डे कालियस्य स्फुटविकटफणामण्डले ताण्डवाढ्यः
सोऽयं (9) राधेऽभिभूतस्तव तरलितया हन्त वेणीभुजङ्ग्या ॥ २

इत्यादिष्वसमतैव गुणः ।

**ग्राम्यकष्टत्वादिहानादपारुष्योररीकृतौ ।**
**औज्ज्वल्यरूपा या कान्तिः सा माधुर्य्यान्तरस्थिता(ख) ॥**
**अन्ये त्वोजसि वर्त्तन्ते तेन ते न पुनर्दश ॥ १८५ का**

अन्ये श्लेषसमाधुदारता ओजस्येवान्तर्भवन्तीत्यर्थः । नन्वेवं चेत् क्लिष्टत्व-दोषनिरसनेनैव प्रसादगुणस्यापि माधुर्य्य एव लभ्ये: किं प्रसादगुणस्य पृथङ् निर्देशः ? नैवं, प्रसादस्य स्वतःसिद्धत्वात् क्वान्तर्भावः ? अन्यथाऽनवस्थाप्रसक्तेः ।

तत्र समता गुण एव । वैषम्यवर्णनमेवाह—ऊर्द्धेति । ऊर्द्धस्थितान् केचादीनपि स्वर्द्धते यो गोवर्द्धनो गिरिश्रेष्ठस्तस्योद्धारे सारोहुरः श्रेष्ठभारवाहकोऽहम् । यद्दे यद्धाविशिष्टो भवामीत्यर्थः ।

ग्राम्यत्वकष्टत्वादिदोषाभावादपारुष्यस्याकठोरत्वस्याङ्गीकृतौ या कान्तिः सा माधुर्य-स्यान्तर्भूता न पृथक् । नैवमिति—यथाऽयं घटोऽयं पट इति पृथक् पृथग्व्यवहार एव घट पटयोः पृथक्त्वे प्रमाणं तत एव नैकस्मिन्नन्यस्यान्तर्भावः सम्भवति, तथैवायं प्रसादगुणोऽयं माधुर्य्यगुण इति पृथग्व्यवहार एव पार्थक्ये प्रमाणमित्यर्थः—अन्यथा सर्वेषां पदार्थानां सर्वेष्वन्तर्भावप्रसक्तेरनवस्था स्यादिति ध्येयम् । नन्वेवं चेत् यमानां गुणानामपि माधुर्य्यादि-ष्वन्तर्भावो न सम्भवति तेषामपि पृथक् पृथग्व्यवहारा वर्त्तन्त एव इत्यत आह—किञ्चेति । उभयमिति—त्रिविधत्वं यत्र ? ( दश ) विधत्वमित्युभयमित्यर्थः ।

त्रैधत्वमेवोपपादयन्त उद्द्योतकृतो नागोजीभट्टा इत्थमेषां रसधर्म्मत्वमपि प्रतिष्ठापयामासुः— 'सामाजिकानां तद्रसवत्त्यास्तिसोऽवस्था द्रुतिर्विस्फारो विकाशश्चेति । तत्र शृङ्गारशान्त करुणेभ्यो द्रुतिश्चित्तस्य । वीररौद्रबीभत्सेभ्यो विस्तारस्तस्य । हास्याद्भुतभयानकेभ्यो विकाशश्चेति । विकाशश्च हास्ये वदनस्य अद्भुते नयनस्य भयानके मृत्यापसरणरूपो गमनस्य । स च कश्चिद्विस्तारेण युक्तः विभाववैचित्र्यात् । प्रसादस्तु सर्वेषामाशित्वकारी-

(9) 'सोऽहमिति (क) (ग) (घ) (ङ) पुस्तकेषु पाठः ।

किन्तु मतान्तरकथनमेवैतत्, तेन दशविधत्वं न दुष्टमित्युभयमस्माकमभीष्टम् (10) (ख)।

अथ माधुर्य्यादयः के ते इत्याह—

रञ्जकत्वं हि माधुर्य्यं चेतसो द्रुतिकारणम्।
सम्भोगे विप्रलम्भे च तदेवातिशयोचितम्॥ १८६ का

चकारात् करुणादौ च (ग)।

चेतोविस्ताररूपस्य दीप्तत्वस्य हि कारणम्।
ओजः स्याद्वीरवीभत्सरौद्रेषु क्रमपुष्टिकृत्॥ १८७ का

दीप्तत्वं शैथिल्याभावः गाढ़त्वमित्यर्थः। तच्च चेतसो विस्तारहेतुर्विस्फारकारणम्—क्रमाद्वीरादिषु पुष्टिमर्हतीत्यर्थः।

श्रुतिमात्रेण यत्रार्थः सहसैव प्रकाशते।
सौरभ्यादिव कस्तूरी प्रसादः सोऽभिधीयते॥
स सर्वेषु रसेष्वेव सर्वास्वपि च रीतिषु।
उपयुक्तः (ग)—१८८का

स प्रसादनामा गुणः।

व्यञ्जकाः स्युर्वर्णाश्च रचना अपि॥ १८९

तेषामित्यर्थात्। तत्र वर्णानां व्यञ्जकत्वमिदानीं दर्श्यते, रचनायां रीतिनिरूपणे दर्शयितव्यम्।

स्पर्शाः स्वपञ्चमाधःस्था अटवर्गा लघू रणौ ।
माधुर्य्यव्यञ्जका वर्णा नैकरूपाः क्रमेण चेत् ॥ १६०का

नैकरूपा इति पृथक् पृथग्वर्गजा एव । अटवर्गा इति टवर्गः केवलो वा स्वपञ्चमाधःस्थो वा ओजस्येव । उदाहरणम्—

विधाय पुष्पावचयं चलन्त्या मञ्जीरनादो मदखञ्जनाक्ष्याः ।
मन्दोऽप्यमन्दं हरिमञ्जनाभं कुञ्जेशयं जागरयाञ्चकार ॥ ३

नैकरूपाः क्रमेणेत्येकरूपत्वं दूषणम् । यथा—

कान्ते निशान्ते एकान्ते पादान्ते क्रान्तिमन्तति ।
भञ्जसे गञ्जनव्यञ्जौ मञ्जीरौ मञ्जुभिः स्वनैः ॥ ४

इत्यादिः खल्वनुप्रासरीतिरूढस्य वर्त्मनः ।
माधुर्य्यबहुलत्वेऽपि गौड़ीया रीतिरिष्यते (ग)॥१६०(क)का

किन्तु—शुम्भे तव कञ्जाक्षि ! कान्तिः काञ्चनबन्धुरा ।
अम्बुदोपरि शम्पेव नन्दनन्दनवक्षसि ॥ ५

तदादिरित्यर्थः । तेषां माधुर्य्यादीनाम् । स्पर्शा इति—कादयो मकारपर्य्यन्ता वर्णाः स्पर्शा इत्यर्थः । तत्र स्वस्य कवर्गस्य पञ्चमो ङकारः तदधःस्थाः ङ्क-ङ्ख ङ्ग ङ्घ वर्णा माधुर्य्यव्यञ्जका भवन्ति—एवं चवर्गादपि ज्ञेयम् । अटवर्गा इति—टवर्गास्तु सर्वथैव न माधुर्य्यव्यञ्जकाः । रेफ-णकारौ लघू एव माधुर्य्यव्यञ्जकौ । चेत् यदि ते पञ्चमाधःस्था वर्णा एकरूपा न भवन्ति तदा माधुर्य्यव्यञ्जकाः— यदि चैकस्मिन्नपि काव्ये ङ्क ङ्क ङ्कादिसजातीयवर्णानां धारावाहिकतया निवेशस्तदा दोष एव—उदाहरणे व्यक्तीभविष्यति । तस्मात् पृथग्वर्गजा एव पञ्चमाधःस्थसंयुक्तवर्णा ग्राह्या, न त्वेकवर्गजा इत्यर्थः । एकवर्गस्थसजातीयवर्णानां निवेशो दोषो यथा 'कान्ते निशान्ते' इति । कान्ते श्रीकृष्णे एकान्ते निशान्ते मन्दिरे त्वामन्विष्य पदान्ते क्रान्तिं श्रममन्तति प्राप्ति सति । अति अदि बन्धने धातुः—श्रमं प्राप्नवतीत्यर्थः । त्वन्मञ्जीर एवाङ्गः श्रीमन्तव गमनस्यानैव स्वं वदंस इत्याचेपस्य व्यञ्जी प्रकाशकः ।

अनुप्रासरीतियुक्तस्यास्य मार्गस्य मधुरवर्णबहुलत्वेऽपि गौड़ीया रीतिरेवात्र, न तु रसनिष्ठं माधुर्य्यमिति ज्ञेयम् । शम्पा विद्युदिव । तद्देवैव माधुर्य्यरूपमेवानुप्रास इति

(ग) चकारात् व्यादिपदेन भ्रान्तोऽपि गृहीतः । इदानीं रसनिष्ठधर्मत्वमेषां दर्शयति । त्रिधा विभागस्य तत्वमूलकत्वोक्तिस्तदुक्तमत सात्यौयम्, तच्च प्राक् दर्शितम्, प्रसादगुणस्य रसविशेषातिरिक्तत्वम् । प्रसादस्य खलु वाक्यनिष्ठो गुण इतन्याभ्यां भिन्न इति जयदेवादिमतम् । गौड़ीया रीतिरिति—अयमुप विभागो रीतिगुणस्वरूपनिरूपणकाठिन्यकलितोऽनवस्थापादकश्च

गर्वादिगर्वखर्वीकरण(12)-रणभुजादण्डशौटीर्य्यचण्डः
शिष्टाभीष्टं क्रियोष्ट प्रचुरघनघटाविक्रमश्चक्रपाणिः ॥ ६

एष ओजोमार्गः ।

अटवर्गैररेफैश्च क्खग्घाभ्याञ्च विवर्जितैः ।
अयुक्तश्च महाप्राणैर्मध्यतां प्रतिपद्यते ॥ १८२ का

मध्यतां मध्यौजस्त्वम्(ग) । क्खग्घाभ्यामिति—अच्छादिवर्जनं न कार्य्यमित्यर्थः । महाप्राणैरिति हकारेण सह वर्गचतुर्थस्तैः, अयुक्तैः केवलैरित्यर्थः, चकारात् क्वचित् संयुक्तैश्च ।

शृङ्गारेऽप्येष चारुः स्यात् करुणादौ भवेन्न वा ।
माधुर्य्यव्यञ्जकैर्वर्णैर्युक्तश्चेदतिसुन्दरः ।
गाढ़बन्धः स आख्यातः पाठे वदनपूर्त्तिकृत् (घ)॥१८३का

यथा—कस्तूरीतिलकायितं त्रिजगतीसौभाग्यलक्ष्म्या घन-
स्निग्धश्याममगण्यमसमधिकश्लाघ्यं मुहुः पातु वः ।
आभीरीस्तनकुम्भकुङ्कुमरसासङ्गेन सौगन्ध्यभाग्—
ब्रह्मानन्दमहासुधाम्बुधिरहःसन्दोहदोहं महः ॥ ७

ऊर्द्धं यस्य पादपीठं सर्वेषां देवराजप्रभृतीनां मूर्द्धि मुकुटसमन्वितरत्नदीप्तिच्छटाभिर्व्याप्तं प्रकटितपटुतायाः प्रौढ़िर्गर्भे येषां तैर्मनोभिस्तेजोभिः करणैर्व्वादैर्वादैरपि गर्वस्य खर्वीकरणे ख्यातो यो भुजादण्डस्तस्य शौटीर्य्ये पराक्रमे प्रचण्डश्चक्रपाणिः शिष्टानामभीष्टं क्रियोष्ट । कथम्भूतः ? प्रचुरो मेघतुल्यश्चक्रपाणिक्रमो यस्य सः ।

एष मध्यमौजोव्यञ्जकवर्णः स शृङ्गारे कस्मिंश्चिन्मते चारुः स्यात् कस्मिंश्चिन्मते न । ब्रह्मानन्दस्वरूपमहासुधाम्बुधेः सकाशादपि यो रहःसन्दोहो रहस्यप्रेमानन्दसमूहस्तं पूरयति यन्महस्तेजःस्वरूपं वस्तु तद्वो युष्मान् पातु । कथम्भूतम् ? मेघतुल्यस्निग्धश्यामं पुनश्चायाससाममगतरुषमेकरूपमित्यर्थः । पुनः त्रिजगतीसौभाग्यसम्पत्तिरूपनायिकायाः कस्तूरीतिलकायितम् ।

(घ) 'गाढ़बन्धत्वमोज' इति वामनकृतं शब्दगुणत्वेन निर्द्दिष्टस्यौजसो लक्षणम् । 'बन्धः पदरचना, तस्य गुणा ओजःप्रभृतय' इति कविप्रियायाम् । स च बन्धो दृढ़मिश्रशिथिलभेदेन त्रैविध्यमापन्नो यथायथं चमत्कारमावहतीत्याकरे सूचितम् । अत्र सौन्दर्य्यञ्च न पाठधर्मत्वेन,

(12) —'करणचणभुजो'त्यादि' पाठः केवलम् (क) पुस्तक एवोपलभ्यते ।

यथा वा—सान्द्रानन्दघनं घनाघनघटास्निग्धोज्ज्वलश्यामल-
ज्योत्स्नाजालजटालमालय इव प्रेमाब्धिलोकीश्रियः ।
कृष्णस्याङ्गमनङ्गसङ्गरलसद्गोपाङ्गनाऽपाङ्गक-
व्यासङ्गेन तरङ्गितं मम मनः सङ्गित्वमङ्गीक्रियात् ॥ ८

प्रसादस्य व्यञ्जिका तु केवलं रचना मता ।
न तत्र वर्णप्राधान्यं प्रसादो विशदार्थता ॥ १६४ का

सर्वेष्वेव रसेषु प्रसादस्योपयुक्तत्वान्न वर्णगतनियमः । उदाहरणम्—
कोपे यथाऽतिसरलितं न तथा प्रसादे वक्त्रं विधे ! सततमातनु मानमस्याः ।
इत्याकलय्य दयितस्य वचोविभङ्गीं राधा विहस्य विनम्रमुखी बभूव ॥ ९ ॥

यद्यपि गुणपरतन्त्रा रचनाद्यास्तदपि वक्त्रादेः (घ) ।
औचित्यात्तदधीना भवन्ति तस्माद् गुणोऽपि तदधीनः॥१६४(क)का

तस्माद्धेतोः, वक्त्रादेर्वक्तृवाच्यबोद्धव्यानां, तदधीनो वक्त्राद्यधीनः । उद्धते
वक्तरि उत्तमौजो धीरोदात्ते वक्तरि मध्यमौजो धीरललिते वक्तरि माधुर्यं,

## सप्तमः किरणः ।

अथ 'उपमितिमुखोऽलङ्कृतिगण' इति (१मकारिकायाम्) यदुक्तं तत्र मुखशब्दस्य मुख्यार्थत्वादमुख्यस्य प्राप्तौ प्रथमतोऽमुख्यं शब्दालङ्कारमेवाह—

एकेनार्थेन यत् प्रोक्तमन्येनार्थेन चान्यथा ।
क्रियते श्लेषकाकुभ्यां सा(१)वक्रोक्तिर्भवेद्द्विधा (क) ॥
श्लेषोऽपि च भवेद्द्वेधा सभङ्गाभङ्गभेदतः ॥ १८५ का

श्लेषेण काका वा, श्लेषश्च द्विधाऽभङ्गः सभङ्गश्चेति । तत्राभङ्गश्लेषेण—
'कस्त्वं श्याम !' 'हरि'-'र्बभूव तदिदं वृन्दावनं निर्मृगं'
'हंहो नागरि ! माधवोऽस्म्यत्र'-'समये वैशाखमासः कुतः ?'
'मुग्धे ! विद्धि जनार्दनोऽस्मि' 'तदियं योग्या वनेऽवस्थिति'-
'र्बालेऽहं मधुसूदनोऽस्मि' 'विदितं योग्यद्विरेफो (क) भवान्' ॥ १

अथात्रालङ्कारो द्विविधोऽर्थालङ्कारः शब्दालङ्कारश्चेति । तत्र पूर्वोक्त "उपमिति-मुखोऽलङ्कृतिगण" इत्युपमितिप्रभृत्यर्थालङ्कारो मुख्यः, वक्रोक्त्यादिशब्दालङ्कारो गौणः । अत्र आदौ गौणालङ्कारमेवाह—अथेत्यादिना ।

अभिधावृत्तेरेकेनार्थेन यदस्तु प्रोक्तं श्लेषकाकुरूपेण व्यञ्जनावृत्तिभ्यां प्रोक्तेनान्येनार्थेन तदवस्त्वन्यथा क्रियते तत्र स्थले शब्दनिष्ठो वक्रोक्त्यलङ्कारो ज्ञेयः ।

श्रीराधिका आह—हे श्याम ! त्वं कः ? अभिधावृत्त्या प्रत्युत्तरमाह—हरिरिति । पुनः श्लेषरूपव्यञ्जनावृत्त्या 'हरि'शब्दस्य सिंहपरत्वमभिप्रेत्य श्रीराधा पूर्वार्थमन्यथा करोति—बभूवेति । जनानर्दयतीति श्लेषेण जनपीडकः, अतो वनेऽवस्थितिस्तव योग्यैव । द्विरेफो भ्रमरः, श्लेषेण द्वौ रेफौ यत्रेति व्युत्पत्त्या त्वं बर्बरोऽपि । यो हि गोपालकः स बर्बरो भवतीति प्रसिद्धः ।

---

(क) अथ तावत् काव्यमार्गेऽलङ्कारतया निरूढानां कियती मर्यादेति चिरन्तनानां भामहादीनां सत्यामपि बहुधा विप्रतिपत्तौ ध्वनिकारव्यवस्थापिताध्वनि विहरतां नवीनानां नायं प्रश्नः कामपि सन्देहकूटकोटिमधिरोहति । यत्तु प्राचीनानां सुखपाठेन वक्रोक्ति-

सभङ्गो यथा—

'कान्ते' 'कीर्त्तिरकीर्त्तिरेव' 'वद मे किञ्चि'-"ज्जडेभ्यः परं"
'धीरा काऽपि भवत्यहो' 'कथमहो बुद्धिर्भवेत् पूर्णिमा ?'
'का मेधा तव भूयसी' 'न मदने, त्वय्येवमाधारण'-
'त्वन्मा मा स्पृश' 'न स्पृशेय'मिति स श्रीमाञ्जितो राधया (क)॥१२

काक्वा यथा—

न वदति हरिणाऽपि पृच्छ्यमाना न वत विलोकयसे विलोक्यमाना।
निजमभिमतमीक्षतामिदानीं विधुवदने। समयः स नो न भावी ॥ १

अपि तु भाव्येव, यदा भविष्यति तदा वैकल्यञ्च द्रक्ष्याम इति भावः।

**अनुप्रास्यत इत्यर्थेऽनुप्रासो(२)वर्णसाम्यतः ॥१८६॥**

सजातीयं वर्णमनु सजातीयवर्णान्तरं प्रकर्षेणास्यत इति व्युत्पत्तिः।

हे कान्ते! इति कृष्णेन सम्बोधिता मानिनी व्यञ्जन्ते कान्ता न भवामीत्यर्थं व्यञ्जयन्ती कान्ते नाम्नि मति तिष्ठतीति प्रश्नस्योत्तरमाह—एतस्य जगस्य कीर्त्त्यकीर्त्ती एव तिष्ठतः नान्यत् किञ्चिदपीत्यर्थः। किञ्चिन्मे वदेत्युक्ता सा त्वया सह सम्बन्ध एव मम नास्ति किं वक्ष्यामीतीममर्थं व्यञ्जयन्ती चिद्वस्तु किमिति प्रश्नस्योत्तरमाह, जडेभ्यः परं जडभिन्नमित्यर्थः। धीर्बुद्धिः कथं राका पूर्णिमा भवेत्, का मेधा बुद्धिस्तवेत्युक्ते कामे कन्दर्पे धा धारणमित्युच्यते चेत् मम कन्दर्पे धारणा नास्ति, किन्तु त्वय्येवेति, प्रश्नस्योत्तरं दत्त्वा यत्किञ्चित् स्वरचनायां तत्तन्मान्मा स्पृशेति प्रश्ने त्वामहं न स्पृशेयमित्युत्तरं कुर्वत्या राधया जित एव।

इदानीं मानस्य शान्त्यर्थं निजमभिमतमीक्षतां क्रियतामित्यर्थः। यस्मिन् समये मदुत्तरलोध्वनिर्भविष्यति स समयो नोऽस्माकं न न भावी, अपि तु भविष्यत्येव—तदा स्वयं मानं विहाय व्याकुला भूत्वा तन्निकटे गमिष्यसीत्यपि तव वैकल्यं द्रक्ष्यामः।

अनु पश्चात् प्रास्यते प्रकर्षेणास्यते क्षिप्यते इति व्युत्पत्त्या यत्र सजातीयवर्णस्य प्रक्षेपस्तत्रानुप्रासालङ्कारो ज्ञेयः। सजातीयया सकृत्त्वेन, तथा च यत्र सजातीयवर्णद्वयस्य सकृत् प्रक्षेपस्तत्र छेकानुप्रासो ज्ञेयः।

---

श्रीविश्वनाथकारैराभाणि—'तत्र' मानमङ्कारस्य काव्यते'ति, 'तेनालङ्कारस्य काव्यत्वमिति स्थितिः न पुनः काव्यस्यालङ्कारयोगः" इति च नवालङ्कारिकचूडामणीनां ध्वनिकृतां वाग्भिः 'व्यायामभूतं प्रकारं ममीत्य विनिर्विभ्रमः। रूपकादिरलङ्कारवर्गो इति यथार्थताम्।' इति, तदनुयायिनामालोकग्रन्थकृता 'शक्तो हि कविः कदाचिदलङ्कारनिबन्धने तदाक्षिप्ततयैवा-

## स च द्वेधा च्छेकवृत्तिभेदात्—१९७ का

छेकानुप्रासो वृत्त्यनुप्रासश्चेति द्वेधा ।

## छेकः सकृत्तया । १९८ का

एकवारानुन्यासेन च्छेकः स्यात् । यथा—

धाम श्याममिदं श्रीदं जगतो विरतोदयम् ।
ध्येयं गेयञ्च सर्वेषां द्वयोः प्रेम (ख) यशोमयम् ॥ ४

अत्र मकारादीनां सकृदनुन्यासः ।

## माधुर्य्यव्यञ्जकत्वेन स एव ह्युपनागरः ॥ १९९ का

स एव वर्णविन्यासः । यथा—

अनङ्गमङ्गलारम्भे सम्भेदः स्वेदकम्पयोः ।
शङ्के पङ्केरुहदृशो न रस्याऽनन्दमत्तता ॥ ५

## एकस्याप्यथवाऽनेकस्याम्रेड़िततया यदि ।
## न्यासः स्याद्वृत्त्यनुप्रासः (ख)—२०० का

यथा—धाम श्याममसुद्दाम कामकोटिमनोहरम् ।
ध्येयं गेयं समास्थेयं समानेयञ्च मानसे ॥ ६

यशोमयं यशःस्वरूपम्, प्राधिक्यविवक्षया धर्मनिर्द्देशः, 'अयं साक्षात् पाण्डित्य'मितिवत् । अत्र"म'कारद्वयस्य "य'कारद्वयस्य च (ख) सकृदेव पाठः । छेकानुप्रासस्यैव माधुर्य्यव्यञ्जकवर्णघटितत्वेन "उपनागर"—इति संज्ञा (ख) भवति । श्रीकृष्णेन सह स्वयूथेश्वर्याः सम्भोगं गवाक्षद्वारा पश्यन्ती काचित् सखी सखीं प्रत्याह । कामलङ्गप्रोऽस्याः सम्भोगस्यारम्भ एव स्वेदकम्पयोः सम्भेदरूपो विघ्नो जातः । अतो विघ्नबाहुल्यप्रतीत्यादिघटितः सम्पूर्णसम्भोगोऽपि न भविष्यति, तत एव याऽनन्दस्य मत्तताऽतिशयः सा रस्या नेत्यहं शङ्के ।

आम्रेडिततया द्विरुक्ततया । पूर्वोदाहरणे 'म'कार'म'कारयोः सकृन्निवेशः, अत्रोदाहरणे 'म'काराणां 'य'काराणां पुनःपुनरुक्तिः । समास्थेयं सम्यग् विश्वसनीयमित्यर्थः ।

---

नपेक्षितरससम्बन्धः प्रबन्धमारभते, तदुपदेशार्थमिदमुक्तम् । दृश्यन्ते च कवयोऽलङ्कारनिबन्धनैकरसा अनपेक्षितरसा प्रबन्धेषु" इति च साकूतभणितिः पर्य्याप्तमुत्तरमत्र इति तद्विचारचर्चातो विरम्यते । अत्र ग्रन्थे प्रकाशकृता हतामलङ्कारोद्देशप्रथामनुसृत्य

अनेकस्य यथा—

विविधवधूवधमाधो! विरम रमानाथ! नाथ्यतां (ख) नाथ!

कैतवविज्ञ! समज्ञां तव विज्ञातुं न विज्ञाऽहम् ॥ ६

एष च द्विविधो भवेत्।

माधुर्यौजोऽनुकूलत्वात्—२०१ का

क्रमेणोदाहरणे—

अनङ्गसङ्गरासङ्गे भङ्गिमेव (ख) स जङ्गमः।

भङ्गीतरङ्गी तन्वङ्गीसङ्गी रासङ्गतो हरिः ॥ ८

उद्दण्डकामकण्डूलबाहुमण्डलचण्डिमा।

श्रीखण्डपिण्डडिण्डीरपुण्डरीकयशा हरिः ॥ ९

तथा—चकारात् पदावयवजोऽपि च। (1)

उद्दाममाधवीदामकण्ठ उत्कण्ठया हरिः।

राधां नातिदुराराधां ससार रससारवित् ॥ ९

एवमोजस्यपि 'जङ्घाङ्घि सर्वमूर्च्छा'मित्यादि (६७ किरणे ६७ श्लोकः)।

काचिन्मानिनी प्रार्थनां कुर्वन्तं श्रीकृष्णमाह—विविधेति। अयानन्तरं न नाथ्यतां याच्ञा क्रियताम्। एष वृत्त्यनुप्रासः।

श्रीखण्डपिण्डश्चन्दनपिण्डः डिण्डीरः फेनः पुण्डरीकः श्वेतकमलम् एषामिव श्वेतं यशोऽस्य। एष लकारघटितानुप्रासः—लकारस्य बाहुल्येन शिथिलत्वाच्छिथिल उच्यते।

---

वक्रोक्तेरेव प्रथमं निर्देशः। प्राचा भामहेन निर्दिष्टात् 'रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः' इत्यादि कारिकाग्रन्थात् कैश्चिद्रूपकादितयालङ्कारधाराऽनुमीयते। ध्वनिकारिकायां तन्मतोपन्यासो वरीवर्त्ति। अपरैरुद्भटादिभिः (सर्वस्वकारोऽपि तन्मतानुयायी) बहुभिरेव पुनरुक्तवदाभासस्य प्रागुल्लेखो यथाविधि। अथवापरः पन्थाः—अलङ्कारशास्त्रविमर्शकानां स एषः वक्रोक्तिपदप्रतिपाद्यन्मुर्महिम्ना विच्छित्तिमावहति वक्रकवित्वापारे अलङ्कारसामान्यापरपर्याये प्राचां सुधियां भक्तिमावहन्नितरां तत्त्वोन्मेष इत्येव मन्यामहे—यमुद्दिश्य, विपश्चिदुक्तौ 'वक्रोक्तिः काव्यजीवितम्' 'भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्' यमेवोपमुच्य च पूर्वपश्चिमौ मतभ्रंसकल्पमुन्मथमाचार्यदण्डिनः 'स्वभावोक्तिश्च जातिश्चेत्याद्या सालङ्कृति'रिति स्वभावोक्तेरलङ्कारकत्वान्तर्भुक्तौ निर्बन्धान्तः सिद्धान्तसरणिः आदिमतया निबध्य। परमर्वाचीनग्रन्थेष्वस्य पदस्य वक्रोक्तिपथाश्रत-

(1) अपर्यन्तिरिक्तः पाठ कैश्चने मुद्रितपुस्तक एवोपलभ्यते।

कोमलो लाट इष्यते । २०२ का

कोमलवर्णानुप्रासो लाटानुप्रासः । उदाहरणम्—'लीलालसललिताङ्गी'-त्यादि (६ष्ठकिरणे १म श्लोकः)। एषः कैश्चिच्छिथिल उच्यते (ख)।

तात्पर्य्यमात्रभेदत्वाल्लाट इत्युच्यतेऽपरैः ॥ २०३ का

शब्दार्थयोरभेदेऽपि तात्पर्य्यमात्रभिन्नत्वे, लाटो विदग्धः (2), तस्य प्रियत्वाल्लाटानुप्रास (ख) इत्यपरैरुच्यते ।

पदस्याप्येषः—२०४ का

एषः लाटानुप्रासः पदस्यापि, 'अपि'शब्दात् पदांशानां पदानामपि—क्रमेणोदाहरणानि—

क्षपात्वेन सखि ! प्रादुर्भावो मन्ये मनोजनैः ।
मनोजनैः पुनरियद्वैदग्धीवैदुषी (ख) कुतः ॥ १०

रत्नानि रत्नाकर एव सन्ति पुष्पाणि पुष्पाकर एव धत्ते ।
गुणो गुणत्वे लभते प्रकाशं यशो यशोदासुतसेवयैव ॥ ११

पदानां यथा—

येषां न वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम् ।
येषान्तु वृन्दावनचन्द्रलीला हृद्यस्ति तेषामपरैर्गुणैः किम् ॥ १२

एवञ्च वृत्तावन्यत्र वा पुनः ।

वृत्तावृत्त्योश्च वा नाम्नः सारूप्ये स्याद्यथापरः । २०५ का

तत्रैव वा समासेऽन्यत्र वाऽसमासे समासासमासयोर्वा नाम्न एव, न तु पदस्य, सारूप्ये सत्यपरो लाटानुप्रासः । (ख)

पदानामनेकेषामपि । वैदुषी पाण्डित्यम् । अनेकपदस्यानुप्रासः, अस्यैव भिन्नार्थत्वे यमकी भवतीति ज्ञेयम् ।

नाम्नः प्रातिपदिकस्य समानरूपत्वेन नतु नामविभक्तिघटितपदस्य ।

---

प्रभृतिलक्ष्येष्विव सुतरामत्यद्भुतरसायामलङ्कृतौ प्रसक्तिः प्रयोगश्च—स च विदग्धमात्रसंवेद्यो दोषकाकुमहिते कूटकर्मणि प्रवर्त्तते। पदपरिवृत्त्या नास्य नश्योऽपीति शब्दालङ्कार एवायम् । 'द्विरेफ' इत्यस्य 'बर्बर' इत्यर्थान्तरं टीकाकृता स्वीकृतम्—परं भ्रमरकर्माभि-व्यञ्जिना षट्कासुकत्वेन घटितोऽप्ययं स्यात् । 'किञ्चित्' 'धीराकाऽपि' 'कामेश्वे'त्यादिषु सुस्पष्टोदया कदर्थना न दोषायेत्यलम् ।

(2) 'लाटोऽविदग्ध' इति (ख) (क) पुस्तकयोः पाठः ।

उदाहरणम्—

हिमकिरणकिरणमधुरा राका राकाऽमृतांशुमुख ! भवतः ।

विरहे विरहे मूर्च्छां सख्यास्तां केवलं दहति (3) ॥ १३

नेह (4)—सुमहिमहिमकरमधुरा मधुराकाया निशा निशातेयम् ।

तव रुचिर ! चिरविलम्बे प्रदहति तां कृष्ण ! कृष्णवर्त्मेव ॥ १४

इदन्तु यमकान्तर्गतमेव भिन्नभिन्नार्थत्वात् (ख) । तदेवं वर्णितश्छेकश्रुति-पदावयवैकपदानेकपदनामसारूप्यात् षट्प्रकारोऽनुप्रासः ।

## (३) यमकं त्वर्थभिन्नानां पदादीनां समाऽऽकृतिः (5) । २०६का

परस्परमर्थगतभेदवतां पदपदावयवानां समाऽऽकृतिः सारूप्यं यमकम्(ग) ।

राकाऽमृतांशुः पूर्णिमाचन्द्रस्तत्तुल्यमुखेति श्रीकृष्णसम्बोधनं, तव विरहे मूर्च्छामप्याप्य विरहे राका पूर्णिमा तां दहति। राका कथम्भूता? हिमकिरणचन्द्रस्य किरणेन मधुरा।

इयं वसन्तकालीनपूर्णिमाया निशा निशाता विरहिणा दुःखदायकत्वेन तीक्ष्णा कृष्णवर्त्मा अग्निरिव तां दहति। निशा कथम्भूता? सुमहिमचन्द्रेण मधुरा। "हिम" "हिम" "मधुरा" 'मधुरे'त्यादिपदानां भिन्नभिन्नार्थत्वादिदमुदाहरणं यमकान्तर्गतमिति ज्ञेयम्—अतोऽत्र यमकत्वमनुप्रासत्वमुभयमपि वर्त्तते (ख)।

एवमिति—छेकानुप्रास एकः, श्रुत्यनुप्रासो द्वितीयः, लाटानुप्रासश्चतुर्विधः, एव क्रमेण षट्प्रकारोऽनुप्रासः।

(ख) अनुप्रासस्य रीतिमतायां स्वभावविहायामपि न तावत् किमपि मानवकृतं कार्यं भूतं भवत् भव्यं वा यमाश्च साहाय्यकमपेक्षितुमर्हति। (Cf the aids of Assonance, Alliteration, Onomatopœia, Rime etc. in all verse) परं मधुररचनायां सुकुमारमार्गस्य प्रकर्षः सहजमिह एव प्रतिभाति। 'प्रेमयशोमय'मित्येकं पदं वा। अत्र 'म'म' 'दं'दं' 'सो' सो' 'यं यं' 'म' 'म' इत्यनुक्रममनुप्रासः। उपनागरेति—उद्भटादयस्त्वेवम्। प्रकाशकारा रुद्रटादिप्रदर्शितरीतिपथकस्य वामनराजशेखरभोजादिकृतग्रन्थेषु प्रदर्शितरीतिभिः [illegible] 'वैदर्भिगौडीपाञ्चाल्यो रीतयो मता' इत्यभ्युपायि—न [illegible] पन्था अत्र मध्यानुगतः, रीतिः एवं प्रसङ्गे यानप्रापितत्वात्। परं विन्यासविन्यासक्रमोत्पन्न अनु-

(३) "—[illegible] । [illegible] । [illegible] नमः प्रियो" [illegible] (७) पृष्ठे।

(४) [illegible] (क) (ख) [illegible]।

(५) [illegible] (क) पुस्तके [illegible] पाठः ।

एतच्च पादजत्वेन नवधा—२०७ का

एतत् यमकम् । प्रथमस्य तु ।

द्वितीयेन तृतीयेन चतुर्थेनेति तत्त्रिधा ॥

द्वितीयन्तु तृतीयेन चतुर्थेनेति च द्विधा ।

तृतीयन्तु चतुर्थेनेत्येक एवेति षड् भिदः ॥

प्रथमस्त्रिष्वपीत्यन्य इति सप्तद्वयं पुनः ।

प्रथमस्तु चतुर्थेन द्वितीयस्तत्परेण च ।

प्रथमस्तु द्वितीयेन तृतीयस्तत्परेण च ॥ २०८ का

प्रथमो द्वितीयेन तृतीयेन चतुर्थेनेति त्रयो भेदाः । द्वितीयस्तृतीयेन चतुर्थेनेति चेति द्वौ । तृतीयश्चतुर्थेनेत्येकः । प्रथमस्त्रिष्वपीत्येकः । प्रथमश्चतुर्थेन द्वितीयस्तृतीयेनेत्येकः, प्रथमो द्वितीयेन तृतीयश्चतुर्थेनेत्येकः—एवं नव ।

अर्द्धश्लोकश्लोकयोश्चावृत्त्या द्वेधा भवेदथ ।

तेनैकादश भेदाः स्युः पदभागे च पूर्ववत् ॥

नवधेति भिदा ज्ञेया विंशतिर्यमकोद्भवाः ॥ २०९ का

अर्द्धश्लोकावृत्त्या श्लोकावृत्त्या च पुनरेकादश । पुनः पदस्य भागे च यद्यमकं तत् पूर्ववन्नवधेति विंशतिर्भेदाः ।

पादस्य तु त्रिखण्डत्वे त्रिंशद्भेदाः प्रकीर्त्तिताः ।

चतुःखण्डत्वे च पुनश्चत्वारिंशद्भवेद्भिदा (ग) ॥ २१० का

---

कारित्वमिति सार्थकमस्य प्रकारस्योपनागरत्वेन कथनम् । वृत्तीति—वृत्तिरावृत्तिरिति यावत् । एवमेव विद्यानाथः 'एकद्वित्रिप्रभृतीनां व्यञ्जनानां यदा भवेत् । पुनरुक्तिरसौ नाम वृत्त्यनुप्रास इष्यते ॥' नार्थेति—न व्यर्थेति पदभक्तिः, सा च व्युत्पत्त्यावाक्ये कियदस्वाभाविकीव प्रतिभाति । 'समङ्गे'त्यत्र सङ्केतः पारिभाषिकोऽयं इति बहवः । 'भङ्गिमे'त्यनेमनिचः साधुत्वं कथञ्चिदुपपाद्यम्, परं केचिदीदृशाः प्रयोगा अर्वाचीनसाहित्य उपलभ्यन्ते । कैश्चिदिति—अल्पप्राणाक्षरं शिथिलमिति काव्यादर्शे गौडीरीतिनिरूपणे आचार्यदण्डी । परमेष्वपि स्थलेषु नोत्कर्षह्रासः, तत्र निरूक्ताया गौडीरीतेरादरदर्शनमिति 'कैश्चि'दित्युल्लेखः । लाटानुप्रास

दिङ्मात्रमुदाह्रियते—

सुरतरुरेष नतानां सुरतरुचिर्गोपतरुणीनाम् ।
त्रिभुवनजनकमनीयो(6)जयतादाभीरराजयुवराजः ॥ १५

सुरसार्थभूषितपदैर्ब्रह्मादिभिरधिकभक्तिसंनम्रैः ।
सुरसार्थभूषितपदैः स्वरैः स्तुतः कोऽपि जयति ॥ १६

मन्मथनमदन्तरया कुटिलोऽञ्जनकालकूटाक्तः ।
प्रियसख ! कटाक्षविशिखो मन्मथनमदं स राधया सहृजे ॥ १७

जयति व्रजपतितनयो नमदनमत्तुल्यकारुण्यः ।
न मदन ! मत्तुल्यदृता काऽपि विना येन मान्तुदति ॥ १८

राधा सुकुमारतनुर्मदनवधानादुपैष्यति ग्लानिम् ।
बद्धोऽयमञ्जलिस्ते मदन ! वधार्थं न तां वितुदेः ॥ १९

व्रजपतिनन्दन ! नन्दय नन्दय वृषभानुनन्दिनीहृदयम् ।
मदनमदोज्ज्वलमतुलं मदनमदोजःप्रसादमाधुर्यम् ॥ २०

नतानां भक्तानां सुरतरुः कल्पवृक्षः, गोपरमणीनां सुरते रुचिर्यस्य तथाभूतः । सुरार्थाः सार्थैः सुरसमूहस्तेन भूषितं पदं येषां तैर्ब्रह्मादिभिः सुरसो योऽर्थस्तेन भूषितानि पदानि येषु तैः स्वरैः स्तुतः श्रीकृष्णो मन्मथेनाभिलाषेण नमन्नम्रमन्तरं यस्यास्तया राधया मन्मथनो मदो गर्वो यतस्तदया स्यात्तया स कटाक्षरूपो बाणः सहृते । नमति नम्रेऽनमत्यनम्रे तुल्यं कारुण्यं यस्य सः, यद्वा नमति नम्रेऽनमत् सुहृदं तुल्यमेकरसं कारुण्यं यस्य सः । दृता दुःखिता । 'नन्दय नन्दये'ति वीप्सा । मदनमत्ततयोज्ज्वलं मदेन गर्वेण नमन्ति भावाधिक्यात्माध्योजःप्रसादमाधुर्याणि यत्र तद्धृदयम् । ओजो बलम् । सदा मदवर्तमानं नित्यमित्यर्थः ।

इति—लाटाख्यप्रदेशे (यस्य गुजरात् इत्याधुनिकी संज्ञा) प्रचलितमनुप्रासकमनुपलक्ष्योक्तम् । स तु कोमलात्मा पदपदांशाद्यवयवभेदेन बहुधा भिन्नश्चेत्याकरे द्रष्टव्यः । तत्र शिखिदिशि विस्तरेण सर्वभेदकथनं न मनोरञ्जनमस्मतम् । 'वैदर्भी' 'वैदुषी'त्युभयत्रापि भावपक्षत्रय यत्नः श्रियो प्रयोगः, यकारस्यानुद्देशश्च सामग्रोचातुर्योत्यादिकम् । यथा, पितृवराग्रागारे बहुधामिति वामनः । भिन्नभिन्नेति—इयमेव लाटानुप्रासादस्य भिदा । यमकपुंगमाद्या इत्यादि भिन्न भिन्न पदार्थः । तत्रमन्यत्रापि । अतो नैव लाटानुप्रासः । अन्योदाहरणे 'मधुरा' इत्यत्र लतिकात्मिका 'मधुरकाया' इत्यत्र वसन्तपुष्पिताया इत्यर्थः । लाटानुप्रासे तात्पर्यमात्रभेदः यमकेऽभिधागमार्थभेदोऽपि, एवं टीकाकृद्भिः 'ग्रन्थे'त्यादि न भद्रा, यमकस्यानुप्रासापवादत्वेन विधानमत्र्यात् ।

(6) 'भवनजनमनोऽनुराग' इति पाठः (ख) पुस्तके ।

कानने जयति यत्र सदा मत् का न नन्दति यदेत्य सुखश्रीः ।

का न नन्दतनयस्य मनोज्ञा काऽननन्वयति वा न हि तस्य (ग) ॥ २१

यथा वा——(ग) नवपयोधरकान्त ! विरम्यतां न वप योधरसं हृदि मान्मथम् ।

नवपयोधरकान्त ! [redacted] ये भवानवप योऽधरपः प्रतियोपिताम् ॥ २२

कामन्दधाना हृदयेऽनुरागं स्मरालसाङ्गी विदुनोति बाला ।

स्मरालसाङ्गीकुरु तां मुकुन्द ! का मन्दधाना न भवेद् विना त्वाम् ॥ २३

समस्तकल्याणगुणैकवारिधे ! समस्तवास्ते कतमस्त्रिलोक्याम् ।

नमामि, मे माधव ! सम्प्रसीद, न मामिमे यान्तु दुरन्ततापाः (8)॥ २४

हे नवपयोधरकान्त ! नवमेघश्याम ! मान्मथं योधरसं हृदि न वप नारोपयेत्यर्थः । नवपयोधरा कान्ता यस्य हे तादृश ! नवा नवीनाः, तासां च । प्राणप्रोषक ! ये त्वो वै प्रोषये, हे सञ्जीवनप्रोषकेत्यर्थः । यस्त्वं मदिपचरमणीनामधरं पिबसीति । कामं यथेष्टमनुरागं दधाना बाला । अतस्तां स्मराङ्गीकुरु च, हे अलस । त्वां विना का मन्दधाना न भवेत् अपि तु सर्वैव । धानं धारणं, मन्दं धारणं यस्याः दुःस्थितेत्यर्थः । दान्तु खण्डयन्तु ।

(ग) तुल्यश्रुतिनिदाना माधुर्यस्तुतिरनादिकालतः मनैनेव मानवमनोवृत्तिं ह्लादयन्ती शोभाकारितयाऽलङ्कारमार्गं प्रकृष्टमुपस्थाप्यति—तत्र भाषासु कासुचिदैचित्र्योपधायकता-सुखेन तस्या ऐकान्तिकतया स्वरतो वर्णतो वा स्वरवर्णमिलितादप्याधाराऽविर्भावः, कासुचित् पुनरन्यथाऽपि स्वरवर्णसंहतिमाश्रयेण तस्याः स्फुरणम् । पूर्वत्र क्रमगणनाऽर्थ-भेदादिचिन्ता च व्यभिचारिणी, इतरत्र क्रमो विभिन्नार्थवत्ता च मुख्यं लिङ्गम् । प्रथम-स्तावदनुप्रासपदवाच्यः, द्वितीयो यमकमित्यन्वर्थमभिधीयते । पूर्वत्र रसपुष्टिरव्याहता भवितुमर्हति, अन्यत्र तु कष्टकल्पनाश्रयतया रसपरिपन्थित्वं बहुश एव जायते, यदाहुः— 'तत्तु नैकान्तमधुर'मिति यमकाग्रहेषी आलङ्कारिकचूडामणय आचार्यदण्डिनः 'सानुप्रासा रसावहे'तीन्द्रिजेतास्त्वनुप्रासमतो बहुशो लघुत्वं निपुणं प्रतिपिपादयिषवः समस्थे—अपरे-ऽप्यर्वाचीनाः स्वां विमतिमुद्घोषयन्तो रसाश्रितकाव्यतत्त्वाः 'प्रायेण यमके चित्रे रसपुष्टिर्न दृश्यते' इत्यादिमतवादेन । परमासीत् कश्चन कालः यत्रास्य भूयानादरो निपुणकविकर्मतया काव्याङ्गत्वेन स्वीकारश्च कविसम्प्रदायसम्मतो जातः । कालिदासकृते रघुवंशे भारविकाव्ये च काचिदसक्तिमेव शोभैनमुपनीय वरीवर्तीति सहृदयानामुपलब्धिरेव प्रमाणं—भट्टिकाव्ये

(8) अत ऊर्ध्व "यथा वा—सदासदानन्दमय यमुने सदामदामोदनिकर पुरस्य ।

महो महोद्दामरसस्वरायमहो महो भूरि तवैव लक्ष्य ! ॥"

इत्यधिकः श्लोकः (ख) पुस्तकस्य तलभागे दर्शितः, मुद्रितपुस्तके चोपलभ्यते । टीका च तत्रत्या मचिन्तयापी-मनुभूयते ।

पादजं नवधा यमकं दर्शितम् (ग)—अथ पादभागजानि दर्श्यन्ते।

कलहं कलहंसानां कलहं क-ल-हंसकाः।
अभ्यस्यन्तीव गोपीनां चरणाम्भोजवासिनः॥ २५

मधुरा मधुराकाया रजनी सा यदाऽजनि।
मधु-राम-धुरा कासां तदा नासीद्धरेः पुरः॥ २६

साध्वसाध्वन्यदत्ताङ्घ्रिः गुरूणामपि सन्निधौ।
क्षणं वीक्ष्योत्सुका साऽसीत् साध्वसाध्वविचारतः॥ २७

काञ्चीदाम्नो रणस्तस्या रणतोऽरणतोऽतनोः।
रण-तोरणतो भूरिश्रियः क्षणमनोऽहरत्॥ २८

गोपीनां कलहंसकाः कं सुखं लान्तीति तथाभूता हंसकाः पादकटकाः कलहंसानां कादम्बकानां कलहमभ्यस्यन्तीव; ते यथा परस्परं कलहायन्ते तथा कलहायन्ते इव। कीदृशम्? कलमव्यक्तमधुरध्वनिं जिह्रीते प्राप्नोतीति तथा, तत् कुर्वन्तीति वा तारमित्यर्थः। हरेरग्रे कासां गीयमानैर्मधुभी रामधुरा रमणातिशयो नासीत्। साध्वसाध्वनि साध्वस-पथे न कदाऽपि दत्तावङ्घ्री यया सा गुरूणामप्यग्र उत्सुका आसीत्। काञ्चीदाम्नः—कथम्भूतस्य? अरणतो गमनाहेतो रणतः शब्दायमानस्यातनोः कन्दर्पस्य रणसम्बन्धि-तोरणाद्वन्दनमालायाः सकाशादपि भूयसी श्रीर्यस्य तस्य। नपुंसकाद्ध्रस्वो नुमागमश्च।

---

माघकाव्ये तदनुसारिणि नातिप्रसिद्धे गड्डलिकाप्रवाहपतिते सर्वबन्धकाव्यकदम्बके, यमकमाला-ह्वनजीविते कीचकवध हरिप्रबोध नलोदयाद्यनेककाव्यविशेषेऽस्य स्फुरणन्तु न तथा सहृदय-हृदयहारि। नैतच्चित्रं यदस्य इव कर्कशमर्वाचीनकविसमयमये नये काव्यान्तर्गतभूतत्वेन तथा सुष्ठुत्वमयसिद्धान्तः। तथा सति न तावदस्य परमार्थतो माधुर्यशब्दकत्वमपाक्रियते—पर न निखिलं माधुर्यं शब्दाश्रयमेव प्रशस्यमित्यूरीकारः। नाप्यनेन सकलजनसंवेद्यः सदर्थ-सनाभिः शब्दमाधुर्यास्वादो वाऽपलप्यते यमाश्रित्य प्रतीच्यसाहित्यभेदेषु Onomatopeic poetry इति काव्यभेदपरिगणनं यदुपलभ्य च तत्रत्यसमालोचकानां समयः—'Tis not enough no harshness gives offence The sound must seem an echo to the sense'. प्राचीनार्यसाहित्ये चास्य वैशिष्ट्यस्य 'खचरवनितविनिविष्टैर्नूपुरैर्नर्तकीनां झणिति रणितमासीत्तत्र चित्रं कलञ्च' इत्यादिकोमलसन्दर्भे पद्ये, 'एते ते कुहरेषु गद्गदनदद्-गोदावरीवारयः' इत्यादिकठोरभित्तायां भवभूतिवर्णमालायां, 'चञ्चद्भुजभ्रमितचण्डगदा-ऽभिघात'इत्यादि वेण्यां साटोपोक्तौ च प्रकाशः। परमेषामनुप्रासतया प्रसिद्धं सम्प्रदाय-ममनुमित्यविरुद्धम्—अनुप्रासभेदाश्च बहवः प्रतियुगं प्रत्यालङ्कारिकवर्यं भिन्ना इति

दृशोरगोचरेणैव हरिणा हरिणाक्षि ! ते ।
कपोलभित्तिर्मानिभहरिणा हरिणाकृतिः ॥ २९
अगोचरे सति हरौ दहत्येष मनो मम ।
मदनो मदनोदेनामदनो मदनोजसा ॥ ३०

सदासदासीनिकरैः परिच्छदैः सदा सदानन्दविलासविग्रहः ।
सदाऽस-(ग)दाक्षिण्यकृपाऽऽदिभिर्गुणैः सदासदारो विललास माधवः ॥३

दृशोरगोचरेणैव सता हरिणा श्रीकृष्णेन तव कपोलभित्तिः हरिणाकृतिः पाण्डुच्छविरभूत् । कीदृशेन? मान एव इभो हस्ती तस्य हरिणा सिंहेन । मदनो मनो दहति । केन? मदनोदेन मत्ततासण्डनेन । कीदृशः? मदनोजसा ममावन्ध्येन मदनोऽहर्षयः, मदि हर्षे । (१) परिच्छदैः सह सदा सदानन्दमयो विलासो विग्रहश्च यस्य स माधवः । दा दानम्, भासो दीप्तिः, दाक्षिण्यञ्च तदादिभिर्गुणैः सन्नास उपवेशो येषान्ते दारा यस्य सः ।

---

शातमेव । श्रुत्यनुप्रासस्य निरूढानुप्रासनिकसवर्णत्वमयव्यञ्जननिष्ठत्वस्वरूपस्य, 'दृष्ट्वा दर्शं मनसिजं जीवयन्ति दृशैव याः' इत्यादिलक्ष्येषु स्फुटस्य, अन्त्ययोज्यावर्त्तितया ख्यातस्यान्त्यानुप्रासस्य 'मन्ये नसीहि धनागमलक्ष्म्यां कुरु तनुबुद्धे मनसि वितृष्णाम्'मित्यादि-बहुप्रसिद्धलक्ष्येष्वाविर्भवतो यथा नात्र ग्रन्थे ग्रथनं, तथा प्रतिदेशं भिन्नस्य कार्णाटी-कौन्तलीत्यादिनाम्ना लक्षितस्य कण्ठाभरणकृता कृतोद्देशस्य वृत्त्यनुविधस्यापि न सूचनमित्यप्यविरुद्धो मार्गः, यत एषां दिग्दर्शनन्यायेन विन्यास एव साधीयान् । नाट्यशास्त्रकृता पुनर्यमकस्यैकस्य शब्दालङ्कारतया ग्रथनं कृतं, तथाऽलङ्कारिकसम्प्रदायसिद्धस्यैव यमकस्य तत्र लक्ष्यलक्षणानि । अनुप्रासस्य तत्र कथं न ग्रहणमिति तु सम्यग्विमर्शनीयम् । 'एतद्दशविधं ज्ञेयं यमकं नाटकाश्रयम्' (१६।६२) इत्यभिधानन्तत्र, परं नाटकाश्रयस्यालङ्कारजातस्य गणनायां शब्दालङ्कारकल्पेऽनुप्रासस्यैव ग्रहणपरो निर्बन्धो वरीयानिव प्रतिभाति । इदानीं परिचितेषु नाटकेष्वनुप्रासस्यैव प्रसारो दृश्यते, यमकन्तु तत्र विरलविरलमेव । रामायणादिप्राचीनतमरचनादिष्वप्येवम् । एवं स्थिते प्राचा यमकपदेनानुप्रासस्यापि ग्रहणं, तयोर्मध्ये यमके चाव्याप्त्यादिप्रसङ्गः न सुगमः प्रतिपादयितुमिति बहवः । 'नानाकारेण कान्तभ्रूराराधितमनोभुवा । विविक्तेन विलासेन ततक्ष हृदयं स्त्रिया'मित्यादौ स्वरैकव्यञ्जनावृत्तावपि केषाञ्चित् यमकत्वकथनमेतत्पक्षेऽनुकूलं यमकतोऽनुप्रासस्योद्भवे विश्वासकारितावीजमपीति बोध्यम् । अत्र तावत् प्राचा भामहेन कृतो भरतीयनाट्यशास्त्रनिर्दिष्टेऽलङ्कारचतुष्केऽनुप्रासस्य पृथक्तया योगः

---

(१) "दासदासीनिकरैः सह वर्त्तमान" इत्यधिकोंऽशोऽस्माके (ख) पुस्तक एवोपलभ्यते ।

मनोज-हार-प्रतिमा समाना सरस्वतीते ! मद-सु-स्वरूपे ॥

मनो जहार प्रतिमा समाना सरस्वती ते मदसुस्वरूपे ! ॥ ३४

अर्द्धावृत्तिः ।

न वंशी-कर-मासाद्य यमानुजनिभङ्गतः ।

कस्या विशदतां याति मनो मानपरिप्लवम् ॥

नवं शीकरमासाद्य यमानुजनिभङ्गतः ।

कस्याविशदतां याति मनो मानपरिप्लवम् (ग) ॥ ३५

श्लोकावृत्तिः । अयमेव समुद्गकः । एकविंशतिः ।

हे मदसुस्वरूपे ! मत्प्राणतुल्ये । तव सरस्वती वाणी मम मनो जहार । कीदृशी ? मां प्रति समाना आदरा । पुनः कीदृशी ? मनोज्ञस्य हारस्य प्रतिमा मुक्ताहारतुल्या हृदयधारणार्हेत्यर्थः, समानाऽवक्रा । मदस्य मत्ततायाः यत् सु सुष्ठु स्वरूपं तस्मिन् सरस्वति समुद्र इति सङ्गते । हे मत्तमत्ततासमुद्रप्रविष्ट इत्यर्थः ।

अथ सर्वासामपि वैयर्थ्ये यथा यमकप्रयोगः क्रियते तथा मानभङ्गार्थं नानाविधो-पायानां वैयर्थ्ये सति श्रीकृष्णेनापि सङ्केतमुरलीवादनं क्रियते, मुरलीनादश्रवणमात्रेण (10) सा स्थितमाना प्रसन्ना बभूवेत्याह—नेति । वंश्याः करं वादनमासाद्य यमनियमासनाद्यष्टाङ्ग-योगस्य प्रथमो यमस्तस्यानु पश्चाज्जन्म उत्पत्तिर्यस्य स नियमस्तस्य भङ्गतः, तथा च श्रीकृष्णेन सह मया कदापि सङ्गो न कर्त्तव्य इति यो नियमस्तस्य मुरलीश्रवणेन भङ्गात्मानेन चञ्चलं कस्या मनो विशदतां न याति, अपि तु सर्वासामेव । पुनस्तस्यैव श्लोकस्यार्थान्तरमाह—यमानुजनिभेसमा पुण्यनदी तस्य भङ्गतस्तरङ्गाच्चातो यो नवीनः शीकरः जलकणस्तमासाद्य मानेनाभिमानेनार्थाद् गर्वेन दोषेण परिप्लवं कस्य मनः न विशदतां याति, अपि तु सर्वेषामेव, यमुनाजलस्पर्शस्य सर्वदोषनाशकत्वप्रसिद्धेरिति भावः ।

---

दिना विभागेन भेदसंख्या प्रकाशकृता सूचितापि न विस्तरतो दर्शिता, सा च मनोरमैः पद्यैरिह निबद्धा । यमकमित्यारभ्यास्याग्रस्य पूर्वतः श्लोकद्वयादाकारतो संस्कृता नियमतश्च नियता संज्ञा, इयमेव शैली प्राचीनानां शास्त्रकृतां यत्ते संज्ञिनां संज्ञानियतत्वार्थं सहकारि-गुणान्तराणि प्रकटयन्ति । सा च सुस्पष्टं दर्शिताऽऽचार्यदण्डिना गुणालङ्कारादिविवेचनप्रस्तावे । यथा चेति—'कानन'मित्यादि श्लोक चाद्विर्भावितं ईषद्भिन्नतया पठित इत्यतो यथा चेति प्रतीकेन नूतनतरस्यावतारः । पादजमित्यादि—अर्द्धावृत्तिरित्यादि—एषां वक्ष्यमाणानाञ्च भरत भामह दण्डि रुद्रटोद्भटादिग्रन्थेषु रूपभेदाद्यथायथं सुख गर्भ वृत्ति-पुष्प वृन्त-

---

(10) "श्रीकृष्णेनापि वादितसङ्केतमुरलीश्रवणमात्रेण"त्यन्यः पाठो मुद्रितपत्रके ।

आद्यन्तमध्यभेदेन क्रमादथ समुच्चयात्।
अन्तादिभेदेन पुनर्बहुधा यमकक्रिया (ग)॥ २११ का

आदियमकमन्त्यमकं मध्ययमकमाद्यन्तमध्ययमकमन्त्यमकमिति षड् भेदाः। क्रमेणोदाहरणानि—

कलाकलापेन गरीयसा हरिर्मदीनदोतिः करुणारसाम्बुधिः।
सुरासुराणां मुकुटाटवीमणिः सदा सदानन्दचिदात्मको बभौ॥ २१
दोषेण प्रबल हि नागरी गरी-यसा(ग) कठोरत्वमुपेत्य भात्यभा।
विहाय मानं हरिमानयानया धिया हि सर्वं भवतीहितं हितम्॥ १७
मदन सङ्गर-सङ्ग रसाकुला भव विहारिणि हारिणि। माधवे।
कुसुम-राजि-विराजि-विभूषणा मधुप-राग परागपराचिता (ग)॥ १८
माऽसो मासो मरीच्यः समधुर मधुर प्रेयसी-प्रेय-सीमा-
वृन्दा वृन्दावनश्रीरुपवन-पवन-भ्रान्तिरभ्रान्तिरम्या।

गरीयसा प्रबलदोषेण कठोरत्वमुपेत्य काऽपि नागरी न हि भाति। यतोऽभा विगत कान्तिका। धिया तव सर्वं हितमीहितं वाञ्छितं भवति, वर्त्तमानसामीप्ये वर्त्तमानप्रयोगः।

हे हारिणि। मनोहारिणि! माधवे विहारिणि सति मदनयुद्धस्य सङ्गे यो रसस्तेना कुला भव। कथम्भूता? कुसुमश्रेणिभिर्विराजि भूषणं यस्यास्तथाभूता सती। अथ मधुपानां रागो रङ्गनं येष्वतथाभूतैः सुगन्धैः परागैः पराचिता व्याप्ता सती च।

उद्दीपनविभावानाह—माऽस इति। मासचन्द्रस्य मरीच्यः किरणाः माऽसः मां शोभामस्यन्तीति माऽसः शोभानिवेधिका इत्यर्थः। वृन्दावनस्य श्रीः शोभा कीदृशी? समधुरा शृङ्गाररससहिता एवं मधुराश्च या प्रेयस्यस्ताभिः प्रेयं पूरयितुमर्हं सीमा वृन्द यस्याः सा, तथाच वृन्दावनीयशोभायाः सीमासमस्तावधिः प्रेयसीनां साहित्येनैवेति भावः। उपवनेषु पवनस्य भ्रान्तिर्भ्रमणम् अभ्रान्तिरम्या अभ्रान्तिर्वृन्दावनीयोपवने सम मन्द गमनमेवोचितमिति या सावधानता तथा रम्या। आलम्बनविभावमाह—इह समये स

पुच्छ षड्क्ति परिवृत्ति मदंश-काञ्ची पदान्ताम्रेडित श्लोकाभ्यास समुद्रक यमकावलि महायम कादयोऽपिविधा भवति संख्या—इतोऽधिकानि संख्याऽन्तराणि च तथ्यो भट्टिकाव्यादितश्चैव ग्राह्याणि। बहुधेति—आद्यन्तादिभेदगणना प्राचीनानुसारिणी दिव्यवेद्यादिविच्छित्तिविशेष जीवातुरर्वाचीनैः बद्धाविता। वस्तुतस्तत्संख्या एवार्थं भेदक्रमः। समविंशतिरिति तु वस्तुगत्या गणनायां न किमपि तात्पर्यं 'बहुधा यमकक्रिये'त्येव निष्कर्षं। अयुक्पाद युक्पाद मिश्र

नन्दानन्दाप्यकन्दः स्मर-समर-स-म-व्यूह-हारीह हारी
सङ्गी सङ्गीतदेव्या अहरहरहरद्राधराधां स राधाम् (ग) ॥३९

न मानमाधेहि मनस्यदःस्यदः शुभं शुभंयोः स्यति देवि ! तेऽधिते (ग)।
अहो अहोरात्रक्षताऽरुषा रुषाऽयशो यशोदाभुवि विद्यतेऽद्य ते ॥ ४०

प्रतिपादसर्वयमकं यथा—

ममत्वयाऽममत्वया न वेङ्गितं नवे ! ङ्गितम् ।
स्मराधिके स्म राधिके ! चर क्षमाश्च रक्ष माम् ॥ ४१

हरी राधामहरत्। कीदृशः ? नन्दः (ग) नन्दको य आनन्दस्तस्याप्यकन्दः प्रथममूलं स्मरसमरे समः मा शोभा तत्उपस्थितो यो बलविन्यासस्तं हर्तुं शीलं यस्य सः। 'व्यूहस्तु बलविन्यास' इत्यमरः। तथा हारी हारवान् सङ्गीतदेव्याः सङ्गी। राधां कीदृशीम् ? अहरहः प्रतिवासरमेव राधराधां राधस्य राधः संसिद्धिर्यस्तस्याम् ।

दूती प्राह—न मानमिति। मनसि मानं नाधेहि। कुतः ? अदःस्यदः अमुष्य मानस्य वेगः हे देवि ! शुभंयोः प्रशंसावत्यास्ते तव शुभं मङ्गलं स्यति नाशयति 'अहंशुभमोर्युस्' इति युस्। शुभमिति मान्तमव्ययं प्रशंसावचनम्। अहो इत्याश्चर्ये। अहोरात्रक्षतमरुर्मनःपीडा यतस्तथा रुषाऽधिते इति सम्बोधनम्, तथा च तादृश्या रुषा त्वमधुनाऽपि ज्वलिता नाभूरित्याश्चर्यं, यशोदाभुवि श्रीकृष्णेऽद्य तेऽयशो दुर्यश एवेदं वर्त्तते। श्रीकृष्णोऽप्याह—मम त्वयेति। हे राधिके त्वया मम न ङ्गितं न वा इङ्गितं चेष्टितं भवति। कुतः ? अममत्वया मयि ममत्वशून्यया। ननु तर्हि मामुपेक्षस्व तत्राह—हे नवे ! नित्यनूतनत्वात्त्वं मे चेतो लोभयसीति भावः। अथ च चेतः पीडयसि चेत्याह—स्मरेण स्मरणेनाधिर्मनःपीडा कामोद्गमो यतः हे तथाभूते ! यद्वा स्मरेण कन्दर्पेण हेतुनाऽधिर्मनःपीडा यतः हे तथाभूते राधिके ! तस्मात् त्वं मां चर प्राप्नुहि माश्च रक्ष। स्मेति पादपूरणे।

---

सर्वयमकादयोऽन्ये च अनामकाः सनामकाः बहवोऽन्योदाहार्याः। 'सदासे'त्यादिष्वप्रयुक्तता लभ्या, 'कस्या विश्रदता'मित्यादिष्वपि कृत्रिमो पदभङ्ग इति स एव प्राचीनो दोषः, 'राधिचरे'त्यादिषु, 'समारसा' इत्यादिषु च पदानां चादीनामनुद्देशः, 'तेऽधिते' इत्यादिष्ववर्णान्तरैकपदतेत्यादि दोषप्रसङ्गाः यमकतया कथमपि सोढ्याः। 'गरीयसे'त्यत्र पादेन पदच्छेदेऽत्र न किमपि माधुर्यं—मान्थर्यमिव प्रत्युत भासते। न तावत् सर्वत्रैयं दोषदृष्टिः, यतो 'मदनसङ्गरसङ्गे'त्यादिषु उपभोग्यैव काऽपि स्वादुता, 'त्रिवलते'त्यादौ पद्ये नखोदयादिरिदाकारपद्येष्विव किमपि वैरस्यमुक्तमेव, अतो हानोपादानयोर्भेद निदर्शनम्। मदनेति—राधां प्रति

सर्वयमकं यथा—

(५)(८) (४) (१) (२)
ससार सा ससारसाऽस-सार-मास सार-सा ।

(३) (७) (६)
ससारसाससारसा स सारमास-सार-सा (ग) ॥ ४२

मत्यचरयमकमपि केचिदिच्छन्ति । तद्यथा—

(४) (५) (६) (८) (९)
वि-वितत-नाना-साऽभा विविधघना ना-ववश्याख्या ।

(१०) (७) (२) (११) (३) (१)
सा साधुधुततरारा मम ववले लेहि-हित-तनु ! नु (ग)॥४३ इत्यादि

एवं सप्तविंशतिर्भेदाः(ग) । द्विखण्डत्रिखण्डादिकश्लोकोदाहरणेष्वन्तर्भवतीति पृथङ् न दर्शितम् । तथाहि 'अहो अशोरावक्रताऽवपावया' (४० श्लोके) इत्यादौ द्विखण्डम् । 'मासो माऽसो मरीष्या' (३९ श्लोके) इत्यादौ द्विखण्डम् । 'विवितते'त्यादौ (४३ श्लोके) चतुःखण्डम् । एवमन्यान्यपूह्यानि । गद्येषु तु नार्थं क्रमः । तत्र यथा—'सदा सोदरे दामोदरे गुणसाराधिका सा राधिकाऽनुरज्यति स्मे'ति ।

सा राधा प्रातर्निकुञ्जाच्चलति स्म । कीदृशी ? ससारसा ससीत्साकमसाऽसमार-सामसारमा या सम्यक्प्रकारेण आसो विक्षेपो यत्र असु क्षेपणे । तथाभूते सारे गमने यः साणो निद्रा तस्य सारं बलं स्यति क्षोयप्रतिभया झूषयतीति सा । स गतौ योऽन्तकर्मेणि अन्तकर्मशब्दस्य नाशो द्राष्टव्यार्थः । ससारसा—सखाराः सखिन स्मृतं गच्छन्तीति समाः, आ सम्यक् रमन्ति शब्दायन्त इत्यारसाः, असमन्ति दीप्यन्त इत्यसाः सारसाश्चक्रवाका यतः यां विलोक्येत्यर्थः सा । सम स्मृतौ, रस शब्दे, अस दीप्तौ । सः श्रीकृष्णः ससारेति पूर्वेणान्वयः । कीदृशः ? सारसाम सार सा सारसानां पक्षिविशेषाणामाश्यापणेऽस्य सारः स्थैर्यं तत् स्यति (श्याति) नाशयति स्वीयगमनेन चकितीकृत्येति भावः ।

सा वनस्थली नाववश्याख्या नौ आवयोरवश्यमेवाख्या ख्याप्या अप्रकाश्या । विविक्त नामाग्रहणं सङ्केतस्थलत्वात् । कीदृशी ? विभिः पक्षिभिर्विततता नाना सा शोभा यस्याः सा । अमाऽपरिमिताऽनुपमा वा । विविधानि घनानि यस्यां सा । साधु यथा स्यात्तथा धुततरोऽतिरक्षित आरो गतिर्यस्या यया सा यां प्राप्यान्यत्र गमनं नैव युज्यत इति भावः ।

---

विशाखाऽहेति कथानन्दिन्यो सङ्गलिमूचना । मासि इत्यत्र ममा भुरा यस्येति प्रेमप्रकर्षं ममस्येनोक्तिर्यमहिमवश्यायंः नन्दानन्देत्यत्र नन्दस्य नगराणस्य नन्दन इति सुगम एवार्थोऽयं ।

**भिन्ना अप्यर्थभेदेन युगपद्भाषणक्षमाः ।**
**त्यजन्ति भिन्नरूपत्वं शब्दा यत् (४) श्लेष (यच्छ्लेष) एव सः॥**
**२१२ का**

'अर्थभेदेन शब्दभेद' इति न्यायात् काव्ये स्वरस्यानुपयोगेन स्वरगतभेदाभावाच्च, केवलार्थभेदेन भिन्ना अपि शब्दा युगपदेकदा यत् यदर्थान्तरभाषणक्षमाः सन्तो भिन्नरूपत्वं त्यजन्ति तदा सः श्लेषः (घ) । अर्थद्वयश्लेषणाच्छ्लेषः ।

**स प्रकृतिलिङ्गवर्णप्रत्ययभाषाविभक्तिपदवचनैः ।**
**अष्टविधो, निरपेक्षस्तुल्योभयवाच्य एव नवमः स्यात् ॥२१३ का**

निरपेक्षः प्रकरणादिव्यतिरेकेणापि तुल्यवाच्यद्वयः (घ) । क्रमेणोदाहरणानि—

मनस्तुदन्ती सपदा बलिष्टा विधौ विरुद्धे तमसि प्रवृद्धे ।
तस्मिन् प्रसन्ने हरितः प्रसादं धन्या लभन्ते तमसि प्रनष्टे ॥४४

सा सपदि बलवती भवति स्म । मम चेतस्विनी मन्मुखमाधुर्यास्वादिनी स्थिता च तदुपैत्याः, हे तथाविधे ! तु इति सम्बोधनम् । राधिका दामोदरे रज्यति स्म । कथम्भूता ? गुणेषु साराधिका गुणेषु मध्ये ये सारभूता गुणास्तैरधिका । दामोदरे कथम्भूते ? सदा मोदं राति ददातीति तस्मिन् ।

मनस्तुदन्तीति—विधौ चन्द्रे विरुद्धे सतीष्टाऽपि क्षणदा उत्तुमवदाल्हतया यथार्थनाम्नी रात्रिर्मनस्तुदन्ती स्यादिति. तस्मिन् विधौ प्रसन्ने हरितो दिशः कर्त्र्यः प्रसादं प्रसन्नतां लभन्त इति । पक्षे, विधौ विधातरि विरुद्धे सति यत्तमस्तत्तमोगुणस्य वृद्धं तस्मिन् सति इष्टाः पदार्था इन्द्रियच्छेदकाः सन्तो मनस्तुदन्तीति प्रथमार्द्धस्य, हरितः श्रीकृष्णात् जना धन्याः प्रसादं लभन्त इति द्वितीयार्द्धस्यान्वयः ।

---

अत्रापि क्रमस्थाक्षराणाञ्च नियमितत्वात् यमकमेव नानुप्रास इति । गद्येऽपि—तथा च रुद्रटकारिका :—'प्रायश्छन्दांसि विषयोऽस्ये'ति । तत्र टीकाकृतां नमिसाधुचरणानां विवृतिः—'प्रायोग्रहणात् गद्यमपि क्वापी'ति चोदाहार्य्या । 'मम चेतो'त्यत्र सापेक्षत्वेऽपि गमकत्वात् समासः ।

(घ) 'द्विधा तु भिद्यते शब्दो रूपतः स्वरतोऽर्थतः' इति शाब्दिकनयेनार्थभेदभिन्नानामेव शब्दानामत्र कारिकया परामर्शः । रूपत आकृतितो न तु प्रकृतितः । वस्तुतस्त्वेतेषामाकृतितोऽभिन्नानामपि प्रकृतितो भिन्नत्वं दुरपह्नवमित्याह वृत्तौ, 'अर्थभेदेन शब्दभेद' इति । 'सकृदुच्चरितः शब्दः सकृदर्थं गमयती'त्यभियुक्तकृतिरत्र प्रमा । माठगणे तुनिगा

अत्र 'इच्छ्यदे'ति दाप् लवने, 'यणदे'ति डु दाञ् दाने, इति प्रकृतिभेदः । 'दृष्टा' इति पुंलिङ्गम् । 'दृष्टे'ति स्त्रीलिङ्गम्—इति लिङ्गभेदः । पुन'र्दृष्टा' इति बहुवचनं, 'दृष्टे'त्येकवचनं, तेन वचनभेदः । "विधा"वितीकारोकार सारूप्ये वर्णभेदः । "तुदन्ती"ति शतृ प्रत्ययः, "तुदन्ति" इत्याख्यातप्रत्ययः, तेन प्रत्ययभेदः । 'हरित' इति पञ्चमी, 'हरित' इति जस्, तेन विभक्तिभेदः । अनेनैकेन षड् भेदाः प्रदर्शिताः । पुनरपि भङ्ग्यन्तरेण लिङ्गवचनभेदं दर्शयति—

लीलाऽम्भोरुहगञ्जिनी रतिरणक्रीडाश्रमोद्गारिणी
निद्रोद्भेदविलासिनी स्वश्रताऽसङ्कोचसञ्चारिणी ।
अन्योन्यप्रणयप्रकाशनविधावन्योन्यसंह्लादिनी
राधाया नयने हरेरपि तनुः क्षेमं विधत्तां तव (11) ॥ ४५

भाषाश्लेषो यथा—(घ)

उद्दामकामकण्डूलकरमण्डलचण्डिमा ।
कालिन्दीकुञ्जरो धत्ते विहारं वारिमञ्जुलम् ॥ ४३

लीलाम्भोरुहेति—राधाया नयने तव क्षेमं विधत्तां कुरुतामिति परस्मैपदस्य द्विवचनं, तथा हरेरपि तनुश्च तव क्षेमं विधत्तामित्यात्मनेपदस्यैकवचनम्, धाञ् धातोरुभयपदित्वात् । नयनयोस्तनोश्च विशेषणान्याह—लीलेत्यादि । स्वश्रतेति—नेत्रपक्षे या श्रीस्तस्यानिष्ठ-वशीभूतता तस्या असङ्कोचो विकारस्तस्य सञ्चारिणी, तनुपक्षे स्वकर्तृका या वशनिष्ठ-वशीभूतता तस्या इत्यादि ।

भाषाश्लेषः शौरसेन्याः श्लेषः । उद्दामेति—संस्कृतपक्षः सुगमः । प्राकृतपक्षे—हे चण्डि । हे कोपने । कालिन्दीकुञ्जरोधसत्ते (घ) कूलं युगलं दन्द्वयो विहारं वारिसं वारयिष्ये । कथं वारयिष्यसीत्याह—इत्यकरमं प्रस्तुतं कर्म मा वल मा वल इत्युताह मारि कर्म कुर्वित्यर्थः । प्रस्तुतकर्म कीदृशम्? उद्दामकामकम् । 'कालिन्दीकुञ्जरे'ति 'उद्दामकामे'ति पदद्वयेऽपि समासादेत्वात् भाषासमावेशः, अन्यत् सर्वमर्थभेदाच्छ्लेष इति ।

---

भरतेन 'हास्यशृङ्गारयोः स्वरितोदात्ते वीररौद्राद्भुतेषूदात्तस्वरितं'मित्यादिकया दिशा प्रतिपादितस्वरनियमिकोऽपि काव्ये स्वरभेदप्रसङ्गः प्रकृतेऽप्रकृत इत्यर्थं दुर्विदग्धशैढिप्रकटनेन । एवं स्थिते एकमेवाकारमाश्रित्य वर्तमानस्य पदद्वयकाव्यस्थितिनो भिन्नार्थत्वप्रकटने शाब्दश्लिष्यन्तेऽभिन्नभिन्नरूपेण भिन्ना इति शब्दाश्लेषालङ्कारस्य श्लेषसंज्ञा । अलङ्कृतिरियमार्थ

(11) 'विधत्तां सुखः' इति (क) (ख) पुस्तकयोः पाठः ।

पदश्लेषो यथा—

> समराला रुपैवेयं राधिके ! सर्वदारुणा ।
> मतिश्च तव दृष्टिश्च समे एव बभूवतुः ॥ ४७
> कृष्णपक्षे बलवती दोषाकरपराङ्मुखी ।
> समे द्वे तामसी रात्रिः सात्त्विकी च सतां मतिः ॥ ४८

वाक्यगतत्वेनायं सभङ्गाभङ्गवाच्यः। शब्दार्थश्लेषयोरयं भेदः—यत्र शब्द-परिवर्त्तनेनापि न श्लेषत्वभङ्गः सोऽर्थश्लेषः, अन्यस्तु सभङ्गाभङ्गत्वाभ्यामेव शब्दश्लेषः। स चोक्तोदाहरणेषु, शब्दपरिवृत्त्यभावात् (ङ)।

अर्थश्लेषो यथा—

> विलोलसंफुल्लकदम्बमालः समुल्लसच्चञ्चुलबर्हिबर्हः।
> अशेषसन्तापहरो जनानां कृष्णस्य मेघस्य सहोज्जिहीते ॥ ४९

अत्र 'कदम्बा'दिशब्दानां परिवृत्त्याऽपि न श्लेषत्वहानिः, इत्यर्थश्लेष एव(ङ)।

अथ शब्दालङ्कारप्रस्तावे प्राप्तावसरतया चित्रकाव्यमपि दर्श्यते। तत्र यद्यपि—

मानवतीं श्रीराधां प्रति श्रीकृष्ण आह—समरालेति। साम्ये हेतुमाह—इयं मति-र्दृष्टिश्च सर्वदारुणा सर्वस्मिन् काले दारुणा सर्वदाऽरुणा च समराला दृष्टिपक्षे सम्यक् कुटिलेत्यर्थः, यदुक्तम् मेदिनीकारेण 'अरालः कुटिले सर्जरसे सामनि दन्तिनी'ति। मति-पक्षे समरो युद्धं तत् आलातीति। कृष्णपक्ष इति—कृष्णपक्षे शुक्लातिरिक्तपक्षे भक्त-पक्षे च। दोषाकरश्चन्द्रो दोषोत्पत्तिस्थानञ्च। विलोलेति—माला सक्‌स्तृतश्च।

भारतीयसाहित्ये स्वतःस्फूर्तैव स्वाभाविकीति सर्वैरेवास्या अकुण्ठप्रसरः—परं गद्यकाव्ये-ष्वस्या भूयानुत्कर्षो लक्ष्यते। अत्रापि 'सर्वमत्यन्तगर्हित'मिति नीत्याऽतिवेलश्लेषो निक-र्षोऽपि प्रासङ्गिक प्रश्नः। यद्योऽप्यस्या विच्छित्तिं स्थूलदृशा प्रेक्ष्यैवं प्राचां निर्बन्धप्रकटनं 'श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु श्रिय'मिति। भाषाश्लेषस्यापरेऽस्मात्‌भाषासमाख्याद-लङ्कारात् स्वतन्त्रविषयता, पूर्वत्र भाषाभेदादर्थभेदोऽप्यानुषङ्गिकः, उत्तरत्र न तथैत्याभावात्। रुद्रटादिभिस्तूभयोर्भेदेऽङ्गीकृतेऽपि संज्ञाभेदकल्पः प्राचीनमतनियन्त्रितत्वात् कथमपि परिहृतः। काव्यप्रकाशोक्तदिशा नात्र तस्य तथा व्यतिरिक्तस्य वेशतः सूचनमपि। भाषाश्लेषे क्वचित् भाषासमेऽपि कष्टकल्पनाश्रयः दुष्करः परिहर्तुं य'थोद्दामे'त्यादौ लक्ष्ये।

(ङ) 'सभङ्गः शब्दश्लेषः अभङ्ग एवार्थश्लेष' इति प्रायोदादमपाकर्तुं रुद्रटादिकृतां सर्वस्वकृता कृताश्रयामाश्रयाश्रयिभावरूपां शब्दार्थोभयालङ्कारनिर्देशव्यवस्थां दूषयितुञ्चेय-मवतारणिका। मम्मटादिभिर्विध्वस्ता समुदन्याद्यावांचीननिबन्धकृद्भिरुज्जीवयितुमिष्टाऽपि

*प्रतिलोमानुलोमो श्लोको यथा—*

(१) (६) (५) (४)
मानसाररसाधारा साऽयन्तो वनमालिना ।

(८) (२) (७) (३)
संललास महामोदा साऽऽमामाद-नि-साध्वसा ॥

(२) (३) (१) (७) (६)(५) (४)
साध्वसानि दमाऽऽमासा दा मोदामसलाऽऽससम् ।

(१४)(८) (१३)(१०)(११)(१२) (९)
नालि ! मानवतीयं सा राधा सार-रसा-नमा ॥ ५२

महामानवती राधा सम्प्रति किं करोतीति पृच्छन्तीं सखीं प्रति सखी प्राह—मानसाररसाधारा मानस्य सारं रसं न धारयतीति तथा, यतो वनमालिना सहायन्ती गच्छन्ती (च) सती आशु प्रीयं संललास, इत्थं गतौ प्रवृत्ता: । कीदृशी ? महामोदेनाऽऽवो दीप्तिर्यस्याः सा । आमामादनिसाध्वसा आ सम्यक् मादेन सौरभमत्ततया निसाध्वसा निर्भया निशब्दोऽयं निषेधार्थो "यथा दीपो निवातस्थ" इतिवत् । अहं साधु यथास्यात्तथा असानि वर्ते । यतो दमामासा दमेनैवाभ्यासोऽभूदित्यर्थः । ननु मा त्वया वादीः साऽद्यमानस्य प्रीत्रमेवोपशमं न सम्भावयामीति वदन्तीं प्रत्याह—असलालसं यथास्यात्तथा ऊहां वितर्कं मा दाः, किन्तु सलालसं यथास्यात्तथा वितर्कं खण्डयेत्यर्थः । निश्चयं प्रदर्शयत्याह—नालीति । हे आलि ! सेयं राधा मानवती न किन्तु साररसेन श्रेष्ठरसेन आनमतीति सा ।

---

अथैनं प्रकाशटीकाकृता सोमेश्वरेणोद्धृतमपोह्यते—'यमकानुलोमतदितरचक्रादिभिदा हि । अभिधानमात्रमेतत् गड्डलिकाऽऽदिप्रवाहो वे'ति । 'क्रीडागोष्ठीविनोदेषु तज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहने चैव सोपयोगाः प्रहेलिका' इत्युपलक्षणमुखेन च तस्योद्घाटनम् । श्लिष्टभरा इति—सा च श्लिष्टगोष्ठीगरिष्ठानां कुतुकिनां गृहस्थेष्टानां स्वाभ्यनुवृत्तिकृतविधिरेव सप्रकाशेति भट्टबाणादिग्रन्थेषूल्लेखतः प्रतीयते, खड्ग-चक्र-नागादिराजसभासिद्धपदार्थानुकृतिमिषाच्चावधीयते । 'अनेकधावृत्तवर्णविन्यासैः शिल्पकल्पना । तत्तत्प्रसिद्धवस्तूनां बन्ध इत्यभिधीयते' इत्यग्निपुराणे (३४२ तमाध्याये) अस्य कारुशिल्पकल्पं पुरस्कारसूचनम् । 'भगवत्-विषय'मिति कृत्वा यदेषामत्र सार्थकत्वमर्दनं तत् भक्तवैष्णवकविसहृदयसार्थशोभि एव । गर्भाचारादीनि तत्कालोपयोगीनि चित्राणि । आकार-गति स्वर-व्यञ्जन स्थान च्युतक-गुप्त-प्रहेलिकाऽऽदिभेदैरत्र भूयान्विस्तर आकरतो ज्ञेयः । अन्येषामादित्यचतुर्णां प्रचुरतो लक्ष्यलक्षणानि । पद्मादिबन्धानां मुद्रितग्रन्थेषु बहुशः प्रदर्शितत्वादिरलप्रायाणि च्छत्र खड्ग-पताका-गदा-मुद्गरबन्धमयान्यत्र परिशिष्टे दर्श्यन्ते । एषां ग्रन्थालङ्काराणां सर्वदैव बहुभि-

छत्रबन्धो यथा—(च)

(६) (५) (२) (३)
तनुतां तनुतां राधाकृष्णयोश्चरितश्रुतिः ।

(४) (१) (८)(७)(९) (१०)
छत्तापानां सुधासिन्धुधारा तां नु ततां नुत ॥ ५६

खड्गबन्धो यथा—

राधामाधवयोः केलिः श्रुतिछत्रसुखदायिका ।
कामन्तनोतु वः क्षेमं प्रेमानन्दौघनिर्भरा ॥ ५७

रासारम्भे नृत्यगीतवादित्रादिमनोहरा ।
राभसासारा सौभाग्याधरीकृतपरा परा ( च ) ॥ ५८

राधा "धारासम्पात आसार" इत्यमरः, धनुर्व्याकरिद्वि हितादिविदयं धाराऽसारशब्दो ज्ञेयः। रासलास्यस्य रासाख्यनृत्यस्य लासदा लासं कान्तिं राति ददातीति, तया विना तव रासविलासो न सिध्यतीति भावः। पुनः कीदृशी ? साराकाररकालावा साराकारं राति ददातीति साराकाररो यः कालो यौवनसमयः तस्मात् सम्यक् दीप्तिर्यस्याः। हे रस्यरस्यस्य ! रसेभ्यो हिताः रस्या रसिनो रमणपराश्च ये युवतिजनास्ते रस्यो गम्यः, हे तथाभूत ! हे रस्यर ! रस्यान् रमणीयान् विलासादीन् राति तेभ्यो ददातीति हे तथाभूत श्रीकृष्ण !

तनुतामिति—चरितश्रुति चरितश्रवणं छत्तापानां तनुतां कृशतां तनुतां विस्तारयतु । कीदृशी ? सुधासिन्धुधारा । नु भोः, तां ततां विस्तृतां नुत स्तुत, यथा चर्चैव विरक्तिः।

रासारम्भ इत्यस्य पूर्वेणान्वयः। रासस्य नृत्यविशेषस्यारम्भे नृत्यं हस्तपादादिचालन-विशेषः, गीतं षड्जादिमिलनं, वादित्रादि वीणादि, तैर्मनोहरा राभसास्य कौतुकस्य सारः स्थिरांशो यस्यां सा। सौभाग्येनाधरीकृता अधःकृताः परे अन्यानन्दादयोऽपरे (13) सार्वभौमसुखादयो यया सा इति, केल्याः मकाश्रान कैऽपीति भावः।

गौ ेयविदुषासुत्तम्भितसंस्थानसुन्नाणामालङ्कारिकधुरीणाणां प्रेमचन्द्रतर्कवागीशपादानां 'छतवद्धे क्रमवद्धे चड्ताऽङ्कुले व्रजति मारशले (Marshall) च मघुव्रते। विधिवशादधुना मधुनाऽहतो रसमयः समयः मधुपायया'वित्यादि संगृहीतृणामामोदमुत्तेजयति। 'अयन्तो'-त्यादि—जीवातुस्तु, अय गताविति धातोरनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति। 'उदयति

—न लीनोऽलिर्यस्यां सादृशी, मागरसावसौ उच्चममघुरुक्तिरिव अमरादुक्ता मधुरमधुधारेव परमानन्दैत्यर्थः । पुनः कीदृशी ? नालीकं पद्मनिलानं यस्याः सा, बहुव्रीहौ कः ।" तृतीयचतुर्थपदयसभो मध्यस्तु न सरसः, अतो हेय एवायम् ।

(13)—'दधः परे' इति क्वचित् पाठः ।

पद्मबन्धो यथा—

राधिका रुचिराकारा राकारासस्थलीसरा ।

रासलीलापरा साररासारा गीः पिकाधिरा (छ) ॥ ६२

चक्रबन्धो यथा—

(१७) (१) (७) (१३) (२२) (१६) (१०) (४)

[यस्य] श्री तु लनां न [क-श्चन] ग मी भक्तौघ ता प दं नो

(१८) (२) (८) (१६) (१४) (११) (५)

[ध्वस्ता-] ना क्ष बल- [च्छ-विः] स न हि मां त्वं मुञ्च मो द धाम !

(२०) (३) (६) (१५) (२१) (१२) (६)

[सन्ना-] थ ! व्र जकेलि- श-ब्दनमनः [यथा-] न दी कौ तुकी(छ)

(२३)

कीलप्राय इहाध्वनीह सतते नो [मत्समः] पातकी ॥ ६३

अत्र— श्रीनाथपादकौतुक्यसनामोदो कविः शमी (छ) ।

यस्य ध्वस्ताऽच्छविः सन्नाऽयथा कश्चन मत्समः(13) ॥ ६४

गर्भाक्षर इति—एतान्येवाक्षराणि क्रमेणैकैकस्मिन् गर्भे निधाय कविना नानाच्छन्दोभिः श्लोकाः क्रियन्तामित्येतदप्येकं चित्रम् (च)। राधिकेति—राकायां रासस्थलीं सरतीति सा। साररासारा सारं साररसम् आ सम्यक् रासञ्च दयतीति सा। गीःपिकाधिरा गीर्भिः पिकानामप्याधिं रातीति सा। यस्येति—यस्य श्रीयुक्तौ तुलनां कश्चन कश्चिदपि न गमी न गमिष्यति। यस्त्वं ध्वस्ताशास्त्रमलच्छविः ध्वस्तमनाक्लानामसुराणां बलं छविश्च येन स त्वं मां न मुञ्च। हे मोदधाम। भक्तजनानन्दने समर्थ। हे सन्नाथ। इहाध्वनि भक्तिमार्गे सततेऽविरते मत्समः कीलतुल्यः कोऽपि पातकी नास्ति। कीदृशः? व्रजस्य केलेः कथाश्रवणेनैव या मनसि श्रद्धानदी तस्यां कौतुकी स्नातुं कौतुकवान्, तथाप्यन्ता-घेन्येऽपीति भावः।

श्रीनाथस्य पादे पदसेवायां कौतुक्यं कुतुकिनो भावस्तस्य यतो यत आमोदी कविः पण्डितः शमी शान्तः। यस्याच्छविम्लानना ध्वस्ता अश्रद्धा च सन्ना विशीर्णा तत्समः कोऽपि न भवेत्। पक्षे कविः स्वदैन्यं स्वयमेव वर्णयति स्म—श्रीनाथस्य श्रीगुरोः पादयोः कौतुक्यं पादावस्यैव संश्रयामीति यत् कौतुक्यं तस्मात् एव यत आमोदी, न तु पादयोः कदाचित् कामपि सेवामकरोदिति भावः। कविः श्रीमहाप्रभुदत्तशक्तिकः शमी विरक्तो गुरुकृपा-

(छ) बन्धश्लोकेषु नामाङ्कता हि प्रायशः प्राचीनश्लोककर्तॄणां शैली। एषु क्वचित् कवेर्गुरु-स्मरणं गुरुनामाङ्कता च वरीवर्त्ति। तत्र विस्तरः कण्ठाभरणादितो ग्राह्यः। नीरसा-

(13) अत्र "न तत्सम" इति पाठः (ख) (ग) (ङ) पुस्तकेषु, स च टीकाकृता गृहीतः।

शार्ङ्गमन्तो यथा—श्रीकृष्णगाथा नामेयं कर्मणा च कदाचन ।
नासाद्यते पावनिका विना तस्य दयां हरेः ॥ ६५
कथमस्य कृपासिन्धोर्जनेषु च मिथोरतिः ।
जायते बहुजन्मान्ते सुकृतैः कारणायितैः ॥ ६६
चरणासवलाभेन दारुणाकरुणात्मनाम् ।
मोहं हित्वा किल प्रीतिं तमसुं सततं स्मर ॥ ६७
तस्य रूपं चेतसि च मन्त्रवत् सततं लिख ।
तेन साधुतया कृष्णे भविष्यति समागमः ॥ ६८

एषु— श्रीनाथपादपाथोज—(14) रसलालसचेतसा ।
कृतेयं ततमोदा च सुजने कविता तया ॥ ६९ इति श्रीकान्तरम् ।

यथा वा—श्रीगप्रीतिः स्वनामाकृतिकथनविनाभावपदे न, विद्या-
ऽमोदश्रद्धाकलापादपि सुखदमिथोभावसाम्राज्यतश्च (15) (छ) ।
रम्या रम्यस्थलस्थप्रसरमदकलामोदलक्ष्मीसमेत-
प्रेमासम्मगीतप्रणयिनि वचने तास तन्ना विभाभा ॥ ७०

सेवायामप्यनासक्त इति भावः। व्यनदन्न यस्य स्वविभेत्तासंमदि भक्ता, मन्ना च मन्ना, सतृमसो महाप्रभुभक्तमण्डले कोऽपि नास्ति, स एवैकोऽस्तीति भावः। चरणेति— दारुणः कठोरोऽपि।

श्रीगप्रीतिः श्रीकृष्णविषया प्रीतिः कं स्मोयं यन्नामाकृत्योर्नामरूपयोः कथनं कीर्तनं तद्विनाभावपदे न भवति, किन्तु तदविनाभावपद एव भवतीत्यर्थः। विद्याया आमोदः सौरभं, तत्रापि यश इत्यर्थः। श्रद्धायाः कलापः समूहश्च तयोर्द्वन्द्वैवं, तस्मादपि न भवति, तथा सुखदो यो मिथोभावः परस्परप्रीतिस्तस्यापि साम्राज्यतः साम्राज्यात् "ष्यायनान्त-तुर्यादिभ्यश्चेत्यर्थम्। कीदृशी? रम्या, रमा शोभा तस्याः साधुः, रम्यस्थले श्रीवृन्दावने तत्रस्था

अत्र च— श्रीनाथपदपाथोजरसलालसचेतसा ।

भाविता ततमोदस्वरसा सुकविना कृतिः(छ) ॥ ७१

एकाक्षरपादो (छ) यथा—

शंशीः शशी शशाशाशां पापोऽप-पाप-पः पपिः ।

लोलो (छ) ललाल ली-ला-लीं ययाऽयं योऽयया ययौ ॥ ७२

एकाक्षरो यथा—

न नाना नानिनोऽनेना नानाऽनेनाननं नु नुः ।

नूनं नोनानूननूनाननु नुन्नुन्ननून्निनीः ॥ ७३

ये प्रसरा जङ्गमाः पशुपक्षिमृगादयस्तेषां मदो भावोन्मादः, कला वैदग्धी, मोदो हर्षो, लक्ष्मीः शोभा, तत्समेतो यः प्रेमा तमासन्नोऽनुगतो यः प्रागीतः प्रतिष्ठितः प्रणयिजनस्तस्य रुचे रोचते स्म । तातेति तातमन्त्रेण सम्बोधनम् । हे मनुप्रियप्रिय ! तद्वा तस्य प्रणयिजनस्य भा शोभा विभाभा न्यायालसदृशी अतिनिर्मलेत्यर्थः ।

श्रीनाथेति—सुकविना कृतिः काव्यं भाविता आविर्भाविता । कीदृशी ? ततमोदस्यो विस्तृतानन्दरूपो रसो यस्यां सा । एष श्लाङ्गबन्धस्यैव प्रपञ्चः । काचित् सख्यमभिसरन्ती चन्द्रमुदितं वीक्ष्याभिमर्षमसमाऽनुतपति—शंशीरिति । शशी चन्द्र आशां पूर्वां दिशं शशाश प्राप, अथ् सुलगतौ, पश्चिमस्यां दिश्यस्तीभूय पुनः सुतेनैव पूर्वां दिशं जगामेत्यर्थः । कीदृशः ? शंशीः शं कल्याणं, तत्र शेते, न तु मत्कल्याणे जागर्तीति भावः शीङ् स्वप्ने क्विबन्तः । यद्वा मत्कल्याणस्य शीर्हिंसा यतः, शॄ हिंसायां सम्पदादित्वात् क्विप्, शमिति मान्तमव्ययम् । दुःखेन शशिनमाक्षिपति—पाप इति । अप पाप-पः अपगत-पापानसद्विधयुवतिजनान् पायनि, (16) पै शो वै शोषणे । पुनः कीदृशः ? आशासमन्मनो-रथं पिबतीति सः, ॥ लोकेत्यादिना सखीनिषेधः । अतएव लोलो युवतिसतृष्णः सख्यो लीलाश्लेषं लाति ददातीति याऽली सखी तां ललाल कामितवान् । 'लोलश्चलसतृष्णयोः', लीङ् श्लेषणे, लल ईप्सायाम् । यया लीलालया सह अयं शुभावहं विधिं सन्योगं ययौ प्राप । कीदृशा ? अयया न विद्यते या यानं यस्यास्तया सम्प्रयोगे स्थिरयेत्यर्थः, साम्यमकुर्वत्येवेति भावः । यद्वा, न यातीति अया तया ।

नेत्यादि—ना पुरुषः परमेश्वरो नाना न भवति, किन्त्वेक एवेत्यर्थः । कीदृशः ? अनिनः न विद्यते इनः प्रभुर्यस्मात्, स एक एव प्रभुरित्यर्थः । 'इनः सूर्ये प्रभौ राज्ञी'त्यमरः ।

---

षटिति श्लोकान्तरगर्भे बन्धे । तत्षट्कश्लोकेष्वेषु श्रीकृष्णभक्तिः, तदङ्गेषु च गुरोः स्तुतिरिति विचित्रा भणितिपरिपाटी । श्रीमद्भागवतपुराणोपरि निबन्धंकर्ता ग्रन्थकृतः स्वग्रामे

---

(16) 'पाययती'ति ,(ग) (ङ) (क) पुस्तकेष्वसङ्गतः पाठः । 'पापयतीति' (ख) पुस्तकेऽनवधानकृतः पाठय ।

सिंहावलोकश्लोकान्तरगर्भो यथा(क)—

(२) (१)
तेजः किञ्चन [तनदस्य] सततं [नव्याम्बुदाभं भज]
(४) (३)
स्निग्धं लोचन-[लोभदञ्च-] तुरता-[लीलाविलासावलि]।
(६) (५)
यन्तश्चिन्तय [तां रसस्य] सरणिं [श्रीराधिकामोढ़िम-]
(८) (७)
प्रेमार्द्रं रुचि-[रच्छवि सा]-रवतो [क्रोड़ा दधद्धामसु] ॥ ७४

अत्र—नव्याम्बुदाभं भज तनदस्य लीलाविलासावलि लोभदञ्च।
श्रीराधिकामोढ़िमतां रसस्य क्रीड़ां दधद्धाम सुरच्छवि सा (ख) ॥ ७५

इति श्लोकान्तरगर्भः।

## (६) पुनरुक्तवदाभासः पुनरुक्तवदेव सः॥ २१५ का—

तव तनुगरीरुहद्यों काञ्चन कनकस्य योऽवधं नेचे।
राधे! सुमुखि! न भवत्या मुखचन्द्रोऽपि शुभ्रांशुः॥ ७६

अनेनाः, न विद्यते एनः पापं यस्य, "अयमात्माऽपहतपाप्मे"तिवत्। यद्वा विषमजगत्सृष्ट्याप्यनेना निरपराधः। एकस्यैव तस्य नानाविधजगत्कारणमाह—अनेन परमेश्वरेणैव नाना नानाविधमायिकं जगद्भवतीति भावः। हु भो तुर्य्यावस्थाजड़स्यापि अनन्तं जीवरूपेण परमात्मनैव भवति, किं पुनर्मायिकस्य नानाविधजगत इति भावः। नूनमिति वितर्के। ज्यायान् न्यूनान् पुरुषान् अनूनान् अन्यांश्च पुरुषानसु तुल्यीकृत्य न सुमङ्गयति, सु स्तुतौ क्विपि सुत् सुतं स्तुतं सुदति दूरीकरोतीति तथाभूतो न भवति, अनुत्कृष्टसमुत्कृष्टं वा पुरुषं कश्चित् ईश्वरत्वेन स्तौतु, तत्राप्यवहित्थतया मान्यमानुमन्यादिति भावः। प्रत्युत ननु निश्चित-सुमिनो: स्वर्ग्गं स्वर्गं महर्लोकादिकञ्च नितरां नयतीति, सनिकृष्टोत्कृष्टदेवतोपासकाना-मपि स एव स्वर्गादिकं फलं प्रापयति, तस्यैव सर्वफलदातृत्वादिति भावः। तेजः कथम्भूतम्? अन्तश्चिन्तयतां जनानां रसस्य सरणिं वर्त्मे। 'सरणि'मित्यस्य तेजोविशेषणत्वेऽप्यजहल्लिङ्ग-त्वान्न क्लीवत्वम्। धामसु कुञ्जस्थलेषु सारवतीं क्रीड़ां दधत् परिपुष्णात्। सुराणां सूर्य्यादीना-मपि छविर्दीप्तिर्यस्मात्, 'न तद्भासयते सूर्य्य' इत्यादि, "न तत्र सूर्य्यो न च चन्द्रतारका:" "तमेव भान्तमनु भाति सर्वं"मित्यादिश्रुतेः "यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामक"-मिति स्मृतेश्च। यमकचित्रकाव्यव्याख्या समाप्ता।

---

कुमारहट्टान्तः काञ्चनपल्लीमिति श्रीकृष्णराधाख्यदेवायतनप्रतिष्ठातृणां परमभागवतानां शिवरायाणां श्रीनाथचरणानां आदरणार्थं श्रीकृष्णचैतन्यपदोद्दिष्टदीपिकायामानन्दवृन्दा-

अयं शब्दार्थनिष्ठोऽपि (ज) । यथा—

घनजलदरुचिर ! सुन्दरधाम ! महःसञ्चयौघलिप्ताश: ।
विधुरमृतकरकलानिधिरेष नभःपुष्कराकाशः ॥ ७७

अत्र शब्दवदर्थोऽपि पुनरुक्तवदाभासते, न तस्य पौनरुक्त्यम् । नभाः श्रावणस्तत्सम्बन्धि पुष्करं व्योम तद्वदा सम्यक् काशः प्रकाशो यस्य स तथेति । कृष्ण-पक्षेऽनेनैव श्यामत्वोपलब्धेः,पुन'र्घनजलदे'त्यादिना पुनरुक्तवच्छ्यामत्वमर्थः प्रतिभासते, न तु पुनरुक्तम् । वस्तुतस्तु 'नभःपुष्कराकाशे'त्यस्य साध्यस्य

श्रीकृष्ण व्याह तवेति—अत्र 'तनु''शरीर'योरेकपर्य्यायत्वेन एवं 'काञ्चन''कनक'योरेकपर्य्याय-त्वेन च पुनरुक्तत्वम् । भनत्या सुखवदनङ्गो निष्कलङ्कोऽपि शुभ्रांशुश्चन्द्रो न भवतीत्यर्थः । अत्रापि 'सुख''वदन'योः समानपर्य्यायत्वेन पुनरुक्तत्वं ज्ञेयम् । घनेति—हे निविड़जलद इव रुचिर श्रीकृष्ण ! पुनश्च हे सुन्दरदेह ! एष त्वं विधुः सर्वेषां संसारदुःखं विधुनोति हरतीति तथाविधः सन् भासि । त्वं कथम्भूतः ? महःसञ्चयस्य कान्तिसमूहस्यौघेन वेगेन लिप्ताऽऽशा दिक् येन सः । पुनः कथम्भूतः ? अमृतकरस्यासौ कलानिधिश्चेति । तथा कला वैदग्धी तस्या निधिरिव । नभःपुष्करस्य श्रावणमाससम्बन्ध्याकाशस्येव आ सम्यक् काशः श्यामदीप्तिर्यस्य सः । अत्र 'घन''जलद'शब्दयोस्तथा 'रुचिर''सुन्दर'यो'र्धाम'महसोः' 'सञ्चयौघ'योरेकपर्य्यायत्वेन पुनरुक्तवदाभासत्वं ज्ञेयम् । एवमुत्तरार्द्धेऽपि । चन्द्रपक्षे, हे निविड़मेघेन सुन्दर ! किञ्चिद्दूरवर्त्तिमेघेन चन्द्रस्य शोभाऽतिशयो भवतीति सर्वैरेव दृश्यते इति ज्ञेयम् । अमृतकिरणश्चासौ कलानिधिश्चेति, कला षोड़शो भागस्तस्या निधिः ।

---

धमाख्यचम्पूग्रन्थे च कविकर्णपूरेण विहितम्—यथा 'गुरु' नः श्रीनाथाभिधमवनिदेवान्वय-विधुं नुमो भूयास्त्रं सुत इव विभोरस्य दयितम्' इति, 'कुमारहट्टे यत्कीर्त्तिः छ्याद्देवो विराजते,' इति च । यथा तत्र तथाऽत्रापि अस्वाश्रुतो वैष्णवजनोचितो विनयमहिमा मनागुपभोग्यः । श्लिष्टकाव्यत्वादिषु 'अनङ्केलिशब्दनमनः' "अस्ताऽच्छविः" 'ततमोहा च सुजने' 'रम्या रम्यस्थल····' 'कुरुच्छवि स,' इत्यादौ क्लिष्टताऽर्थापरिपोष-नेयत्व-निरर्थकत्वादीनां दोषाणां समाधानं नातुष्करम् । लोल इति—'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्ता'विति विशेष्यार्थबोधः । श्रीकृष्णस्य स्वयं मन्मथमन्मथत्वेऽपि लोलता भक्ताकर्षणव्याजेनेति सर्वमवदातम् । साम्प्रतञ्च—अस्य शुनादिशब्दपाठसिद्धत्वं न पाणिनीयानुशासनसंवादि । एतदधिका· लङ्कारिकसम्मतक्रियाकारकगुणस्थानचितादीनां भेदा व्याकरतो ज्ञेयाः ।

(ज) पुनरुक्तवदाभासस्य केवलशब्दनिष्ठत्वं शब्दार्थोभयनिष्ठत्वञ्चोभयमेव प्रकाश-कारादिक्तनरीत्या । आद्ये कल्पेऽस्यैवास्यावतारः सम्यङ्, द्वितीयेऽपि तथैव, अतोऽत्रानुरुद्धना

‘घनजलदे’त्यादि हेतुभूतम्। एवं चन्द्रपक्षेऽपि, तेनोक्तरूपशब्दपरिवृत्तावपि ‘विधु’रिति नानाऽर्थस्य शब्दस्य स्थितौ तथाविधार्थालङ्कारस्य प्राधान्यम् (ज)।

॥ इत्यलङ्कारकौस्तुभे शब्दालङ्कारनिर्णयो नाम सप्तमः किरणः ॥

नभस्याकाशे पुष्करं श्वेतकमलमिव या सम्यक् काशो दीप्तिर्यस्य। सरोवरे यथा श्वेतकमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽपीति।*

---

भेदघटविरेकधा न्यायानुसारिणी, तथा च शब्दालङ्कारतोऽर्थालङ्कारोत्तरपक्षत्वे पुनरयमेव साधीयान् सेतुविन्यासः। आचार्याअविन्यायमनुसन्धाना रुय्यकादयस्तमिममर्थालङ्कारत्वेन स्मरन्ति। परिशिष्टिसहत्वासहत्वयुक्तिसुपयुञ्जाना अपि दर्पणकृदादयः केचिदस्योभयस्वरूपस्य शब्दप्राधान्यमित्युररीकृत्य तस्मिन्नन्येष्वादायेषास्यालङ्कारस्य विमर्शनेन संस्खलितां क्रमभक्तिमुपगोपन्ति। अर्थालङ्कारप्राधान्यमिति—नानार्थशब्दोत्थितत्वेनास्यार्थालङ्कार-प्राधान्यपरिकल्पना प्राचीनमतवादं प्रति श्रद्धायुक्तिः प्रसूतेत्यापाततः प्रतिभाति। इति—*

# अष्टमः किरणः ।

अथार्थालङ्कारा उच्यन्ते—

## यथाकथञ्चित् साधर्म्यमुपमा (१) (क)—२१६ का

उपमानोपमेययोर्यथाकथञ्चिद्येन केनापि समानेन धर्मेण सम्बन्ध उपमा । स च अंशेन, (क) न तु सर्वैरंशैः—सर्वांशैस्तेनाभेदादुपमानोपमेयभाव एव न भवतीति ।

## —सा भवेद्द्विधा ।
## पूर्णा लुप्तेति—२१७ का

सा उपमा । —पूर्णा तु धर्मेणेव-यथाऽऽदिभिः ॥

## उपमानोपमेयाभ्याम्—२१८ का

यथाकथञ्चिदिति मूलस्यार्थमाह—उपमानोपमेययोरित्यादिना । उपमानोपमेययोः सादृश्यसम्बन्ध उपमाऽलङ्कारः । सादृश्यसम्बन्धमेवाह—यथा कथञ्चिदिति । एक द्व्यादि-धर्मेण, न तु सर्वेण धर्मेणेत्यर्थः । येन केनापी'ति साधारणेन धर्मेणेत्यर्थः । 'समानेने'ति उपमानोपमेयवृत्तिनेत्यर्थः । 'धर्मेणे'ति 'धान्येन धनवान्' इतिवदभेदे तृतीया । तथाचोपमानोपमेयवृत्त्येक द्व्यादिसाधारणधर्माभिन्नः सम्बन्धः सादृश्यसम्बन्धः । न तु सर्वैरंशैरिति—नतूपमानवृत्तिगणको धर्मादिरित्यर्थः । अभेदादिति—स्वनिष्ठयावद्धर्मेण स्वसदृशं स्वमेव, अतोऽभेदेन उपमानोपमेयभाव एव न सम्भवतीत्यर्थः ।

---

(क) यथाकथञ्चिदिति—इयं हि लक्षितोपमालक्षणच्छायैवानियामितैव प्रतीयमानेयं लक्षण-घटना वृत्तिग्रन्थाद्यालङ्कारिकातिरिक्तैव प्रतिपाद्यते। नात्र तत्र गृहीतायाः प्रतीयमानसादृश्याया उपमाया अन्तर्भावो कथञ्चिदिभाव्यः । स चांशेनेति—'भूयोऽवयवसामान्ययोगो जात्य-न्तरस्य यदि'ति कैश्चिल्लक्षितस्य सादृश्यलक्षणस्यानुबन्धः स्पष्ट एव। एतदभिप्रेत्यैव प्रकाश-सर्वस्व कौस्तुभ हृदादीनां लक्षणेषु साम्य-सामान्य-सादृश्यादिपदव्यागाावेन साधर्म्यपदस्य निवेशः । रुद्रोचिकया मतद्वयसमाधानमित्य वैश्चिचेष्टितम् यथा, 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इत्युद्भते मवंस्यपन्थोक्ते । उपमाया विच्छित्तिमात्रा-ऽतिरेकोऽनेकालङ्कारजीवातुभूतत्वचानादिकालतः कलितमित्यस्यानन्यसाधारणतैवात्राभिम-निर्देशबीजम् । अत्र साधारणधर्मस्यासाधारणस्यापि सामान्यं क्वचिदेकरूप्येण एकैक्य-मयत्वेन वा,क्वचिद्वा तस्य पृथक्तया निर्देशो वस्तुप्रतिवस्तुभावेन,यथा लक्ष्य यान्त्य। मुहुर्वलित-कन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इत्यादि मालतीमाधवपद्ये, 'पाण्डोऽयमंसा

'घनजलदे'त्यादि हेतुभूतम्। एवं चन्द्रपक्षेऽपि, तेनोक्तरूपशब्दपरिवृत्तावपि 'विधु'रिति नानार्थस्य शब्दस्य स्थितौ तथाविधार्थालङ्कारस्य प्राधान्यम् (ज)।

॥* इत्यलङ्कारकौस्तुभे शब्दालङ्कारनिर्णयो नाम सप्तमः किरणः ॥ *

नभस्याकाशे पुष्करं श्वेतकमलमिव या सम्यक् काशो दीप्तिर्यस्य। सरोवरे यथा श्वेतकमलं शोभते तथैव नभोरूपसरोवरे चन्द्रोऽपीति ॥ *

---

भेदमतविरेकधा न्यायानुसारिणी, तथा च शब्दालङ्कारतोऽर्थालङ्कारोत्तरयकल्पे पुनरयमेव साधीयान् सेतुविन्यासः। शास्त्रवाक्यविन्यायमनुसरन्तो रुय्यकादयस्त्विममर्थालङ्कारत्वेन स्मरन्ति। परिवृत्तिसहत्वासहत्वयुक्तिमुपयुञ्जाना अपि दर्पणकारादयः केचिदस्योभयस्वरूपस्य शब्दप्राधान्यमित्युररीकृत्य शब्दार्थयोरुभयोरेवास्यालङ्कारस्य विमर्शनेन सर्वस्वकृतां क्रमभक्तिमुपजीवन्ति। अर्थालङ्कारप्राधान्यमिति—नानार्थशब्दोत्थितत्वेनास्यार्थालङ्कार-प्राधान्यपरिकल्पना प्राचीनमतवादं प्रति श्रद्धानुहितः प्रसूतेत्यापाततः प्रतिभाति। इति—*

# अष्टमः किरणः ।

अथार्थालङ्कारा उच्यन्ते—

**यथाकथञ्चित् साधर्म्यमुपमा (१) (क)—२१६ का**

उपमानोपमेययोर्यथाकथञ्चिद्येन केनापि समानेन धर्मेण सम्बन्ध उपमा । स च अंशेन, (क) न तु सर्वांशैः—सर्वांशत्वेनाभेदादुपमानोपमेयभाव एव न भवतीति ।

**—सा भवेद्द्विधा ।**

**पूर्णा लुप्तेति—२१७ का**

सा उपमा । **—पूर्णा तु धर्मेणेव-यथाऽऽदिभिः ॥**

**उपमानोपमेयाभ्याम्—२१८ का**

यथाकथञ्चिदिति सूत्रस्यार्थमाह—उपमानोपमेययोरित्यादिना । उपमानोपमेययोः सादृश्यसम्बन्ध उपमाऽलङ्कारः । सादृश्यसम्बन्धमेवाह—यथा कथञ्चिदिति । एकद्व्यादि-धर्मेण, न तु सर्वेण धर्मेणेत्यर्थः । येन केनापीति साधारणेन धर्मेणेत्यर्थः । 'समानेने'ति उपमानोपमेयवृत्तिनेत्यर्थः । 'धर्मेणे'ति 'धान्येन धनवान्' इतिवदभेदे तृतीया । तथा चोपमानोपमेयवृत्त्येकद्व्यादिसाधारणधर्माभिन्नः सम्बन्धः सादृश्यसम्बन्धः । न तु सर्वांशैरिति—न तूपमानवृत्तिसकलैर्धर्मांशैरित्यर्थः । अभेदादिति—स्वनिष्ठसकलधर्मैः स्वसदृशं स्वमेव, अतोऽभेदेन उपमानोपमेयभाव एव न सम्भवतीत्यर्थः ।

---

(क) यथाकथञ्चिदिति—इत्थञ्चतोपमालक्षणव्याख्यायेतानियामसमतीव प्रतीयमानेयं लक्षण-घटना इतिगन्याद्वाकादिजातिरिक्तैव प्रतिपाद्यते। नात्र तत्र गृहीतायाः प्रतीयमानसादृश्याया उपमाया अन्तर्भावो कथञ्चिदिभाव्यः । स चांशेनेति—'भूयोऽवयवसामान्ययोगो जात्यन्तरस्य यदि'ति केचिल्लक्षितस्य सादृश्यलक्षणस्यानुबन्धः स्फुट एव। एतदभिप्रेत्यैव प्रकाश-सर्वस्व कौस्तुभ हृदादीनां लक्षणेषु साम्य-सामान्य-सादृश्यादिपदव्यागाधेन साधर्म्यपदस्य निवेशः । स्वच्छन्दचिकया मतद्वयसमाधानमित्य' केचिच्चेष्टितम् यथा, 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः' इत्युक्ते भवेत्यन्योक्तेः । उपमायाः विच्छित्तिमात्रा-ऽतिरेकोऽनेकालङ्कारजीवातुभूतत्वचानादिकालतः कलितमित्यस्यानन्यसाधारणतैवात्राभिम-निर्देशबीजम् । अत्र साधारणधर्मस्याप्यसाधारणस्यापि सामान्यं क्वचिदेकरूप्येण प्रत्यैक्य-मयत्वेन वा,क्वचिद्वा तस्य पृथक्तया निर्देशो वस्तुप्रतिवस्तुभावेन,यथा 'लक्ष्ये यान्त्या मुहुर्वलित-कन्धरमाननन्तदावृत्तवृन्तशतपत्रनिभं वहन्त्या' इत्यादि मालतीमाधवपद्ये, 'पाण्ड्योऽयमंसा-

धर्मः सामान्यधर्म आह्लादकत्वादिः । इव-यथा-वाऽदय औपम्यवाचकाः । उपमानं चन्द्रादि । उपमेयं मुखादि । एतैर्युक्ता पूर्णेत्यर्थः ।

—इयमेवेव-वाऽदिभिः ।

युक्ता श्रौती— २१९ का

इयमेव पूर्णा इव-यथा-वाऽदिभिर्युक्ता चेद्भवति तदा श्रौती । 'तत्र तस्येवे'त्यनेन (पा ५।१।११६) विहितो वतिश्च श्रौत्यामेव ।

समाद्यैस्तु सा स्यादार्थी च—२२० का—

सा पूर्णा समाद्यैर्युक्ता यदि भवति तदाऽऽर्थी । समादयस्तु सम-समान-सदृश-सदृक्ष-सदृक् तुल्य-सन्निभ-निभ-चोर-बन्धु—प्रभृतयः (क) । 'तेन तुल्यं क्रिया चेद्वति'रित्यनेन (पा ५।१।११५) विहितेन वतिना चार्थी । तत्र तेन तुल्यमिति तच्छब्द उपमानपरः । तुल्यशब्द उपमेयपरः । तस्य तुल्यमित्यत्र विपर्ययः । उभयं तुल्यमित्युभयनिष्ठः ।

—तद्धिते ।

वाक्ये समासे चेत्येते षोढा—२२१ का

एते श्रौत्यार्थ्यौ च । तद्धितादित्रिके षड्विधा भवति । तद्धितन्तु वत्यादि —तद्यथा वति-कल्प-देश्य-देशीय-बहुच्-प्रभृतयः । वाक्यं प्रसिद्धं, समासश्च । तद्धितगा श्रौती, वाक्यगा श्रौती, समासगा श्रौती, तद्धितगा आर्थी, वाक्यगा आर्थी, समासगा आर्थी, इति पूर्णा षड्वेव ।

—लुप्ता तु लोपतः ।

धर्मवाद्युपमानानामेकद्वित्रिक्रमेण हि ॥ २२२ का

धर्मादीनामेकस्य द्वयोस्त्रयाणां वा लोपतो लुप्ता भवतीत्यर्थः ।

पूर्णा त्विति—यत्र वाक्ये एते सर्वे शब्दा वर्त्तन्ते, तत्र पूर्णोपमाऽलङ्कारो ज्ञेय इति समुदायार्थः । विपर्यय इति—तस्योपमेयस्य तुल्यमुपमानमित्यर्थः । उभयं तुल्यमित्युक्ते

---

दितमन्त्रद्वार' इत्यादि रघुपद्ये च । परं न स भेदः साधर्म्यप्रतिघातकः । एतमेवाभिप्रायं केचिदाचार्यदण्डिप्रभृतय 'उद्भवं'मिति पदेनैव गतार्थं मन्यन्ते । परमाचार्यपादैर्वाक्यार्थोत्थं तत्र तत्र माहात्म्ये भिन्नावयवघटनेऽप्युपमामिच्छन्ति सौक्ष्मना, न तन्त्रेणालङ्कारिकचक्रसम्मत-

**धर्मलोपे क्रमेणैषा पूर्णावत् षड्विधोदिता ।**

**किन्तु तद्धितगा श्रौती लुप्तायां नेति पञ्चधा ॥२२३ का—**

एषा लुप्ता तद्धितगाऽऽदिभेदेन पूर्णावत् षड्विधा भवितुमुचिता । श्रौती लुप्ता द्विविधा, आर्थी लुप्ता त्रिविधेति । किन्तु धर्मलोपतद्धितगा श्रौती लुप्ता न भवतीति पञ्चैव—वाक्यगा श्रौती लुप्ता, समासगा श्रौती लुप्ता, तद्धितगा आर्थी लुप्ता, वाक्यगा आर्थी लुप्ता, समासगा आर्थी लुप्तेति ।

**क्वचि कर्माधारक्यचि कर्तृकर्मक्यङि णमि ।**

**क्यङि चेति पुनः पञ्चेवादिलोपे यथाक्रमम् ॥ २२४ का—**

कर्मक्यचि क्वचि, आधारक्यचि क्वचि, कर्तृक्यङि णमि णमुलि, कर्मक्यङि वा णमुलि, क्यङि चेति सा लुप्ता पुनः पञ्चेति दश ।

**उपमानानुपादाने द्वैधं वाक्यसमासयोः ॥ २२५ का**

तत्र लुप्तायामुपमानानुपादाने सति वाक्यसमासयोर्निमित्तयोर्द्वैधं भवति ।

**इवादेरनुपादाने द्वैधं स्यात् क्विप्समासयोः ॥ २२६ का**

पुनस्तस्या इवादिलोपे क्विपि समासे च द्वैधम् ।

**धर्मोपमानयोर्लोपे द्वैधं वाक्यसमासयोः ॥ २२७ का**

पुनस्तस्या द्वैधमित्यर्थः ।

**धर्मेवादिलोपे तु द्वैधं स्यात् क्विप्समासयोः ॥ २२८ का**

पुनर्द्वैधमित्यर्थः ।

उपमानोपमेयोभयनिष्ठधर्मः प्रतीयते । किन्त्विति—यत्र तस्योपमेयस्य तुल्यमित्यर्थे 'वति'प्रत्ययस्तत्रैव श्रौती लुप्ता । अत्र यदि धर्मलोपस्तदा वाक्यार्थ एव न भवति, तद्यथा वक्ष्यमाणोदाहरणे 'त्वदाननस्ये'त्यादौ माधुर्यादिधर्मलोपे वाक्यार्थसङ्गतिर्न स्यात्, तस्मात्तद्धितगा श्रौती लुप्ता नास्तीत्यमी द्विधैव श्रौती लुप्ता ।

---

मिति विशेषः । उपमाद्योतकानामिव वदादीनां सुष्ठु संग्रहः काव्यादर्शतो ग्रहणीयः । अस्य भेदपरिगणने प्राचीनैर्भामहदण्ड्यादिभिः, नातिप्राचीनैरुद्भट-रुद्रटादिभिरर्वाचीनैर्भोज-मम्मट-विश्वनाथादिभिश्च यथारुचि भिन्न एव मार्गोऽवलम्बि । तत्र नवीनमतपक्षपातिना

उपमेयस्य लोपे तु स्यादेका प्रत्यये क्वचि ॥ २२९ का

पुनरेका ।

धर्मोपमेयलोपेऽन्या त्रिलोपे तु समासगा ।

एवं दशैकादश च लुप्ता स्यादेकविंशतिः ॥

पूर्णा षडेव तेन स्युरुपमाः सप्तविंशतिः ॥ २३० का—

तत्र पूर्णाऽऽदिक्रमेणोदाहरणानि । तद्धितगा श्रौती पूर्णा यथा—

तदाननस्य माधुर्यं लोचनानन्दि चन्द्रवत् ।

अक्ष्णोश्च तव लालित्यं राधे ! नीलसरोजवत् ॥ १ ।

अत्र'तत्र तस्येव'त्येन वतिः श्रौत्यर्थप्रतिपादकः ।

वाक्यगा श्रौती पूर्णा यथा—

श्यामे वक्षसि कृष्णस्य गौरी राजति राधिका ।

कनकस्य यथा रेखा विमले निकषोपले ॥ २ ।

अत्र श्यामगौरत्वं धर्मः, यथाशब्दः उपमावाची, उपमानं कनकरेखाऽऽदि, उपमेयं राधाऽऽदि । अत्र व्यङ्ग्यमपि धर्मान्तरमुपमागतम् (क), तद्यथा कनक-रेखानिकषोपलयोर्मिथ्यन्दत्वेन राधाकृष्णयोरानन्दनिष्यन्दत्वम् ।

समासगा श्रौती पूर्णा यथा—

राधाकृष्णौ मम नवतड़िच्छ्याममेघाविवाक्ष्णोः

स्तातान्तापप्रशमनकृतौ पीतनीलप्रकाशौ ।

यावन्योन्याश्रयवहविभिः काञ्चनैरिन्द्रनीले-

राकृष्टेन प्रकटमहसा निष्कराजेन तुल्यौ ३ ।

'कनकरेखादौ'त्यादिपदेन निकषोपलस्य । "राधे"त्यादिपदेन कृष्णवक्षसः । राधाकृष्णौ परस्पराङ्गरुचिभिः स्वर्णेरिन्द्रनीलमणिभिश्चाकृष्टेन निष्कराजेन पदकश्रेष्ठेन तुल्यौ।

---

कौस्तुभकृता दर्पणानुमोदिताः सप्तविंशतिरेव भेदाः समभिव्याहृताः, मम्मटोक्तास्तु पञ्चविंशतिः । एतच्च भेदपरिकल्पनामुपलक्षणमात्रमिव च केचिदाधुनिका मन्यन्ते—वस्तुत आनन्त्यतो दिक् मात्रं पञ्च इति ध्वनिकिरणव्याख्याने ऽस्माभिरुपपादितम्, परं भेदमङ्गलापन्नमपि न सुगमो भेदमार्गो युक्तिमुक्तिप्रतिरुद्धः, यथाऽप्ययदीक्षितेनवीनस्य कस्यापिदुपमाभेदप्रश्ने—'समानमधिकं न्यूनं त्रिधोपमैकदेशिकम् । यादृच्छिकमभूतस्य धर्मोपम्यार्थसंग्रहः।'

अत्र पूर्वार्द्धे 'इवेन नित्यसमासो विभक्त्यलोपः, पूर्वपदप्रकृतिस्वरत्वञ्च'ति इवेन समासः । आर्थी तद्धितगा पूर्णा यथा—

कोमलं ते वपुस्तन्वि ! राधे ! भाति शिरीषवत् ।
परुषं वर्त्तते कस्मान्मनो दम्भोलिवत्तव ॥ ४ ।

अत्र 'तेन तुल्यं क्रिया चेद्व'त्यनेन वतिः ; तेन तुल्यार्थत्वादार्थी । वाक्यगाऽर्थी पूर्णा यथा, "राधाकृष्णौ मर्मे"त्यादेरुत्तरार्द्धे (३य श्लोके) 'यावन्योन्याव-यवरुचिभिः (1) काञ्चनेन्द्रनीलरत्नैराक्रान्तेन प्रकटमहसा निष्कराजेन तुल्यौ ।' समासगाऽर्थी पूर्णा यथा—

मृदुलमपि शिरीषतुल्यमङ्गं कमलसमं विकसन्मुखन्तवेदम् ।
रमयति च वचः सुधासमानं कथमशनिप्रतिमं मनो दुनोति ॥ ५

इति पूर्णायाः षड़् भेदाः । अथ धर्म्मलोपे वाक्यगा श्रौती लुप्ता यथा—

राधे ! सुन्दरताऽङ्गेषु वाग्भङ्गी वदने तव ।
मनसि प्रेमवैदग्धी सत्यं वच्मि सुधा यथा ॥ ६

समासगा श्रौती लुप्ता यथा—

भ्रुवौ तव धनुर्लते इव, तदग्रतो लोचने
लसन्मदिरदम्पती इव, पुरस्तयोर्नासिका ।
स्मरेषुधिरिव स्फुरत्पुरटनिर्मिताऽधोमुखी,
तदीयशिखरे न्यधात् भमिव कः कृती मौक्तिकम् ॥ ७

हे राधे ! तवाङ्गमिदं मुखञ्च सुधासमानं वचश्च मां रमयति सुखयतीत्यर्थः । सुधा यथा—सुधैव स्वादी, अत्र स्वादुत्वबोधकपदाभावादेव धर्म्मलोपो ज्ञेयः, तथापि धर्म्मवाचक-पदाध्याहारादेव शाब्दबोधो ज्ञेयः । एवमुपमानादिलोपेऽपि बोध्यम् ।

भ्रुवाविति—धनुर्लते इव वक्रे, मदिरदम्पती खञ्जनस्त्रीपुरुषाविव चञ्चले । कन्दर्पस्य स्वर्णनिर्मिताऽधोमुखी इषुधिस्तूण इव नासिका मनोहरा । तस्या नासिकाया अग्रभागे

---

इति ; अतोऽत्रोत्तरेऽपि कश्चिद्वैयाकरणालङ्कारिकपदार्थमञ्जुरमत्र्यं भेदवन्धे मतिदार्च्यमित्यलं पल्लवितेन । यद्गमपीत्यादि—नानालङ्कारस्य यद्गमत्वेन संस्थितिरिति, स चालङ्कार्य एवे-त्याधुनिकानां वाचोयुक्तिर्युक्तिमङ्गता, परं यद्गमत्वेनागतयैव दिशा तातुपर्य्यालोचनायां शोभा-

---

(1) "काञ्चनेन्द्ररत्नै"रिति (ক) पुस्तके पाठ.। 'नीलरत्नै'रित्युत्तरत्र मूले पाठः ।

प्रियालीनां मूर्द्धः प्रथयरचना दन्तलग्नता
पादोपान्ते क्षणस्तदपि तव मानो न विरतः ॥९९

एषाऽनुक्तोक्ताचिन्त्यनिमित्तत्वात्त्रिधा । अनुक्तनिमित्तत्वा तूक्ता । अन्ये दर्श्यन्ते ।

भक्तानुकम्पार्थमजोऽपि जातो लीलाकृते गर्भजगच्च गर्भे ।
जगद्धितायैव जगत्त्रयस्य पिता यशोदातनयो बभूव ॥१००

अत्रातत्वादेः कारणत्वेऽप्युक्तनिमित्तत्वादजत्वादिकार्याभावः ।

क्षणस्य चञ्चलकटाक्षशरेण भिन्नं शूलाकरोषि हृदयन्त्वमनङ्ग ! किन्न ।
भस्मीकृतस्य भवतो वृषभध्वजेन किं भस्मसान्नहि कृतो बत वाहुदर्पः ॥१०१

## यथासंख्यं(२४) यथासंख्यं क्रमिकाणां यदन्वयः(ढ) ॥२७३का—

क्रमिकाणां वाचकानां यथासंख्यं यदन्वयस्तदा यथासंख्यमित्यलङ्कारः ।

यथा—गोपीश्च गोपतनयांश्च सुरद्विषश्च रूपेण च प्रियतया च भुजौजसा च ।
सम्मोहयंश्च रमयंश्च निसूदयंश्च श्रीगोकुलेन्द्रतनयो व्रजमध्यवात्सीत् ॥१०२

यथा विशेषोक्तिः । अनुक्तेति—पूर्वश्लोके कारणसत्त्वेऽपि मानविरामरूपकार्याभावस्तत्र किञ्चिन्निमित्तं नोक्तमित्यतोऽनुक्तनिमित्तत्वोक्ता । लीलाकृते लीलाकरणाय । अजोऽपि जात इत्यत्राजत्वकारणसत्त्वेऽपि जन्माभावरूपकार्यस्याभावः, तथा गर्भे जगद्यस्य तथाभूतोऽपि गर्भे जातः, एवं जगत्त्रयस्य पिता सन्नपि यशोदासुतो बभूव यत्र निमित्तं जगद्धितमिति । शूलाकरोषीति—शूलात् पाके डाच्, शूलायेव विद्धा पचसीति । अत्र देह-

यावत् । प्राकरणिकत्वाप्राकरणिकत्वाभ्यामेवास्य प्राधान्ये: केचित् प्रतीयमानार्थजीवातुतया खोकृतस्य 'भम धम्मिअ' इत्यादिपद्ये संशयितत्वात् ध्वनेर्विशेषो ध्वन्यालोकादौ विचारितः । इत्येवमङ्ग्विधाभानतया लक्षितस्यास्यैव भेदान्तरस्य चमत्कारो नापलपनीय इति बोऽपि यात्रा इत्यलम् । विभावनेति—विभाव्यते परिकल्प्यते कारणान्तरं यत्रेति कृत्वा संज्ञासंज्ञिनोरभेदः । विना कारणमुपनिबध्यमानोऽपि कार्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्त इति कारणान्तरोद्भावनचेष्टा । वस्तुतस्तु कारणनालौकिकत्वविच्छित्तिरेवैतेषामलङ्काराणां प्राणाः। तस्य विविधा भेदास्तद्विचाराश्च कुवलयानन्दे तन्मतध्वंसनपरे रसगङ्गाधरे च द्रष्टव्याः । विभावनाविशेषोक्त्योः सङ्करत्वेनावस्थितिरित्यनेके नवीनालङ्कारिकाः । प्राचां विशेषोक्तिस्त्वितो प्राक् भिन्नैव । पराष्टचेत्यादि—अत्र प्राकृन्तले प्रथमाङ्कशेषे आश्रमराजविरहखेदमनुभवन्त्या नायिकायाश्चेष्टादयो मन्मनेनोक्तोचितया कृता इति कावरसरचिकानामगूढमेव । यथासङ्ख्यमिति—अत्रान्यायमन्यस्यास्य विच्छित्तिमत्त्व एवालङ्कारत्वस्वीकारः । विच्छित्तिस्तु बहुशस्तत्रित्यर यथा लक्ष्येषु प्राचामश्वघोषादीनां प्रबन्धेषु (बुद्धचरिते ५।२४,।।८२) । एवमपि परिवृत्तिपरिसंख्याऽऽदिष्वलेषूह्यम् ।

यस्मिन् विशेषः सामान्यं समर्थ्येत (13) परेण यत् ।
साधर्म्यादथ वैधर्म्यात् स न्यासोऽर्थान्तरस्य(२५)हि(ग)॥२७४का-

स अर्थान्तरन्यासनामाऽलङ्कार इत्यर्थः । परेणेति विशेषः सामान्येन सामान्यं विशेषेणेत्यर्थः । साधर्म्याद्विशेषः सामान्येन यथा—

त्वमेवाद्या सृष्टिस्त्वयि भगवतः केलिशयनं
त्वया सर्वो लोकः परिहरति तृष्णापरिभवम् ।
त्वयाऽपूतः पूतो भवति तदपि त्वं घनरस !
क्रमान्नीचोभावं व्रजसि, महतामेष महिमा ॥१०३

"महतां नैष महिमे"ति वैधर्म्यादपि ।

साधर्म्यात् सामान्यं विशेषेण यथा—

सङ्केतस्ता लभिते । भगामो दु खं हि नान्यत् प्रियविप्रयोगात् ।
ते पामरा हन्त सुहृद्वियोगात् प्रागेव येषां न समासमायुः ॥१०४

"ते तूत्तमा एव सुहृद्वियोगात् प्रागेव येषामपयातमायु"रिति वैधर्म्येऽपि ।

विरोधः(२६) स विरोधाभः (घ)—२७५ का—

विरोधाभ इति वस्तुतो न विरोधः, विरोध इव भासत इत्यर्थः ।
अम्भोभवस्य रकारस्य लत्वेऽपि डलयोरैकदेशत्वादुत्पन्नजलीभावस्वरूपकार्यस्याभावः—अत्र निमित्त मत्रेयम् । हे घनरस ! जल ! आद्या सृष्टिरिति प्रथमतो गर्भोदजलस्य सृष्टत्वात् । केलि शयनमिति भगवतो जलशायित्वेन प्रसिद्धः । नीचैर्भावं नीचत्वभावं प्राप्नोषि, जलस्य नीचगामित्वप्रसिद्धेः । सामान्यधर्मेण विशेषधर्मरूपार्थान्तरस्योपन्यासमाह —महतामिति । सर्वोत्कृष्टत्वेऽपि नीचस्वभावोऽयं निसर्ग इति स्वभावो महिमा उत्कर्ष एवेत्यर्थः । वैधर्म्या दिति—अस्मिन् पक्षे सर्वगुणविशिष्टस्य नीचस्थलगामित्वरूप एष धर्मो महतां महिमा उत्कर्षो नेत्यर्थः । ते पामरा दुःखिनः, अत्र दुःखयोः साधर्म्यं, 'ते तूत्तमा' इत्यत्र सुखदुःखयोर्वैधर्म्यम् ।

(घ) । अर्थान्तरन्यास इति महतीयं संज्ञा । यदत्र 'सामान्यं सामान्येन यत् समर्थने स उभयन्यास' इति काव्यानुशासनकृद्वाग्भटादयः 'यस्मिन्विशेषसामान्य विशेषाः स विकस्वर' इति च चन्द्रालोककृत इत्यधिकालङ्कारान्तरं मन्यन्ते तत्त्वतिरिक्ततरं किमपि, समर्थनस्य विरचितत्वेऽर्थान्तरन्यासेनैव गतार्थत्वात् । तदनुसारिभि र्विश्वनाथविद्यानाथादिभिस्तु कार्य्येन कारणस्य कारणात् कार्य्यस्य च समर्थनेऽप्यर्थान्तर

(13) "समर्थ्यते" इति (क) (ज) पुस्तकयोर्विद्यमानः पाठः ।

—जातिर्जात्यादिभिर्गुणैः ।
त्रिभिर्द्वाभ्यां क्रिया, द्रव्यं द्रव्येणैवेति ते दश ॥२०५का—

जात्यादिभिश्चतुर्भिर्जातिर्विरुध्यते, गुणो गुणक्रियाद्रव्यैः, क्रिया क्रियाद्रव्याभ्यां, द्रव्यं द्रव्येणेति दश । क्रमेणोदाहरणानि—

हिमकरकिरणासारो घनसारो गन्धसारोऽपि ।
त्वयि मनसोऽन्तर्वर्तिनि सम्प्रति दावानलस्तावान् ॥१०५—इति जातिर्जात्या ।

गुणरत्नरोहणभुवः कृष्ण ! तवाग्रे स्मरोऽपि बीभत्सः ।
रत्नाकरोऽपि गाधो न रत्नसानुस्तथोन्नतिमान् ॥१०६—अत्र जातिर्गुणेन ।

यदङ्गमासाद्य विधूसराय गोधूलयो भूषणतामुपेयुः ।
विभूषणानां मणयश्च जग्मुर्विधूसरत्वं स उपैति कृष्णः ॥१०७

अत्र जातिः क्रियया ।

हे कृष्ण! त्वयि मनसोऽन्तर्वर्तिनि स्मरणावस्थतां प्राप्ते सति चन्द्रकिरणादिस्तावान् सर्वोऽपि शीतलः पदार्थः सम्प्रति दावानलो भवति—हिमकरकिरणजातिदावानलजात्योर्विरोधः । स चाभासरूप एव, न तु वस्तुतो विरोधः । श्रीकृष्णविरहे तेषामुद्दीपकत्वेन दावानलवत्तासां प्रतीतिर्भवति, न तु वस्तुतो दावानलो भवतीति । रोहणभुवः उत्पत्तिस्थानस्य । कन्दर्पत्वजातिर्बीभत्सत्वगुणेन विरुध्यते, नहि कन्दर्पः कदापि बीभत्सो भवतीति विरोधः । गाम्भीर्यगुणेन समुद्रोऽपि त्वदग्रे गाधः स्वल्प एव, न त्वगाधः, समुद्रजातिरल्पत्वगुणेन विरुध्यते, नहि समुद्रः कदाचिद्गाधो भवतीति विरोधः । एवमन्येऽपि । रत्नसानुः सुमेरुपर्वतो नोन्नतिमान् नोच्चतरः, अपि तु क्षुद्र एव । यदङ्गेति—भूषणतां भूषणधर्मं चाकचिक्यम् । अत्र धूलित्वजातिर्भूषणस्य रत्ननिष्ठस्य उत्पद्यमानचाकचिक्यक्रियया विरुध्यते, न हि धूलयः कदापि रत्ननिष्ठमेवमनुकारिचाकचिक्यक्रियाऽऽश्रया भवन्ति । यथा दीपानां प्रतिघातं ज्वलनक्रिया उत्पद्यन्ते

---

न्यासत्वमुररीकृतम् । रत्नाकरधरकारास्तमिमं भेदं काव्यलिङ्गेऽन्तर्भावयन्ति—तदाक्षेपिका युक्तयस्तत्समाधानपद्धतिश्च दर्पणादेवावलोकनीयाः। विरोध इति—अस्य साधारण्यप्रयत्नेऽप्यसाधारण्यं प्रतीच्यसाहित्याङ्गणव्यतिरोहितं, तदाधायकेषु ग्रन्थेष्वपि केषु समीक्ष्य विनिवेशनम् । यदाहुः—

*Antithesis, perhaps the most direct form of contrast, has an appeal more purely intellectual than most figures of speech ... Antithesis depends for its effect not only upon contrast, but upon balance—the scales must be evenly weighted.*

गत्वा कलावान् गुरुगोष्ठ्यलङ्घितः कृष्णोऽपि विप्रोऽजनि भास्कराध्वरे ।
यन्मन्त्रपाठो मधुरोऽप्यभूत् कटुस्तस्याः समुद्यत्स्मरसंज्वरस्य ॥ १०८

अत्र पूर्वार्द्धे जातिर्द्रव्येण, उत्तरार्द्धे गुणो गुणेन ।

शीतलमपि मुरलीरुतमन्तर्मम सन्ततं दहति ।
तीक्ष्णोऽपि तव कटाक्षः शीतलयति मानसं कृष्ण ॥१०९—गुणः क्रियया ।

कठिनः शिलामयत्वाद्गोवर्द्धन एष भूभृतां नाथः ।
कृष्णकरे कुसुममयः कन्दुक इव कोमलो भाति ॥११०—अत्र गुणो द्रव्येण ।

जीवयति च मूर्च्छयति च पीवयति च सूक्ष्मयत्यपि च ।
तव मुरलीरवलहरी नो जाने किं विजानाति ॥१११—क्रिया क्रियया ।

विभ्राजते यत्कटाक्षोऽप्यनङ्गमपि साङ्गयन् ।
ईक्षणक्षणदः कृष्णो वीक्षितः क्षणदामुखे ॥११२—क्रिया द्रव्येण ।

त्वयि नवमन्मथवर्त्तिनि खरमयति रतिं य एव रमणीनाम् ।
सति मनसोऽन्तर्वर्त्तिनि कृष्ण । स एव स्मरः कुलिशः ॥११३

द्रव्यं द्रव्येण । एवं दश भेदाः ।

तपोवृद्धपराशरादयस्तेऽमित्रवर्धिनामेव, न तु धूलीनामिति मिदम् । भास्कराध्वरे सूर्यपूजाध्वरे गुरुगोष्ठीभिः [illegible] अलङ्घितः [illegible] विप्रोऽजनि—अपि [illegible] कदापि भास्करो भवतीति विरोधः । एवं मधुरत्वगुणस्य कटुतागुणेन सह विरोधः । शीतलयति—शीतलत्वगुणो दाहक्रियया विरुद्धो भवति । कठिन इति—काठिन्यगुणस्य कोमलत्वेन सह विरोधः । जीवयतीति—मुरलीरवस्य [illegible] पुनः पुनर्नितिर्णिति यावत् । एकस्मिन् काले जीवनक्रियामूर्च्छनक्रिययोः परस्परं विरोधः—[illegible] इति भेदो ज्ञेयः । एवं [illegible]

[illegible] यथा '[illegible]' (१।१०)। [illegible] यथा '[illegible]' [illegible] (१।१०) '[illegible]' (१।१४) '[illegible]' [illegible]

## स्वभावोक्तिः(२७) स्वभावस्य वर्णनं यत् (त)—२७६ का—

यथा—'धाराज्ञानुकरोपसर्पणपर' इत्यादि (५म किरणे १०म श्लोकः)।

यथा वा—जृम्भस्व तात ! मुखमाकलयामि दन्ताः
कत्युद्गता भवत इत्युदिते जनन्या ।
स्मित्वा विकाशितमुखस्य हरेर्जयन्ति
द्रोणप्रसूनकलिका इव केऽपि दन्ताः (त) ॥११४

यथा वा—स्वभावसुन्दरः कृष्णो राधा सहजसुन्दरी ।
अन्योन्यमनयोः प्रीतिरखिलोत्सवकारिणी (त) ॥११५

—मुखे स्तुतिः ।

## निन्दा वा हृदये व्याजस्तुतिः(२८) स्यात्तदन्यथा(त) ॥२७७का

स्तुतेर्निन्दा निन्दायाः स्तुतिरित्यर्थः । क्रमेणोदाहरणे—

न निःस्पृहस्त्वत्सदृशो विरक्तः स्वकीयकीर्त्तावपि नानुरक्तः ।
दिङ्मात्रनिष्पाद्यपरोपकारे न कृष्ण ! कोर्त्तिं गुरुकरोषि ॥११६

अत्र मुखे स्तुतिरन्तर्निन्दा ।

विरोधः। विभाव्यत इति—अनङ्गमङ्गरहितं वस्तु साङ्गमङ्गवत्क्रियायुक्तं करोतीति विरोध.। वस्तुतस्तु अनङ्गं कन्दर्पं साङ्गं सम्भोगस्य यावन्त्यङ्गानि तद्विशिष्टं करोतीत्यर्थः। चक्रवाकसुखे सन्ध्यायां वीचितो नेत्राणां चयनद उत्सवदो भवति। स्वयीति—सन्ध्याकाले भवनागमनसमये यः कन्दर्पो व्रजसुन्दरीणां रतिं रमणं च सुयसम्भोगमिति यावत्। स एव सारस्त्वयि नेत्रद्वारा व्रजसुन्दरीणां मनोऽन्तर्वर्त्तिनि सति तत्स्पर्शौत्सुक्यवशाऽग्निरभूत्। नहि रसस्वादहेतुः कन्दर्पः कदापि वध्यो भवतीति विरोधः।

स्वदङ्घ्रीति—चिरन्तनस्यानादिकाल एव प्राप्तस्य स्थूलसूक्ष्मदेहद्वयस्य देहद्वयनाश एव मोक्षः। तथापि तद्भजनस्य कोऽप्यचिन्त्यः प्रभावो यदयं भजनारम्भकाल एव भक्तस्य संसारं

---

(त) स्वभावोक्तिरिति—आचार्यदण्डिनैवास्य साम्राज्यमाविष्कृतचरमिति प्रागेवास्माभिरुद्दिष्टम्। अत 'इह वस्तुस्वभाववर्णनमात्रं नालङ्कार' इत्यादि शुक्तिसरणिः सर्वैरन्यतो ग्राह्या। एवं सति 'स्वभावसुन्दर' इत्यादिमूलस्थपद्ये एतदलङ्कारस्थापने विचिकित्सा नासङ्गता। 'दन्ता' इति प्राचीनपद्ये पुनर्वचनं न सुष्ठु। व्याजस्तुतिरिति—स्तुतेःस्तुत्यन्तरे निन्दाया निन्दान्तरे च गम्ये इयमेवालङ्कृतिरिति कुवलयानन्दकारादीनामाकूतम्। तत्रादौ 'दृश्य' नीरजिनी हरिणा' इत्यादि दक्षिणपद्येऽप्रस्तुतप्रशंसेवेति बहवो नवीनाः, द्वितीयस्थले व्याजनिन्दाख्योऽतिरिक्तोऽलङ्कारः कैश्चिदर्वाचीनैः स्वीकृतः। परमविशेषकमेदमेतन्नावलङ्कार-

त्वदङ्घ्रिमूलं भजतां मुकुन्द ! लाभोऽस्तु दूरे वपुषो निजस्य ।
चिरन्तनस्यापि भवेद्विनाशः स्वभाव एवैष तव प्रसिद्धः ॥ ११७

अत्र मुखे निन्दाऽन्ते स्तुतिः । उभयथैव व्याजस्तुतिः ।

यथा— वक्त्रं वा द्विजराजहिंसि मदिरालोलं दृशोर्युग्मकं
कान्तिः काञ्चनहारिणी विहरणं गुर्वङ्गनासङ्गतम् ।
सङ्गी पञ्चम एव पञ्चविशिखः शुद्धिस्तथाऽपीह वो
देव्य' यत्नवधीदृशाकृतिमयं तेनैव तुष्टो हरिः ॥ ११८

इति यद्यपि व्याजस्तुतिः, तथाऽपि शब्दालङ्कार एवासौ, तेनायमुभयथैव ।
इयं विदूषकस्यैवोक्तिः ।

सहोक्तिः (२९)सा सहार्थेन शब्देनैका क्रिया यदि(त)॥२७८का-

यथा—श्वासैः सार्द्धं विरहिहृदयां दैर्घ्यमापू रजन्यः
सार्कं देहैरहह ! लघुतां वासराः सम्प्रतीयुः ।

भाषयति । कदाचिदरिष्टासुरवधानन्तरं श्रीराधिकाभ्यागतं श्रीकृष्णमालोक्य श्रीराधिका ललिताप्रभृतिसखीः सक्रोध्याह, भोः सख्य, मम त्वदा श्रीकृष्णोऽवारिष्टवधः कृतः, तस्मादस्य स्पर्शो भवतीभिर्न कर्त्तव्य इति श्रुत्वा राधां प्रति विदूषकः कृष्णस्य सखा मधुमङ्गल आह—वक्त्रमिति—भोः राधिके ! यूयं महापातकिन्यः श्रीकृष्णेन तु जन्ममध्ये एकं पापं कृतम्, तदपि पापाभासमेव, यतोऽयमसुरो मायया वृषाकृतिर्भवतीति । अत्र तासां पञ्च महापातकानीति हृदये प्रशंसात्वेऽपि निन्दामुखेनाह—वक्त्रं द्विजराजो ब्राह्मणश्चन्द्रस्तस्य हिंसकमिति ब्रह्महत्या, प्रशंसापक्षे द्विजराजश्चन्द्रस्तस्य निन्दाप्रयोजकत्वेन हिंसकम् । दृशोर्युग्मकं मदिरया लोलमिति सुरापानं, पक्षे मदिरा खञ्जनस्तद्वच्चञ्चलम् । काञ्चनहारिणीति स्वर्णस्तेय, पक्षे सुवर्णमिव मनोहारिणी । गुर्वङ्गनासङ्गतमिति गुरुदारागमः, पक्षे गुरुभ्यामङ्गन एव आसङ्गतं कुलवतीत्वाद्बहिर्गमनाभावात् । अतो वृषो वा दैत्यो भवेत् तत्त्वं न जानीथेति ध्वनिः । पञ्चविशिखः कश्चिन्महापातकसङ्ग्यार्थ सङ्गी एव पञ्चममहापातकरूपः, पक्षे कन्दर्पः । उभयथेति—व्याजस्तुतौ शब्दालङ्कारे चेति प्रयोगो ज्ञेय इत्यर्थः ।

---

भेदघटकत्वे बीजत्वेन ग्राह्यम् । पञ्च महापातकानीति—तथाच मनुः 'ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुस्तत्संसर्गश्चापि पञ्चमम् । शब्दालङ्कार एवासौ, अनुप्रासप्रधानत्वेनैव विच्छित्तिविशेषघटनादित्याशयः । सहोक्तिः—अत्र सहार्थकतां मतौ अन्यघटकत्वेव विनिगमकं, न तदिति तु साम्प्रदायिकाः । विशेष्य विनैवहि—" न विना

बाष्पाम्भोभिः सह हिमपयःप्रस्रवाः (14) पीतुरुये-
र्दा धिक् प्राणैः सह कमलिनीकाननं म्लानमासीत् ॥ ११९

**विनोक्तिः(३०)सा विनैकेनान्यस्य चेत् सदसत्कृतिः(त)॥२७९का-**

विनोक्तिनामाऽलङ्कारः। सत्कृतिः शोभनता, असत्कृतिस्तदन्येति द्विधा। क्रमेणोदाहरणे—

विरहेण विनैव शोभते ललिते! प्रेम निसर्गशोभनम्।
असुभिश्च विनैव शोभते विरहश्चेद्यत सम्भवद्दशः॥ १२०

विना राधां कृष्णो न खलु सुखदः, सा न सुखदा
विना कृष्णं, द्वाभ्यामपि वत विनाऽन्या न सरसाः।
विना रात्रिं नेन्दुस्तमपि न विना साऽपि रुचिभा-
ग्विना ताभ्यां जृम्भां दधति कुमुदिन्योऽपि नतराम्॥ १२१

**समासमाभ्यां निमयः(३१) परिवृत्तिरुदीर्य्यते(त) ॥२८०का—**

अर्थयोरर्थानां वा समेनासमेन वा विनिमयः परिवृत्तिः। समेन यथा—
हारादिभिः संत्रुटितैर्निजाङ्गाद्विभूषयामास पतङ्गपुत्रीम्।
तस्याः सरोजादिभिराक्षनोऽङ्ग राधाऽलिवर्गो जलकेलिकाले॥ १२२
यथा वा—एका ददुर्नूपुरनादशोभामन्याः प्रयाणक्रममन्थरत्वम्।
आभीरबालाकलहंसबालाममूढयोः किञ्चन सख्यमासीत्॥ १२३

श्वासैरिति—विरहविप्रलब्धवसुन्दरीणां रजन्यः श्वासैः सार्द्धं दैर्घ्यमापुः, विरहेण ताश्च रात्रयः श्वासा अपि दीर्घा बभूवुः, सहार्थकसार्द्धशब्देनैका क्रियेति सहोक्त्यलङ्कारः। वासरा इति—कान्तविच्छेदजन्या यादृशी पीड़ा रात्रौ तादृशी दिवसे न भवति, अतस्तासां दिवसाः शीघ्रं यान्ति, तस्मादेव दिवसानामल्पत्वम्। हिमपयःप्रस्रवा रात्रिपश्चन्धिनीहार-प्रवाहाः। कमलिनीनां म्लानत्वं हिमघटाभिरेव ज्ञेयम्।

निसर्गशोभनम्, अतो विरहाद्यपेक्षा नास्ति। कान्तेन सह विरहश्चेत्तदा प्राणैर्विनैव प्रेम शोभते। विरहेऽपि प्राणास्तिष्ठन्ति चेत्तदा प्रेमैव नास्ति, कुतस्तस्य शोभनताविरहः? कथम्भूतः? सम्भवन्ती मरणपर्य्यन्ता दशा यत्र तथाभूतः। जृम्भां प्रफुल्लत्वं न दधति। इयं दृष्टान्तमिश्रिता सहोक्तिः।

---

विप्रलम्भेन सम्भोगः पुष्टिमश्नुत' इति यदभिहितं सूचनं न तदत्रोपकल्प्यते। विरहतापस्य तीव्रतापरमेतत्। अत्र प्रसङ्गेऽन्योक्तिरिति काव्यभेदप्रमाणिकाऽधिका काचिदनङ्कनिरन्यैः

(14) "प्रस्रवा" इति (ख) पुस्तके पाठः।

असमेन यथा—मनोरागं दत्त्वा चरणदलरागो मृगदृश-
स्त्वयाऽदत्तो वचःस्खलमलति यः कौसुम इव ।
रसं दत्त्वा नीता त्वदधरपुटेनेक्षणमसौ
समन्त्वद्दैदग्ध्यन्तदवयववैदग्ध्यमपि च ॥ १२४

**अतीतानागतार्थानां साक्षात्त्वमिव(३२)भाविकम्(थ)॥२८१का—**

भाविकनामाऽलङ्कारः । क्रमेणोदाहरणे—

प्रातः सखीनां पुरतः शुकीभिः कथा तथा वल्लभयोरुदारा ।
यथाथि, तौ सा च निशा तयोः सा केलिश्च साक्षादभवन् यथाऽसाम् ॥ १२५
इदानीमेव राधाया भूयंया गुणवलभृत् ।
तथा मन्ये स्मरस्तेयं स्वं चापं त्याजयिष्यति ॥ १२६

**पदवाक्यार्थता हेतोः(३३) काव्यलिङ्गं प्रकीर्त्तितम्(थ)॥ २८२का—**

पदार्थता वाक्यार्थता च । पदार्थता च द्विधा—एकपदार्थताऽनेकपदार्थता चेति । क्रमेणोदाहरणानि—

संसारालर्कदंष्ट्रातः पापाशीविषदंशतः ।
तृष्णाग्नेश्च महामल्ले सति मा भैष्ट माधवः ॥ १२७
अपारकरुणाम्बुधौ स्मरणमात्रसानुग्रहे
विधिप्रभृतिपामरावधिसमानसम्भावने ।
तवाहमिति जल्पतामखिलकामकल्पद्रुमे
हरौ निहितमानसास्त्यजत देहबन्धं जनाः ॥ १२८

हे हस्य! त्वया स्वीयमनोऽनुरागं राधायै दत्त्वा तस्याऽङ्घ्रिचरणयुगलस्याङ्गुलिदलानां यावकराग आदत्तो जगृहे। अलति भूषयति। एवं त्वदधरपुटेन स्वीयताम्बूलरसं तस्यै ईक्षणाय दत्त्वा ईक्षणस्य कज्जलरूपमसौ स्वयं जगृहे, अतस्तद्वैदग्ध्यं तवाधररूपावयव-वैदग्ध्ययानयोः साम्यमेव ज्ञेयम्।

अनागतार्थानां साक्षात्त्वमाह—इदानीं यौवनारम्भ एव। संसारेति—भयाभावे अच्युतनाम्नोऽनेकस्य पदस्य हेतुता। अपारेति—समानसम्भावने तुल्यदृष्टावित्यर्थः। देहबन्धत्यागे

सौकिकपरं तद्विशेषः आकर एव स्पष्टः। एका इत्युदित्यादि—अत्र 'घनीयत प्रभुपदे भयं' इत्यादि कुमारसम्भवपद्यस्योपजीव्यत्वेन यद्योतमिति प्रतिभाति।

(थ) भाविकमिति—अत्र प्राचीनैरुद्भावितस्य भाविकाख्यप्रबन्धगुणस्य नाऽत्र प्रवेशः शङ्कनीयः—उभयोर्भिन्नत्वात्। भामह भट्टि भट्टोद्भटप्रभृतयस्तत्र प्रमाणम्।

वाक्यार्थता यथा—वपुःस्थित्या ज्ञातं कपटरहितं प्रेम नहि मे
सति प्रेम्णि प्रायो न भवति वियोगः प्रणयिनोः ।
अतः प्रेम्णोऽकीर्त्तिप्रकटननिमित्ता मम जनिः
कथं नु श्रोतव्य दयित इति भूयो हरिवचः ॥ १२९

**विना वाचकवाच्यत्वं यत्र वस्तु प्रतीयते ।**
**पर्य्यायोक्तं (१४) तत् (थ)—२८३ का—**

जज्ञे श्रीकृष्णमालोक्य स्थितिं स्वाभाविकीमपि ।
दर्पः कन्दर्पहृदये मानो मानवतीहृदि ॥ १३०

अत्र कन्दर्पो निर्दर्पो, मानवत्योऽपि मानरहिता इति यद्यपि वस्तु शब्देनैव प्रतीयते, तथापि न वाचकमुखेन, न च वाच्यमुखेन । वाचकमुखेन 'अपारे'त्यादीनां चतुर्णां पद्यानां हेतुता । माथुरविरहपीड़या व्याकुला श्रीराधिकाह—वपुरिति । हे दयिते ! इति पदघटितं सन्देशश्रवणं मया कथं श्रोतव्यं यतो मयि तस्य दयितात्वमेव नास्ति, तद्विच्छेदेऽपि प्राणानां विद्यमानत्वादिति भावः । अत्र जनेः प्रेमाकीर्त्तिप्रकटननिमित्तत्वे 'वपुःस्थित्ये'त्यादि प्रथमार्द्धस्य हेतुता ।

शब्दस्य शक्तिरूपवाचकत्वं विना तथा शब्दजन्यार्थस्य वाच्यत्वरूपसामर्थ्यं विना यत्र किमपि वस्तु प्रतीयते तत्र पर्य्यायोक्तनामाऽलङ्कारो ज्ञेयः । रासोत्सवसम्बन्धिनीं श्रीकृष्णस्य शोभां पौर्णमासीं प्रति वृन्दा वर्णयति । सर्वापेक्षया कन्दर्पोऽतिसुन्दर इति सर्वजनप्रसिद्धा स्वाभाविकी स्थितिः, तथा सुन्दरीश्रेष्ठा मानवती भवतीति च या स्थितिस्तामपि जज्ञे । अत्र कन्दर्पो निर्दर्पः मानवती च मानरहितेति बोधस्तु शक्तिं विनैव जायते, न हि एतादृशार्थे पदस्यास्य कस्यापि शब्दस्य शक्तिरस्ति, शक्तेरभावे वाच्यस्य सामर्थ्यं सुतरामेव नास्तीति । यदि शक्तिं विना वाचकशब्दमुखेन तादृशार्थबोधः स्वीक्रियते तदैतद्भिन्नानन्तवस्तुप्रतीतिरपि स्वीक्रियताम् (थ) । ननु शक्तिलक्षणयोरभावेऽपि मुख्यार्थस्य बाधादेव लक्षणयैतादृशार्थबोधो भविष्यति—तथाहि दर्पस्याचेतनत्वेन स्वाभाविकस्थितित्यागे कर्त्तृत्वासम्भवान्मुख्यार्थस्य बाधः, तत एव लक्षणायाः प्रवृत्तिः सम्भवतीति चेदाह—

---

दाशा तु भाविकस्य शब्दगुणतोऽर्थगुणतोऽलङ्काररूपतां च पृथक् पृथगेव व्यवस्थापिना । तस्य हि भावो भावना पुनः पुनश्चेतसि विनिवेशः—सोऽस्यास्तीति भाविकमिति व्याकृतिः समुद्रबन्धेन सर्वेश्वटीकायां या दर्शिता सैव चमत्कृतिहेतुं साधु सूचयति । प्रातः सखीनामिति—श्रीमद्वृन्दावनस्थं पद्यं (३।३७) स्मरणीयम् । काव्यलिङ्गमिति—नैयायिकबाधितलिङ्गात् पार्थक्यं, सिद्धान्ते तत्र नूनं वैचित्र्यमेव जीवातु । उद्भटोपज्ञमेतदिति सम्भाव्यते ।

चेदभविष्यत्तदा तस्यान्यार्थोऽभविष्यत्। अत्र वाचका एव शब्दा न तूक्तार्थव्यञ्जकाः। एवं वाच्यमुखेन चेदभविष्यत्तदाऽस्योऽप्यर्थोऽभविष्यत्। अयन्तु वाच्य एवार्थः, न तु व्यङ्ग्य', तर्हि सबाधमित्यपि न वक्तव्यम्। तथाहि गवि शुक्ले चलति दृष्टे, गौः शुक्लश्चल इति त्रितयविकल्पो यदेव दृष्टं तदेव विकल्पयति, तच्चाभिन्नसंसृष्टत्वेन दर्शने भेदसंसर्गाभ्यां विकल्पयति।

—समृद्धिरुदात्तं(२५) वस्तुनः परा (ध) ॥ २८४ का-

यथा— सान्ति कामगवीषु नैव नतरां (15) कल्पद्रुमेष्वादरो
लोष्टाणीव लुठन्ति हन्त परितश्चिन्तामणीनां गणाः।

गवीति। शुक्लगुणविशिष्टे चलनक्रियायुक्ते गवि दृष्टे 'गौः शुक्लश्चल' इति प्रयोगात् गोत्वजातिशुक्लगुणचलनक्रियाणां विकल्पो बोध्यो भवति, अत्र यदेव पिण्डमात्रपूर्वं दृष्टं तदेव विकल्पयति शाब्दबोधे विषयीकरोतीत्यर्थः। अत्र 'गो'पदस्य गोत्वजातिरूपेण शक्तिः, नतु सास्नालाङ्गूलककुदादिरूपेण पिण्डे शक्तिः, अत एव लक्षणादीनां सुतरां नावकाशः। एवं सति शक्तिलक्षणाव्यञ्जना विना शब्दसामर्थ्यात् साक्षाद्गोरूपवस्तु प्रतीयते। तथाऽत्रापि 'कन्दर्पो निर्दर्प' इति वस्तु शब्दसामर्थ्यादेव प्रतीयते। यन्मते 'गो' शब्दात् सास्नाऽऽदिरूपेण पिण्डबोधो भवति तन्मतमालम्ब्योक्तम्। यथा जातिशक्तिवादिमते व्यक्तौ शक्तिं विनाऽप्याक्षेपबलात् शब्दबोधे व्यक्तिभानं भवति, तथैवात्रापि शक्त्यादिकं विनाऽपि शब्दसामर्थ्यादेव शाब्दार्थभानं भवतीति ध्येयम्। अयं भावः—सामान्यतः पिण्डमात्रत्वेन प्रथमं दर्शने तदनन्तरं च 'गौ'रिति जात्यन्तरात् 'शुक्ल' इति गुणान्तरात् 'चल' इति क्रियान्तराद्भेदेन तत्त्रितयसंसर्गेण च तस्य विकल्पः स्यात्, ततश्च किमपि वस्तुमात्रमिदमित्यनेन यदेवाध्यवसितं तदेव गौः शुक्लश्चलोऽयमित्यनेनाप्यभिधीयते, नतु जाति-गुणक्रियाः। तत्र जात्यादीनां भेदसंसर्गयोरेव प्रतीतिमात्रमित्येतन्मात्रमधिकम्। एवमपि कन्दर्पमात्रवर्ती दर्पमात्रविरहितमभूतमिति योऽयमर्थः स एव 'दर्पः कन्दर्पस्येव' इत्यादिनाऽप्यभिधीयते, किन्तु तत्र वैचित्र्यमात्रमधिकं, तदेवाश्रित्यालङ्कार' प्रवर्तत इति। यथा चक्षुरादिनियतोऽत्यल्पकार्यक्षतिविनिमयस्य विधिसमनियमराहित्येन कारणानुपपत्तेः प्रागेव कार्योत्पत्तिरिति तथाऽत्रापि धर्मायोगालङ्कारान्यथे शब्दादिकं विनैव वस्तुप्रतीतिर्भवतीति सर्वमनवद्यम्।

काव्यचतुरिति केषाञ्चित् प्राचां मतम्। 'एकानेकपदार्थैन'ति भेदचीजं प्रकाशकृदादृतमस्य। हेतुस्तत्र 'हि'पद पर्यायविभक्त्यादिना वाच्यत्वेऽस्फुटत्वेन चमत्काराभावादलङ्कारः। किन्त्वाचार्याः काव्यहेतोरनुपातादपि हेतुना वाक्यवैशिष्ट्यादिना वाच्यत्

(15) 'नतरां'मिति (ख) (ग) पुस्तकपाठः पत्र।

अम्बूका इव वापिकापरिसरे मुक्ताकिरः शुक्तयो
वीक्ष्यन्ते न जनैस्त्वमेव नगरि ! श्रीदारके ! निःस्पृहा ॥१२१

प्रधानमपि यत्राङ्गम्—२८५का—

यत्र प्रधानमप्युपलक्षणं तच्चोदात्तम् ।

यथा— सेयं मथुरानगरी सुरगुरुभिर्याचितो भगवान् ।
यत्रावतीर्य्य शतशः सुरद्विषो हेलया न्यवधीत् ॥ १२२

अत्र समस्तदैत्यहननरूपो वीररसो गुणीभूतः (थ) ।

—एकस्मिन् यत्र साधके ।

साधकान्तरनिर्देशः स समुच्चय(३६) इष्यते (द) ॥ २८६का—

प्रकृतकार्य्यस्यैकस्मिन्नेव साधके सिद्धे सिद्धस्योपयोगार्थं साधकान्तरनिर्देशः समुच्चयः । यथा—दुरापोऽयं कृष्णः सहजतरलं मानसमिदं
सुदुर्वारः कामो, गुरुतरकरालो गुरुजनः ।

मान इति—तन्नगरस्थजनानां निःस्पृहत्वेन तव निःस्पृहत्वम् । तव परिसरे ढिमा (ढिल्) इति प्रसिद्धानि लोष्ट्रानीव चिन्तामणीनां गणा लुटन्ति, अतएव कामधेनुषु जनानां नैवादरः । वापिकातडागादिपरिसरे 'घासुक' इति प्रसिद्धाः शम्बूका इव शुक्तयो जनैर्न वीक्ष्यन्ते । कथम्भूताः ? मुक्ताकिरः याभ्यो मुक्ता उत्पद्यन्ते । सुरगुरुभिर्ब्रह्मादिभि-र्याचितः सन् यत्र मधुपुर्य्याम् । मथुराया उत्कर्षार्थं प्रधानीभूतस्यापि श्रीकृष्णनिष्ठवीर-रसस्य गुणीभूतत्वं ज्ञेयम् ।

---

यत्र प्रतीयते तत्रैवायमिति सम्प्रदायविदः । पर्य्यायोक्तमिति—पर्य्यायोक्तिरिति वा कुत्रापि संज्ञा । निर्वचनमुखेनास्य निष्कर्षोऽभिनवगुप्तपादैर्लोचने प्रकटितः । पर्य्यायोक्तस्य वाच्यार्थो-ऽङ्गतया विषय इति प्राचीनमताभावमुपपादयन्तो वक्रोक्तिजीवितकृतः स्वतन्त्राः । प्राचां व्यञ्जनाधिकारे उपकरणीकृतोऽयमिति. केचिदग्निपुराणाद्यनुसारिणः—'दृश्यसौ परभृत' इत्यादि दग्धिपद्यन्तत्र साधकप्रख्यम् । एवमेव 'ध्वनिताभिधाने पर्य्यायोक्ति'रिति लक्षणेन 'भम धम्मिअ' इत्यादि 'निःशेषच्युतचन्दने'त्याद्युदाहरणमुखेन च सूचनं काव्यानुशासनकर्ता वाग्भटसूरीणाम् । अत्र भङ्ग्यन्तरेणातात्पर्य्येण वा गम्यस्याभिधानमिति सर्वस्वग्रन्था-नुसारिणो विद्याधरविश्वनाथादयः । यदीति—इह मते टीकायाश्च व्यञ्जनाप्रक्रमसद्भावे हेतुत्वं स्फुटं कयाचित् प्रौढ्याऽविष्कृतमित्यस्मा प्रतिभाति । उदात्तमिति—अत्राभिमानस्यापि-भावाङ्गोऽनिर्दिष्टाद्युदात्तरसात् परार्द्धत्वादेकस्योद्दीपनविभावत्वेन वस्तुनोऽन्यत्वेति कुन्तकीचिकयां भेदापातः । दण्ड्यादिस्वीकृतस्योदाराख्यगुणस्योर्जितता चात्र वरीवर्त्ति । गुणीभूत इति—अतएवालङ्कारत्वेन निर्देशो नालङ्कार्य्यत्वेन ।

नवीनैषोत्कण्ठा, नवमपि वयो, नातिचतुरः
सखीलोको, हा धिग् भवतु कथमाधेरुपशमः ॥ १२३

अत्राधेरुपशमाभावस्य कृष्णदूरापत्वमेव मुख्यं साधकं, तत्रान्येषां साधकानामुपादानेनायं समुच्चयः। एष च सदसदुभययोगात्त्रिधा, सत् शोभनम्, असदशोभनम्, उभयं शोभनाशोभनम्। सद्योगे यथा—

रूपं कुलं यत्नभदुर्लभत्वं शीलं कला कान्तिरुदारता च।
एकेन येषामपराः सगर्वा राधे! समस्तैरपि ते न गर्वः ॥१२४

असद्योगे यथा—

संसारमार्गो श्रमः स्वभावात् कर्माणि तस्मिन् कटुकण्टकानि।
गतागताभ्यामिह खेद एव तथापि नास्मिन् कुजनो विरज्येत् ॥१२५

सदसद्योगे—प्रियः प्रणयकोविदः, प्रणयिनी सदैवोत्सुका,
खलः च्युतपराक्रमो, गुरुजनः खलोक्तासहः।
गृहं गृहपतिच्युतं, मनसिजस्य वश्येयवः
कलावति! बहियरा इव समस्तरसी पश्च मः ॥ १२६

अत्र प्रियादयः सन्तः खलोऽसन्।

गुणो गुणक्रियाभ्याञ्च क्रियया च क्रियाऽपरः ॥२८७का—

अपरः समुच्चय इत्यर्थः। गुणेन गुणो यथा—

व्रजपतिनन्दनहृदयं राधायामेधिताभिलाषञ्च ।

साऽपि च भृशमनुरक्ता तस्मिन्निति सहजभावसार्वज्ञम् ॥१३७

अत्र साभिलाषत्वानुरक्तत्वे गुणौ । चकारेणान्यालङ्कारः (८), शुद्धोऽयं तथा न चमत्करोति, अतः संकरतयोदाहृतम् । गुणः क्रियया यथा—

अरुणञ्च नीलनलिनप्रभमपि नयनं प्रिये ! मयि ते ।

आसवञ्च ममायं हृदि कम्पश्चम्पकगौरि ! ॥ १३८

क्रियया क्रिया यथा—

हरिरभियास्यति मथुरामिति वार्त्ता नः श्रुतौ च विनिहन्ति ।

मम तु सखी भवति न वेत्यपि शङ्का मे मनश्च मूर्च्छयति ॥१३९

## अनेकस्मिन् क्रमेणैकः (३०) पर्य्यायः (८)—२८८ का—

एकं वस्तु क्रमेणानेकस्मिन् यदि भवति आरोप्यते वा तदा पर्यायः । तत् भवतीति पक्षे यथा—

एकस्त्वं निखिलवधूहृदि प्रविष्टः संक्षोभं जनयसि गोकुलेन्द्रसूनो !

त्वामेकं नहि सकलाः प्रवेष्टुमर्हाः किं क्षोभं बत जनयन्तु चेतसस्ते ॥ २४०

अन्येषां गोपकारत्वं ज्ञेयम् । व्रजपतीति—चकाराभ्यामभिलाषानुरागयोः साहित्यस्यापि बोधो भवति । ननु राधिका कथं स्वविषयकं श्रीकृष्णस्याभिलाषं जानाति श्रीकृष्णो वा कथं स्वविषयकं राधाया अनुरागं जानाति, तत्राह—सहजेति । राधामाधवयोर्यः स्वभावसिद्धो भावः प्रेमा तेन सार्वज्ञ्यम् । यथा योगिनो योगबलेनातीतानागतान् पश्यन्ति तथैतावपि प्रेमबलेन परस्परानुरागं पश्यत इति भावः । एतत्पद्यस्याचलत्वैकदेशेनान्यः समतामाऽलङ्कारोऽपि ज्ञेयः । अरुणमिति—अत्र हृदयनिष्ठकम्पनक्रियया सह नयननिष्ठकोपारुण्यगुणो निर्दिष्टः । अक्रूरे व्रजमागते ललिता स्वसखीमाह—हरिरिति । सखी राधिका जीवति न वेति शङ्का । अत्र श्रवणक्रियया (16) सह मूर्च्छनक्रिया निर्दिष्टा ।

कलहान्तरिता श्रीराधा कृष्णं प्रति भङ्ग्या तस्याहतत्वमाह—एक इति । तवैव सामर्थ्यमधिकम् । एवञ्च प्रेमशून्येन त्वया सहास्माकं प्रीतिरनुचितेति ध्वनिः । मानिनी

---

यावत् । समाध्यलङ्कारादस्य भेदः सर्वस्वकारादिभिः सूचितः । पर्याय इति—अत्र क्रमाद्विच्छित्तिरेव प्राग्भवति आसङ्गता संज्ञा । एकस्मिंस्तवेति—अत्र 'मद्धिलासह्ससमरिए' इति गाथासप्तशतीपद्यस्यच्छायम् । 'शशिसखी'ति श्लोके तृतीयचतुर्थचरणविभागे ह्याला इवेति

---

(16) 'श्रवणक्रियये'ति पाठः (ख) (ग) पुस्तकयोः ।

आरोप्यत इति पक्षे यथा—

> मदनेनोज्झितं वाम्यं राधे! गृह्णाति ते मनः।
> मनस्त्यजति ते रागं लोचने परिगृह्णतः॥ १४१

यथा वा—त्वया त्यक्तां राधे! रूपमहह गृह्णाति मदन-
> स्त्वदक्षिभ्यां त्यक्तं परिवहति रागं तव मनः।
> भ्रिया कौटिल्यं ते परिहृतमपाङ्गोऽधिकुरुते
> पुनः सन्धानार्थं किमुचितपदे न्यस्तमखिलम्॥ १४२

## —अन्यो विपर्य्ययात्॥ २८६क—

विपर्य्ययादुक्तप्रकारस्य वैपरीत्यादेकस्मिन्ननेकमित्यर्थः। यथा भवतीति पक्षे—

एकस्मिंस्तव हृदये व्रजेन्द्रसूनो! भूयस्यो ललितदृशः कृतप्रवेशाः।
नाद्यास्मिन्नवसर एव गाढ़पूर्णे तादृश्यो गुणबहुलाः कथं विशन्तु (द)॥१४३

आरोपपक्षे तु यथा—

शशिमुखि! तव राधिके! कटाक्षः प्रथममभूदसतद्रवातिवर्षी।
अथ हृदि विनिविष्ट एव ज्वाला-झलपरिदिग्धशरायमाण आस्ते (द)॥१४४

श्रीराधां प्रति श्रीकृष्ण आह—मदनेनेति। त्वया मयि क्रोधवशात्स्वदनो वाम्यं ग्राहितः, तत एव तद्धृदये कन्दर्पावेशाभावात्मानो वर्त्तते। सम्प्रति मद्‌:खदर्शनात् कारुण्येन मदनेन त्वामाहत्य वाम्यं त्यक्तम्, अतस्तद्धृदि कन्दर्पावेशो दृश्यते—तथापि त्वं मया सह न मिलसि तत्र मद्‌:खदर्शनेऽपि कठोरं तव मन एव कारणम्—मनो मदनेन त्यक्तं वाम्यं जग्राह। रागो मद्विषयानुरागः, स्वेनैव नयनपक्षे रक्तिमा मद्विषयकस्य तव क्रोधस्यानुभावरूप एव। अत्र मदनगतं वाम्यं मनस्यारोप्यते। मानभङ्गानन्तरं कलहान्तरितां श्रीराधां प्रति श्रीकृष्ण आह—त्वयेति। मदनः क्रुद्धः सन् त्वन्मिलनमप्राप्तं मां प्रहरेण विध्यतीति भावः। परिवहति स्वीकरोति—तथा च क्रोधाभावान्नेत्रयो रागो गतः मनसि चानुरागः प्रादुर्बभूव। भ्रियेति—पूर्वं मानसमये श्रीकृष्णस्य दर्शनमपि न कृतम्, अधुना प्रसन्ना सती तमपाङ्गेन पश्यतीति भावः। अतोऽनुप्रेक्षामाह—पुनर्मानसमय एतेषां पुनः स्वस्वस्थाने

---

न्यस्तो ■ मनोज्ञ इत्यर्थोयम्। अनुमानमिति—त्रिविधो हेतुर्नैयायिकसम्मतः पूर्वः सामान्यतो दृष्टः शेषवच्चेति। वाग्भटाद्याः कात्रितयवर्त्तिनो लिङ्गिनो लिङ्गज्ञानेनाप्त वैविध्यमुदाहरन्ति। यत्तु नवीनानां मन्ये हेतोर्निष्पादकज्ञापकसमर्थकभेदेन भागत्रयव्यापनं तत्तदुत्थालङ्कार-भेदोद्दङ्कनार्थमिति दर्पणादितो ज्ञेयम्। एवमन्यत्रं इत्य चारुता 'अस्यां मुनीनामपि मोह-मूहे' इत्यादिनयपद्ये नितरामवभोग्या। उद्भट-रुद्रट-जयदेव विश्वनाथादिभिरभ्युपगतो ऽस्त-

साध्यसाधनसद्भावेऽनुमान-(३८) मनुमानवत् (द)। २९० का—

अनुमाने यथा त्रिविधो हेतुस्तथाऽत्रापि । यथा—

इन्दीवराक्षि ! भवदक्षि मनोभवस्य बाणः सुधांशुमुखि ! मानसभेदकत्वात् ।
येनाहतो मनसि गोकुलराजसूनुः सम्भ्रमते न हि बहिः कुरुतेऽवहित्थाम् ॥१४५

अत्र 'भवदक्षि' पक्षः, "मनोभवस्य बाण" इति साध्यं,'मानभेदकत्वा'दिति हेतुः ।

यथा वा—

नाभीगृहं तव कलावति । मन्मथस्य लीलाऽग्निहोत्रभुजदर्पकृशानुशालि !
एतद्वलग्नगगनाञ्चलचुम्बिचारुगन्धोल्लसत्तनुरुहावलिधूमहेतोः ॥१४६

अत्र रूपकगर्भमनुमानम् ।

विशेषोक्तिः परिकरः(३९)स्यात् साकूतैर्विशेषणैः (द)॥ २९१का—

यथा— श्यामाभिरामैर्गलद्धृदयग्रन्थिभिर्मुक्तबन्धै—
दृक्पाथ्यासप्रणयमयमिभिर्भ्रूयुग्मं भ्रमद्भिः ।

स्नापनार्थमुपचितपङ्के योग्यस्थाने किं त्वयाऽक्षिप्तं भ्रान्तम् ? श्रीराधाया मानभङ्गार्थमुद्यतं श्रीकृष्णं प्रति ललिताऽऽह—एकस्मिन्निति । तादृशी गुणबहुला राधिका कथं विप्रलब्धा ? गौरवे बहुवचनम् । "इन्दीवरेति—सम्भ्रमते श्रीवति । हे सखे ! श्रीकृष्ण ! कथमभ्रान्त इव दृश्यसे इति सखीभिः पृष्टोऽपि बहिरवहित्थमाकारगोपनं करोति,न तु तत्त्वं कथयति । कलावत्या नाभी एव मन्मथस्य गृहमिति रूपकं तदेव पक्षः । सम्भोगलीलैवाग्निहोत्रं, श्रीकृष्णस्य भुजदर्पं एव तादृशाग्निहोत्रस्य कृशानुरग्निः, स एव साध्यम् । एतस्याः कलावत्या वलग्नो मध्यदेशः "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो"रित्यवस्याकारलोपः । स एवात्यन्तचोच्यत्वेन गगनप्रदेशस्तत्सम्बन्धिनी चारुगन्धेनोल्लासशालीमावलिरेव धूमः स एव हेतुः । तथा च याज्ञिकब्राह्मणा यथा गृहादुत्थितं गगनप्रदेशे उड्डीयमानं सुगन्धधूमविशेषं हेतुकृत्याग्निहोत्रीयवह्नेरनुमानं कुर्वन्ते तथा सख्योऽपि नाभिरूपगृहादुत्थितं मध्यदेशरूपगगनस्पर्शिसुगन्धरोमावलीरूपधूमविशेषं हेतुकृत्य (17) सम्भोगाग्निहोत्रीयस्य भुजदर्पदपवह्नेरनुमानं कुर्वन्तीति ।

सङ्कारः (प्राचीनानां हेत्वलङ्कारो वा) इतो मिथस्य कुत्रापि भिन्न एव—परं जगन्नाथविश्वेश्वरप्रभृतिभिराद्यस्यानिशयोक्तिभेदतया कथनं प्राचीनमर्यादानियन्त्रणामूलमिति सुक्तिसूक्तयो वह्वः । परिकर इति—अत्र विशेषणानां प्रतीयमानार्थगर्भीकारेण तात्पर्ये वन्धसमूहरूपेणैव शोभाऽऽत, सार्थकं संज्ञाकथनम् । विशेष्यस्य साकूताभिधाने परिकराङ्कराख्योऽ

17) 'हेतु' मत्त्वे'ति (ग) (ङ) पुस्तकयोः पाठ ।

चित्ते चिन्त्यं कथमपि चिरं धाम यच्छ्यामलन्ते
गोपस्त्रीणां कुचकलसयोर्नीलरत्नं बभूव (द) ॥१४७

अत्र "आत्मारामे"रित्यस्य विशेषणस्य सर्वाण्येव विशेषणानि साकूतानि ।

**प्रकृतस्य गनं छद्म(४०) व्याजोक्तिरनिषेधभाक्(ध) ॥ २६२ का—**

अपह्नुतिस्तु निषेधपूर्वा, इयन्तु न तथेत्यनिषेधभागित्युक्तम् । इयन्तु छद्मपूर्वैव । यथा—अहो शैत्यस्य महिमा हिमानिल ! तवेदृशः ।

न शक्यते गोपायितुं क्षतो येनाधरव्रणः ॥ १४८

यथा वा—

अलमलमभिलाषेणामुना वारिखेलाकुतुकिनि ! कमलानामाहृते कौतुकस्य ।
कलय कलितमङ्गं कण्टकैर्नालजन्यैः शिवशिव ! परिदष्टं षट्पदेनाधरोष्ठम् ॥१४९

**प्रश्नपूर्वकमाख्यानं तत्सामान्यव्यपोहनम् ।**
**तस्य तस्यापि च द्वये व्यङ्ग्यत्वे स्यात्तथापरम् ।**
**अप्रश्नपूर्वकं वाच्यं परिसंख्या (४१) चतुर्विधा (ध) ॥ २६३ का-**

'तस्य तस्य' चेति प्रश्नपूर्वाख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यत्वम्, अप्रश्नपूर्वकस्य तत् सामान्यव्यपोहनस्य च वाच्यत्वञ्चेति चतुर्धा । क्रमेणोदाहरणानि—

क्षतमङ्गं गोपायितुं श्यामलाऽऽह—हे शीतकालीन हिमानिल ! तव शैत्यस्येदृशो महिमा कियदस्माकं? अत्र हिमपवनस्य सर्वेषामधरव्रणजनकत्वेन दुःखदायित्वादमाहात्म्यरूपप्रकृतार्थस्य संवरणं, तत्र निषमात्रं किन्तु दुःखदायित्वाद्माहात्म्य एव वक्तुस्तात्पर्य्यम् ।

श्रीराधिका काचित् सखर्यो स्तनाधरादौ सम्भोगचिह्नं दृष्ट्वा परिहसन्त्याह—अलमलमिति—तथा च त्वया कुञ्जमध्ये नवक्रीडायामेव यतम्, तत्र जलमध्यस्थितानां कमलानामाहरणार्थं गतायास्तवाङ्गस्य कमलनालस्य कण्टकैः क्षतैः क्षतादिकं जातम् । अत्र प्रकृतार्थस्य श्रीकृष्णेन सह सम्भोगस्य संवरणमात्रम्, किन्तु तात्पर्य्यं तत्रैवेति भावः ।

---

लङ्कारभेद इति चन्द्रालोककृदादयः । आत्मारामैरिति—"आत्मारामा विहितरतय" इत्यादि वेणीसंहारपद्यमेतदभिप्रायमेव ।

(ध) व्याजोक्तिरिति—इयं प्राचीनानां ग्रन्थेषु क्वचो क्वचो वेति निर्दिष्टः । रसगङ्गाधरकृता येऽशस्तु गुणस्यानिष्टसाधनतया दोषत्वेन दोषस्येष्टसाधनतया गुणत्वेन वर्णने लड्डीतीति भिन्न एव । अत्र तत्त्वतो गोपन एव तात्पर्य्यं तदुक्त्यच वैचित्र्यमितीतराऽलङ्कारव्यावर्त्तकता । परिसंख्येति—'परि' शब्दोऽत्र वर्जने, 'परेर्वर्जने' इत्यष्टाध्यायीकृता निर्देशात् । संख्या बुद्धि-

किं गेयं ? व्रजकेलिकर्म, किमिह श्रेयः ? सतां सङ्गतिः,
किं स्मर्त्तव्य-मनन्तनाम, किमनुध्येयं ? मुरारेः पदम् ।
क्व स्थेयं ? व्रज एव, किं श्रवणयोरानन्दि ? वृन्दावन-
क्रीड़ैका, किमुपास्यमत्र ? महसी श्रीकृष्णराधाभिधे ॥ १५०
का विद्या ? हरिभक्तिरेव, न पुनर्वेदादिनिष्णातता,
कीर्त्तिः का ? भगवत्परोऽयमिति या ख्याति,र्न दानादिजा ।
का श्रीः ? कृष्णरति, र्न वै धनजनग्रामादिभूयिष्ठता,
किं दुःखं ? भगवत्प्रियस्य विरहो, नो हृद्व्रणादिव्यथा ॥ १५१
वक्रता मृगदृशां कचपाशे पाणिपादनयनादिषु रागः ।
नीविकेशवसनादिषु बन्धः सान्द्रचन्दनरसादिषु पङ्कः ॥१५२

अत्र 'क्व वक्रता' इत्यादिप्रश्नपूर्वकस्याख्यानस्य तत्सामान्यव्यपोहनस्य च व्यङ्ग्यता—तथाहि क्व वक्रता मृगदृशां गोपिनां ? कचपाश एव, नान्तः-करणादौ कस्या अपीत्यादि ।

प्रत्यासत्तिर्हरिचरणयोः सानुरागी, न रागी,
प्रीतिः प्रेमातिशयिनि हरेर्भक्तियोगी, न योगी ।
आस्था तस्य प्रणयरभसस्योपदेहे, न देहे,
येषां ते हि प्रकृतिकृतिनो, श्रूत मुक्ता न मुक्ताः ॥ १५३

अत्र प्रश्नपूर्वकं व्यङ्ग्यं तदन्यव्यपोहनं वाच्यमिति भेदः ।

वक्रतेति—व्रजे कुटिलान्तःकरणा विषयेषु रागयुक्ताश्च जनाः न सन्ति, तत्र कस्यापि निगड़ादिबन्धनं कलङ्कस्पर्शो वा नास्तीति ध्वनिः । हरिचरणयो सानुरागे येषां वै प्रत्यासत्तिः, न विषयरागे । न योगे ध्यानकर्मादौ । प्रणयरभसस्य प्रेमातिशयस्योपयोगिनि चिद्देहे आस्था नित्यत्वबुद्धिः, नतु पाञ्चभौतिके देहे । तथा च के मुक्ता इति प्रश्नो व्यङ्ग्यः, तदोत्तरं येषामिति । मुक्ताभिमानिनो मुक्ता न, तेषां भक्त्यभावात् । तथा श्रीदशमे 'येऽन्येऽरविन्दाक्ष विमुक्तमानिन' इत्यादौ तेषामधःपतनमेवोक्तम् ।

---

तेन वर्जनमुद्रावियमित्यन्वर्थमभिधानम् । न केवलं 'तत्र चान्यत्र च प्राप्तौ परिसंख्ये'ति वाक्यविदां मीमांसकानां विभाषाऽनुमोदितोऽत्राङ्गीकारः, परं काव्यगतानादिर्विच्छित्ति-बोधितजीवातोरेवात्र परिग्रहः । नियमवच्छेदस्यैवावान्तरभेदोऽयमिति प्राचीनानां दण्डि-प्रभृतीनां दर्शनम् । किं गेयमिति—श्रीरामानन्दरायमहाशयश्रीचैतन्यमहाप्रभोः प्रश्नोत्तरा-

यथोत्तरं पूर्वपूर्वहेतुकस्य तु हेतुता ।
तदा कारणमाला (४२) स्यात् (ध)—२९४ का—

पूर्वपूर्वहेतुकार्थस्योत्तरोत्तरपदार्थस्य यदि हेतुता, तदा तदैवेत्यर्थः ।

यथा—सत्सङ्गमेनैव भवेद्विरागो विरागतः स्यान्मनसो विशुद्धिः ।
मनोविशुद्धेरेव हरेः प्रकाशो हरेः प्रकाशेन कृतार्थता स्यात् ॥ १५४

—क्रिययाऽन्योन्यकारणम् ।
वस्तुद्वयं यदाऽन्योन्यम् (४३) (ध)—२९५का—

वस्तुद्वयं यदि क्रिययाऽन्योन्यकारणं स्यात्तदाऽन्योन्यमित्युच्यते ।

यथा— राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिं
कृष्णस्याभा अपि च हरितीकुर्वते धाम तस्याः ।
स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला-
वेकस्थाने यदि बत तदा तुल्यभासौ विभातः ॥ १५५

—प्रश्नस्योन्नयनं यदि ।
उत्तरश्रुतिमात्रेणोत्तरं (४४) स्यात् (ध)—२९६ का—

प्रतिवचनश्रवणादेव पूर्ववचनस्योत्तरस्य यद्युन्नयनं भवति तदोत्तरालङ्कारः ।

यथा—भम कृण्ह अण्णघरं विरमदु दे (18) काबि वअणपरिवाडी ।
अम्ह सही इध एक्का ण एत्थ तुह ओसरो ठादुं ॥ १५६

अत्र अस्याः प्रतिवचने कृष्णस्य कोऽपि प्रश्नः पूर्वं जात इति बुध्यते । नचैतदनुमानं, व्याप्त्यभावात् । न चापि काव्यलिङ्गं, हेतोः पदवाक्यार्थताऽभावात् ; नतु प्रश्नस्य प्रतिवचनजनको हेतुः—तेनेदमलङ्कारान्तरमेव ।

भम कण्हेति—भ्रम कृष्णान्यगृहं विरमतु ते काऽपि वचनपरिपाटी । मम सख्येकात्र तवावसरः स्थातुम् । न चात्रानुमानालङ्कारो वक्तव्यः, प्रतिवचनप्रश्नयोः परस्परव्यभिचारेण व्याप्त्यभावात् । नाप्यत्र काव्यलिङ्गालङ्कारो वक्तव्यः, न त्विति—प्रश्नं प्रति प्रतिवचनं न जनको हेतुः, अपि तु ज्ञापक एव हेतुः, काव्यलिङ्गे जनकरूपस्य हेतोरेव ग्रहणात् ।

मिदं कविकर्णपूरकृते चैतन्यचन्द्रोदयनाटके । कारणमालेति—प्रहलादमूलिकाऽत्र विच्छित्तिः, एवमप्यत्र लोकैर्न्यन्यमोद्दाविति वा मालादीपके वावलोमारम्भतिश्वत्रमन्तव्यम् । अत्र

(18) "न" इति पट (ख) पुस्तके नास्ति । तत्र तु, पाद्यापादस्यापरिपूरितत्वात् ।

—प्रश्नतोऽपि वा ॥ २६७का—

प्रश्नतः पश्चादुत्तरं वा उत्तरम् । यथा—

किं दुर्लभं ? यन्मनसो न गोचरः, किं प्रार्थनीयं ? क्व च यन्न लभ्यते ।
किं ह्लादकं ? यत्स्मरणेऽपि स स्यात्, तत्तत्त्व तत् किं ? व्रजराजनन्दनः ॥१५७

अत्र चतुर्विधपरिसंख्यातो विलक्षणता— तत्र तत्र सर्वत्रान्यव्यपोहे तात्पर्यं क्वचिद्वाच्यमुखेन क्वचिद्व्यङ्ग्यमुखेन । इह तु शुद्धप्रश्नस्य शुद्धमुत्तरमिति भेदः ।

**आकारेणेङ्गितेनापि सूक्ष्मार्थो यत्र लक्ष्यते ।**
**प्रकाश्यते वाऽन्यस्मै च स सूक्ष्मः(४५)कीर्त्त्यते द्विधा(ध)॥२६८का-**

क्रमेणोदाहरणे—राधायाः करकमले शिखण्डदलपद्म लग्नमालोक्य ।
प्रातः सखी विदग्धा लिलेख तत्रैव कार्मुकं सशरम् ॥ १५८

अत्र हि विपरीतरते कृष्णकेशाकर्षणविलग्नतद्बर्हावतंसदर्शनेन पुरुषायितं तवेदं मयाऽवगतमिति सख्या स्ववैदग्ध्यं प्रकटयितुं पुरुषस्यैव धनुर्धरत्वं सङ्गच्छत इति सशरकार्मुकं लिखितमिति सूक्ष्मम् ।

सदनप्राङ्गनसङ्गतमनङ्गरसमङ्गलं कृष्णम् ।
सकृदवलोक्य सलीलं राधा पिदधेऽवगुण्ठनेन मुखम् ॥ १५९

अत्र चन्द्रास्तसमये समागन्तव्यमिति कृष्णं प्रति सङ्केतोऽनया प्रकटितः, स च सूक्ष्मः ।

**सारः (४६)सावधिरुत्कर्षो यद्भवेदुत्तरोत्तरम् (न) ॥२६९का—**

सारोऽलङ्कारः । यथा—वर्षेषु भारताभिधमिह सारो भारते च तीर्थानि ।
तीर्थेषु च मथुरैका वृन्दाऽरण्यं मथुरायाम् ॥ १६०

---

सङ्गमेनैवेत्यादि—अत्र कथितपदत्वं न दोषः, परं शोभाऽधायकमेव । अन्योन्यमिति—पश्चाल्लक्षितात् समालङ्कारादस्य भेदः सहज इति सुधियस्त्व एव प्रमाणम् । उत्तरम्—अत्र प्रकाशकृतां लक्षणे'असकृत् यदसम्भाव्य'मिति 'असकृत्'पदं वैचित्र्यबोधकमिति परमत्र तन्निर्देशः । इह प्रश्नोत्तरसुखे तात्पर्यं नेति प्रथमभेदादेवावगम्यते, यत्र तथा तत्राप्युत्तरांशे न परन्तु प्रश्नोन्नयन एव परं लक्ष्यमिति । प्रश्नोत्तराख्योऽलङ्कारः केश्चिद्वाग्भटादिभिरुपदर्शितः प्रहेलिकाभेद एवेति महाकवीनां वाणभट्टादीनां सूचनम् । 'किमैभं स्वाध्यमाख्याति पक्षिणं कः कुतो यशः । गरुडः कीदृशो नित्यं दानवारिविराजितः ॥'

यथोत्तरं पूर्वपूर्वहेतुकस्य तु हेतुता ।

तदा कारणमाला (४२) स्यात् (ध)—२९४ का—

पूर्वपूर्वहेतुकार्थयोरुत्तरोत्तरपदार्थस्य यदि हेतुता, तदा तदेवेत्यर्थः ।

यथा—सत्सङ्गमेनैव भवेद्विरागो विरागतः स्यान्मनसो विशुद्धिः ।

मनोविशुद्धेरेव हरेः प्रकाशो हरेः प्रकाशेन कृतार्थता स्यात् ॥ १५४

—क्रिययाऽन्योन्यकारणम् ।

वस्तुद्वयं यदाऽन्योन्यम् (४३) (ध)—२९५का—

वस्तुद्वयं यदि क्रिययाऽन्योन्यकारणं स्यात्तदाऽन्योन्यमित्युच्यते ।

यथा— राधाभासो मरकतमयीं कुर्वते कृष्णकान्तिं

कृष्णस्याभा अपि च हरितीकुर्वते धाम तस्याः ।

स्थाने स्थाने यदि निवसतस्तौ तदा गौरनीला-

वेकस्थाने यदि वत तदा तुल्यभासौ विभातः ॥ १५५

—प्रश्नस्योन्नयनं यदि ।

उत्तरश्रुतिमात्रेणोत्तरं (४४) स्यात् (ध)—२९६ का—

प्रतिवचनश्रवणादेव पूर्ववचनस्योत्तरस्य यदुन्नयनं भवति तदोत्तरालङ्कारः ।

यथा—भम कण्ह अण्णघरं विरमदु दे (18) कावि वअणपरिवाड़ी ।

अह्म सही इध एक्का ण एत्थ तुह ओसरो ठादुं ॥ १५६

अत्र सख्याः प्रतिवचने कृष्णस्य कोऽपि प्रश्नः पूर्वं जात इति बुध्यते ।

नचैतदनुमानं, व्याप्त्यभावात् । न चापि काव्यलिङ्गं, हेतोः पदवाक्यार्थता-ऽभावात् ; नतु प्रश्नस्य प्रतिवचनजनको हेतुः—तेनेदमलङ्कारान्तरमेव ।

भम कण्हेति—भ्रम कृष्णान्यगृहं विरमतु ते काऽपि वचनपरिपाटी । मम सख्येका नात्र तवावसरः स्थातुम् । न चात्रानुमानालङ्कारो वक्तव्यः, प्रतिवचनप्रश्नयोः परस्परव्यभिचारेण व्याप्त्यभावात् । नाप्यत्र काव्यलिङ्गालङ्कारो वक्तव्यः, न त्विति—प्रश्नं प्रति प्रतिवचनं न जनको हेतुः, अपि तु ज्ञापक एव हेतुः, काव्यलिङ्गे जनकरूपस्य हेतोरेव ग्रहणात् ।

मिदं कविकर्णपूरकृत चैतन्यचन्द्रोदयनाटके । कारणमालेति—ग्रन्थान्तरे विचित्र-प्रकारान्त र्भावोऽपि द्रष्टव्यः [illegible] मालादीपकं बाल्यकौमारपौगण्डादि । मम

(18) "ज" इति ग (क) पुस्तके नास्ति । तत्र पुनः कापि वाग्विलासपरिपाटिका तु ।

—प्रश्नतोऽपि वा ॥ २६७का—

प्रश्नतः पश्चादुत्तरं वा उत्तरम् । यथा—

किं दुर्लभं ? यन्मनसो न गोचरः, किं प्रार्थनीयं ? क्व च यत्र लभ्यते ।
किं ह्लादकं ? यत्स्मरणेऽपि स स्यात्, तत्तच्च तत् किं ? व्रजराजनन्दनः ॥१५७

अत्र चतुर्विधपरिसंख्यातो विलक्षणता — तत्र तत्र सर्वत्रान्यव्यपोहे तात्पर्यं क्वचिद्वाच्यमुखेन क्वचिद्व्यङ्ग्यमुखेन । इह तु शुद्धप्रश्नस्य शुद्धमुत्तरमिति भेदः ।

आकारेणेङ्गितेनापि सूक्ष्मार्थो यत्र लक्ष्यते ।
प्रकाश्यते वाऽन्यस्मै च स सूक्ष्मः(४५)कीर्त्त्यते द्विधा(ध)॥२६८का-

क्रमेणोदाहरणे—राधायाः करकमले शिखण्डदलपक्ष्म लग्नमालोक्य ।
प्रातः सखी विदग्धा लिलेख तत्रैव कार्मुकं सशरम् ॥ १५८

अत्र हि विपरीतरते कृष्णकेशाकर्षणविलग्नतद्बर्हावतंसदर्शनेन पुरुषायितं तवेदं मयाऽवगतमिति सख्या स्ववैदग्ध्यं प्रकटयितुं पुरुषस्यैव धनुर्द्धरत्वं सङ्गच्छत इति सशरकार्मुकं लिखितमिति सूक्ष्मम् ।

भवनप्राङ्गनसङ्गतमनङ्गरसमङ्गलं कृष्णम् ।
सङ्कटमवलोक्य सलीलं राधा पिदधेऽवगुण्ठनेन मुखम् ॥ १५९

अत्र चन्द्रास्तसमये समागन्तव्यमिति कृष्णं प्रति सङ्केतोऽनया प्रकटितः, स च सूक्ष्मः ।

सारः (४६)सावधिकत्कर्षो यद्भवेदुत्तरोत्तरम् (न) ॥२६९का—

सारोऽलङ्कारः । यथा—वर्षेषु भारताभिधमिह सारो भारते च तीर्थानि ।
तीर्थेषु च मधुरैका वृन्दाऽरण्यं मथुरायाम् ॥ १६०

---

सङ्गमेनैवेत्यादि—अत्र कथितपदत्व न दोषः, परं शोभाऽधायकमेव । अन्योन्यमिति—पश्चाल्लक्षितात् समालङ्कारादस्य भेदः सहज इति वृत्तिग्रन्थ एव प्रमाणम् । उत्तरम्—अत्र प्रकाशकृतां लक्षणे 'असकृत् यदसम्भाव्य'मिति 'असकृत्'पदं वैचित्र्यबोधकमिति परमत तन्निर्देशः । इह प्रश्नोत्तरमुखे तात्पर्यं नेति प्रथमभेदादेवावगम्यते, यत्र तथा तत्राप्युत्तरांशे न परन्तु प्रश्नोन्नयन एव परं लक्ष्यमिति । प्रश्नोत्तराख्योऽलङ्कारः केश्चिद्वाग्भटादिभिरुपदर्शितः प्रहेलिकाभेद एवेति महाकवीनां वाग्भट्टादीनां सूचनम् । 'किमिभं शाघ्यमाख्याति पक्षिणां कः कृतो यशः । गरुडः कीदृशो नित्यं दानवारिविराजितः ॥''

**अत्यन्तभिन्नाधारत्वे युगपद्भापणं यदि।**
**धर्मयोर्हेतुफलयोस्तदा सा स्यादसङ्गतिः(४७) (न) ॥२००का—**

यदाधारो हेतुस्तदाधारं फलमिति, यथा पापपुण्यजन्ये एकाधारे एव दुःखसुखे, तदन्यथाभावादसङ्गतिः। तथापि युगपदेव हेतुः फलञ्च, न तु पापादिजन्यदुःखवत् कालान्तरव्यवधानम्। यथा—

> तवाधरोष्ठे व्रतमप्यनघ मम व्यथाऽस्तं मलिनञ्च चेतः।
> पीतस्त्वया तं यदनासवस्त्वं मत्तः कुतोऽनर्थपरम्परेयम् ॥ १६१

नायं विरोधः, न त्वेकाश्रयः।

**कारणान्तरसाहाय्यात् कार्य्यं यत् सुकरं भवेत्।**
**कर्त्तुर्विना प्रयत्नेन स(४८) समाधिरितीर्य्यते(प) ॥ (२०१)का—**

यथा— मयि व्यग्रे तस्या प्रणयकलहक्लान्तमनसः
प्रसादे राधायाः पदपतनमाविष्कृतवति।

यदाधार इति—यस्मिन्नेवाधिकरणे हेतुस्तस्मिन्नेवाधिकरणे फलोत्पत्तिरिति सर्वथा नियमः, तस्यान्यथाभावः कारणस्याधिकरणभेदे कार्योत्पत्तेरपरस्मिन्नन्यथाभावः। तथा पापपुण्यजन्ये सुखदुःखे एकस्मिन्नेवात्मनि भवतः। तथापि व्यभ्रस्वाप्यसङ्गत्यलङ्कारमाह—युगपदिति। एकस्मिन्नेव काले हेतुः फलञ्च भवति। काचिन्मानिनी प्रातःकाले मानभङ्गार्थमागतं श्रीकृष्णं तस्याधरे सम्भोगचिह्नं व्रणादिकं वीक्ष्याह—तवेति। यस्मिन्नेव क्षणे तवाधरे व्रणं क्षतं तदैव तस्य कारणात्मनः ममापि व्यथा जाता, न तु कालव्यवधानम्। त्वं मत्तः सम्भोगचिह्नं धृत्वा मानभङ्गार्थमागतः, इदमेव मत्तताचिह्नमिति भावः। एवमन्यत्राप्यन्यैरुक्तं यदुदाहरणं तत्तु कृष्णसम्बन्धराहित्येन विगीतत्वात् ग्रन्थकारेण परित्यक्तम्।

---

इत्यादि लक्ष्यलक्षणं गम्यते। रुद्रट इति—'निपुण'मिति प्राचीनानां संज्ञाऽन्तरमस्येति कश्चित्। नास्य विवर्त उत्तरकाले कथमप्यासीदित्यप्रधानत्वेऽप्यस्य प्रथमत्वस्थापनं कुतश्चित्। विदग्धानामिव काव्यवर्त्म जीवतीत्येवं प्रायादलङ्कारादृते, परं वैदग्ध्यमेतदास्फोटनप्रायम्। अत्र वक्रोक्तिविरहान्नालङ्कारतेति भामहानुसारिणः कुन्तकादयः।

(न) सारविधिरिति—'परावधि'रिति प्रकाशलक्षणे—'तेन पर्यन्तभागो यत्र सर्वोत्कृष्ट इत्यर्थः, धारावाहिकतया तत्रैवोत्कर्षविश्रान्ते'रिति गोविन्दव्याख्यानम्। उत्तरोत्तरमश्लाघ्यानां समावेशोऽप्ययमिति। अस्य न केवलं धर्मधर्मिरूपेण व्यतिरेकाद्भेदः परं मालारूपेण धाराऽविरोधित्वयैवेति ज्ञेयम्। सर्वत्र लक्ष्यैवोदार इत्याख्या। प्रतीच्यानां Climax Anticlimax—आख्यावलङ्कारावेतत्सदृशावपि प्रायः कथञ्चिद्भिन्नार्थौ। असङ्गतिरिति—

अकस्मादथोदव्यतिकरकृतः स्फूर्जथुरभूत्
सखे ! त्रासादेषा झपटि मम कण्ठं धृतवती ॥ १६२

**श्लाघ्यत्वेन भवेद्योग्यो यदि योगस्तदा समम्(४९)(न)॥२०२का—**

सममित्यलङ्कारः । यथा—ललामं नारीणामियमइह पुंसामयमहो
वयोऽस्या अस्यापि प्रकृतिनवकैशोरकमिदम् ।
प्रसूनेषोर्भाग्याल्लिखितमिव रत्नद्वयमिदं
न राधाकृष्णाख्यं भजतु कथमाद्योऽपि च रसः॥१६३

एवमश्लाघ्यत्वेऽप्युदाहार्यमुदाहरणम् ।

**अत्यन्तवैसादृश्येन योगो यद्यतिदुर्घटः ।**
**कर्त्तुः क्रियाफलाभावः प्रत्युतानर्थसम्भवः ॥**
**गुणक्रियाभ्यां ते एव कार्यकारणयोश्च यत् ।**
**परस्परं विरुध्येते विषमः(५०) स चतुर्विधः(न)॥२०३का—**

ते गुणक्रिये एव । क्रमेणोदाहरणानि—
शिरीषकुसुमादपि प्रकृतिकोमलस्तद्वपुः
कुकूलविषशूलयोर्व्यतिकरोऽनुरागज्वरः ।
तथापि सहतितरां तमसुनैव राधा चिरं
न वाङ्मनसगोचरः सहजभावबन्धक्रमः ॥ १३४ अत्र गुणो गुणेन ।

संसारदावज्वलितं मनो मे शिवाय तापप्रशमाय कृष्णम् ।
स निर्घृणस्तद्गत लब्धमात्रं समूलमुन्मूलितमेव चक्रे ॥ १६५ अत्र क्रिया क्रियया

शिरीषेति—कुकूलविषशूलयोस्तुषाग्निविषाक्तशूलयोः सम्बन्धरूपः श्रीकृष्णविषयकानुरागज्वरः । सहजभावः स्वभावसिद्धप्रेमा । अत्र कोमलस्पर्शगुणेनानुरागज्वररूपगुणो विरुध्यते । संसारेति—निर्घृणः कृपारहितः । तथा श्रीकृष्णचरणारविन्दाश्रयणमात्रेण संसारज्वालाया मूलभूतस्य मनोघटितलिङ्गदेहस्य नाशं चकारेत्यहो तस्य कृपालुतेति

---

अस्य तथा प्रत्यनीकाधिकविषमाद्यलङ्काराणां विरोधभेदेन परिगणना प्राचां ग्रन्थेषु । चित्रहेतुरलङ्कार इति राजानुसारिणः । अप्रसक्तिशयोक्तिप्रपञ्च इत्यपि केचित् । चतुर्थभेदातिशयोक्तिसामान्ये कार्यकारणयोः पौर्वापर्यविपर्ययः, इह तु तयोरेव वैयधिकरण्यमितीया-

पीयूषवीरुधो बीजमेकमेव ममान्तरे ।

अङ्कुराः किममी तस्माद्बहवो विषवीरुधाम् ॥ १६६

अत्र कार्यभूतानामङ्कुराणां बहुत्वेन गुणेन कारणभूतस्य बीजस्यैकत्वं गुणो बाध्यते । पीयूषविषयोश्च कार्यकारणरूपत्वादैधर्म्यम् ।

प्रेमबीजं परानन्दस्यन्दि रोपितमन्तरे ।

तस्याङ्कुराः कुकूलस्य स्फुलिङ्गा इव दाहकाः ॥ १६७

अत्र कार्यस्य दहनक्रियया कारणस्य परमानन्दस्यन्दनक्रिया विरुध्यते ।

आधाराधेययोर्भूम्नोर्मिथस्तत्प्रतियोगिनो ।

ततोऽप्यधिकभूमानो स्यातां तदधिकं(५१) भवेत् (न)॥२०४का-

अधिकनामाऽलङ्कारः । क्रमेणोदाहरणे—

अहो ते मनसः सुभ्रु ! विशालत्वमिदं महत् ।

त्रिलोक्यां यो न माति स्म यत्र माति रमापतिः ॥ १६८

अत्राधेयस्य भूयस्त्वेऽप्याधारस्य ततोऽपि भूयस्त्वम् ।

यां वेद्मि यस्याः प्रतिरोमकूपं ब्रह्माण्डभाण्डानि समुल्लसन्ति ।

तस्यां तनौ ते न ममौ मुकुन्द ! तस्याः समालोकमहोत्सवोऽयम् ॥१६९

अत्राधारभूयस्त्वेऽप्याधेयस्य भूयस्त्वम् ।

अपकार्यापकारार्थमसमर्थेन तत्प्रियम् ।

हिनस्ति यत्तदोयोक्तिः प्रत्यनीकं(५२) स्तवो यदि (न)॥२०५का-

ध्यानमुक्तिरपि श्रेया । अत्राङ्कुरक्रियोत्पत्तिक्रिया विरुध्यते । बीजं प्रेम, तत्तु एकमेव, तस्याङ्कुरा विरहजन्यज्वालारूपा बहवः—एकस्य बीजस्य बहवोऽङ्कुरा न सम्भवन्तीति विरोध, पीयूषविषयोरपि विरोधश्च ।

भूम्नोः व्यापकयोः । ननु प्रतियोगि—आधारस्य प्रतियोग्याधेयः, आधेयस्य प्रतियोग्याधार इति । तथा चाधेयापेक्षया यत्राधारो व्यापको भवति यत्र वाऽऽधारापेक्षया यत्राधेयो व्यापको भवति तदाऽधिकालङ्कारः । अत्राधेयस्य श्रीकृष्णस्य, आधारस्य राधिकामनसः ।

मेव भेद. । विशेषोऽयमिति नवीनो मधिकारकारः । समाधिरिति—समाहितमिति संज्ञा वा, यत्र कार्यसम्बन्धेन समाधीयते स समाधिः । अत्राकस्मिककार्यागमस्य प्रधानत्वेन विवक्षा, इतरेषां तु गौणत्वेन । सममिति—अस्य तयो भेदा रसगङ्गाधरे सूचिता. । विषम इति—अस

अपकारिणोऽपकाराशामर्थ्येन तत्प्रियस्य योऽपकारस्तदुक्तिः स्ववदपा यदि भवति तदा प्रत्यनीकम् । यथा—

माधुर्य्यमादाय तवाननेन कलङ्कधारी विहितः शशाङ्कः ।
तेनैष राधे ! तव वल्लभलाटसन्निधाने तव मां हिनस्ति ॥ १७०

**तुल्येन लक्ष्मणा लोकेनान्यद्यदि निगूह्यते ।**
**सहजेनेतरेणापि त-(५३)न्मीलितमपि द्विधा(प)॥२०६का–**

एकेन वस्तुना अन्यदस्तु यदि तुल्येनालोकेन चिह्नेन निगूह्यते सहजेन स्वाभाविकेनेतरेणागन्तुकेन वा स मीलितनामाऽलङ्कारः । क्रमेणोदाहरणे—

स्वतश्चपललोहिते सुमुखि ! राधिके ! ते दृशौ
गतं सहजलालसं प्रकृतिमन्दमन्दं स्मितम् ।
स्वभावमृदुवक्रता ललितमर्दमर्द वचो
मदश्च मदनोऽथवा मधुमदश्च केर्लक्ष्यताम् ॥ १७१

सञ्जातकम्पोत्पुलका हिमागमे स्नानोत्थिता कृष्णादृगम्लपातिनीम् ।
शीतार्दिता भाववती नु वेति तां विज्ञाऽपि न ज्ञातवती सखी सखी ॥ १७२

पूर्वंच जत्वं, उत्तरत्रागन्तुकम् ।

**स्थाप्यते खण्डते वाऽपि पूर्वं पूर्वं परेण यत् ।**
**विशेषणतया वस्तु सा द्विधेकावली(५४) भवेत् (प)॥२०७का–**

माधुर्य्यमिति—हिनस्ति, विच्छेदे चन्द्रस्योद्दीपकत्वेन पीडाकरत्वं ज्ञेयमिति भावः । स्वत इति—अत्र च स्वभावसिद्धेन महता नेत्रस्य चाञ्चल्येनारुण्येन च यौवनमत्तताऽऽदिकम्न्यतयं

दैर्यं मंचा । एतदतिरिक्ता अलभ्ऽऽत्यलङ्काराः प्रपञ्चायितानीति बहुभिर्न गण्यन्ते । अधिक इति—अतिशयोक्तिद्वितीयभेदो विशेषत्वात्तदन्तर्भुक्तोऽयमिति केचिदाधुनिकाः—परमाधाराधेययोर्विस्तृतलघुशोभाऽऽधायकत्वादस्य विशेष इति सर्वं स्वस्थम् । अल्पमित्यलङ्कारः 'अल्पन्तु सूक्ष्मादाधेयादाधारस्यातिसूक्ष्मते'ति लक्षितः केचित्तु स्वीक्रियते । प्रत्यनीकमिति लौकिकन्यायमूलोऽलङ्कारनिर्देशो वैचित्र्यात् । 'यथाऽनीकेऽभियोक्ते तत्प्रतिनिधीभूतमपरं मृदुतया कश्चिदभियुङ्क्ते तथेह प्रतियोगिनि विजेये तदीयोऽन्यो विजीयते इत्यर्थं' इति संज्ञाऽन्वर्थता मम्मटभट्टैः प्रतिपादिता । यदस्य पञ्च भेदाः केचिद्दर्शितास्तत्प्रदर्शनमात्रम् ।

(प) मीलितम्—अत्र निगूहनन्तु बलीयस्तया—तेन सामान्यालङ्कारभेदः सूक्ष्मः । एका-

परेण परिवेल्यर्थः । क्रमेणोदाहरणे—

यस्यां रजन्यः समणिप्रदीपा मणिप्रदीपाश्च रतेऽप्युपहार्याः ।
रतञ्च कृष्णप्रणयैकसारं कृष्णश्च सर्वासु बलासु तुल्यः ॥१०३ अत्र स्थापनम् ।

प्रीतिर्न सा प्रेति न या परं जनुर्न तज्जनुर्यत्र महाकुलोद्भवम् ।
महाकुलं तन्न न यत्र वैष्णवं न वैष्णवः सोऽपि न यो व्रजप्रियः ॥ १०४

अथ खण्डनम् ।

पूर्वानुभूतस्मरणं तत्समाने विलोकिते ।
स्मरणम् (५५) (प)— २०८का—

विलसत्कलमेकमदता विलोलदीर्घं रथाङ्गयुगलेन ।
छिन्नार्द्धहाराराधास्तनयोः स्मारितः कृष्णः ॥ १०५

भ्रान्तिमां(५६)-स्तद्धीरतस्मिन् साम्यभाजि यत् (प) ॥ २०९का

साम्यं सादृश्यम् । यथा—

तापिञ्छद्रुममञ्जरीति नखरैश्छित्वा श्रुती कुर्वते
यां काश्चित् कबरीभरे कुवलयश्रेणीति यां कायन ।
गाढन्ते कुलसुभ्रुवोऽपि यमुनावन्येति यामङ्गने
कृष्णस्य व्रजरञ्जनी जयति सा तेजस्तरङ्गावलिः ॥ १०६

संवृतं बभूव । मतस्यापेवं भवति । एवमुत्तरत्रापि ज्ञेयम् । संजातेति—स्वाभाइत्यिते भागानुकूल कम्पेन श्रीकृष्णदर्शनजन्यः कम्प आहतो बभूव । विसेति—अत्र यथा कलकण्ठदर्शनेन छिन्नार्द्धहारस्य साम्यं, चक्रवाकद्वयदर्शनेन स्तनयोः साम्यं ज्ञेयम् ।

---

यमीति—एकावली हारः, तद्दत्तापि विशेषणानां मालाऽकारेण ग्रथनम् । साम्यमिति—साऽसाम्यमानिमूलकोऽर्थः, न केवलं भातिमात्रं मनोवृत्तिमयसुज्ञानमम् । तेनाविविविहन्तिवाधिति वाचमात्रे नातिव्याप्तिः । भ्रान्तिमानिति—अत्रापि साटश्यमूलता बीजम् । भ्रान्तिरत्र प्रतिभोत्था साडाग्यकल्पिरैव ग्राह्या, न स्वरमोत्था, शुक्तिकायां रजतमिति प्रतीति सम्प्रदाय सिद्धान्तः । प्रतीपमिति—प्रतिकूलवर्त्तित्वादिय संज्ञा । प्राचस्त्वनुपमाभेदस्ताभीरयन्ति, 'यथाकथञ्चिद् सादि समस्तानां साधमर्त्यात् । नानोपमानोपमयमानसाश्च एव तत्पूर्वं', परन्तूपमानतिरस्कारसाम्येन व्यतिरेकालङ्कारविषयत्वपेन प्रातिकूल्यग्राह्यमे, तद् इत्यिनीपमिति ।

यथा वा—

पृष्ठे मणीन्द्रमहसि प्रतिबिम्बमेव केशस्य केशपरिशेष इति भ्रमेण ।
उल्लासयत्यसकृदङ्गुलिपल्लवेन सा व्यपधीरजनि केशव केशबन्धे ॥ १७७

उपमानस्य धिक्कार उपमेयस्तुतो यदि ।
(५७)प्रतीपमुपमानस्य धिक्कृत्यै चोपमेयता (फ) ॥ २१०ख-

उपमेयस्तुत्यर्थमुपमानधिक्कारो यदि तदा प्रतीपं, यदि वा धिक्कारायैव उपमानस्यैवोपमेयता तदा चेति द्विविधम् । क्रमेणोदाहरणे—

तव जयति जगत्यां राधिके ! भ्रूविभङ्गे
किमिति कुसुमचापश्चापमन्यं बिभर्त्ति ।
विलसति मुखबिम्बे वेधसा वा किमर्थं
व्यरचि विधुविधाने निष्फलोऽयं प्रयासः ॥१७८

वरतनु ! ननु सत्यो हन्त वैदग्ध्यमुग्धः
शिवमिव भुवि भद्राभद्रभावेऽनभिज्ञः ।
तव विगतकलङ्केनाननेनैव योऽयं
शशिनमुपमिमीते नैव लज्जां करोति ॥ १७९

मम वदनमिव नयनानन्दकमिति मा कृथाः सुतनु ! गर्वम् ।
अपरोऽपि कश्चिदेवं राकायां स्फुरति शीतांशुः ॥ १८०
अहमेव दारुणतम इति मा कुरु कालकूट ! गुरुगर्वम् ।
त्वत्तोऽपि दारुणतमो दुर्लभलोके मनोरागः ॥ १८१

इत्याद्यपि तद्भेदान्तर्गतम् ।

पृष्ठ इति—श्रीकृष्णस्य केशबन्धने कर्मणि व्यपधीरजनि । व्यपत्वे कातरमाह । मणीन्द्र इन्द्रनीलमणिस्तद्वन्महस्तेजो यस्य तथाभूते पृष्ठे केशस्य प्रतिबिम्बमेव केशस्य परिशेषोऽग्रभाग इति भ्रमेणाङ्गुलाङ्गुष्ठं नयन्ती । ममेति—शरत्काले राकायां पूर्णिमायां शीतांशुश्चन्द्रः । अतिशयोक्त्या श्रीराधाः प्राह । अहमेवेति । दुर्लभलोके श्रीकृष्णे ।

(फ) सामान्यमिति—तत्त्वतो भेदबहुलोऽप्योढमपि कविनिर्मितिगौरवेण समानगुणत्वेन निबध्यते चेदस्तु तदाऽयम् । तत्त्वतो भेदानाघ्रातमपि तेन विशेषेण भेदेन यद्विशिष्यते स विशेषः । तयोरेकत्र सादृश्येन वैलक्षण्यं स्फुटतरं ज्ञानमिति च ज्ञेयम् । एकत्र वस्तुसामान्य-

प्रस्तुतस्याप्रस्तुतेन गुणैकत्वविवक्षया।
ऐक्यं निबध्यते योगाद्यत् सामान्यं(५८) तदिष्यते ॥३११ का—

राधे! तडिद्गौरि! तवैष गण्डयोः कर्णान्तलम्बी नवकेतकीच्छदः।
न सौरभेणापि गतो विभिन्नतां मधुव्रतेनैव विविच्य बोधितः ॥ १८२

अथवा—द्विरददरदनश्लक्ष्णे चारुपर्यङ्कराजे क्षतकनकपुनि तल्पे मल्लिकापत्रिकाभे।
शशिमहसि निदाघे प्राङ्गने निर्वितानि जयति निरवलम्बस्वापशालीव कृष्णः ॥

आधारस्य प्रसिद्धस्याभावेऽप्याधेयदर्शनम्।
एकस्य युगपद्वृत्तिरनेकत्र स्वरूपतः ॥
एकस्यैवातिचित्रस्य वस्तुनः करणेन हि।
तत्सामान्यान्यवस्तूनां करणं स भवेत्त्रिधा ॥
विशेषः (५९) (फ) —३१२का

येन प्रयत्नेन चित्रवस्तुकरणारब्धस्तेनैव प्रयत्नेन तथाविधाशक्यवस्त्वन्तर-मप्यारभत इति केचित् (फ)। क्रमेणोदाहरणानि—

लोकान्तरान्तः सुहृदां गतानां गिरश्च रूपाणि च लीलयश्च।
तथैव सन्तीह सुहृज्जनानां मनस्सु हो सौहृद! ते प्रभावः ॥ १८४

अत्र प्रसिद्ध आधारः सुहृदेव, तदभावेऽप्याधेयानां रूपादीनां स्थितिः।
नायं विरोधः, पूर्वदेशविषयत्वाभावात्। द्वितीयो यथा—

राधे इति—गण्डकेतकीपत्रयोः सुगन्धत्वेन केतकीच्छदो न भिन्नतां प्राप्तः किन्तु भ्रमरेणैव गण्डस्थलात् केतकीपत्रं भिन्नमिति विविच्य बोधितः। तथा च पूर्वानुभूते कर्णस्थोत्पले पतितुमागतो भ्रमरः पश्चात् कर्णस्थकेतकीपत्रगन्धेनान्धः सन् पलायितः, तद्दृष्ट्वा सर्वेषामिदं केतकीपत्रमिति ज्ञानं जातमिति भावः। केतकीगन्धो भ्रमरस्यासह्य इति सर्वत्र प्रसिद्धिः। प्रस्तुतस्य गण्डस्याप्रस्तुतेनागन्तुकेन सह योगात् पीतवर्णरूपगुणेनैकत्वविवक्षयैक्यं वर्णितम्। द्विरदेति—प्राङ्गनस्य शय्यानां सर्वेषां श्वेतत्वेनैक्यात् निरवलम्बस्वापशालीव तथा च सर्वेषामेव रदादीनां विभिन्नज्ञानाभावात् श्रीकृष्णः शून्यप्रदेशे स्वपितीति बुध्यते इत्यर्थः। मल्लिकायाः पत्रपुष्पैः कृतः कल्पपुत्तलिका यत्र तथाभूते। केचिदिति—केषाञ्चिन्मते येन प्रयत्नेनाद्भुतवस्त्वारब्धं तेनाशक्यवस्त्वन्तरारम्भो विशेषनामाऽलङ्कारः।

प्रतिमश्चाभे मन्तुनन्दनपरत भेदाद्वाभे दर्शिष्टामाश्रमे येऽयन्वर्थता संज्ञायाश्चेया। पञ्चोक्तिः

केचित् प्रवीणमतयः—"तत्तद्रसाप्लुतमयान् विषयान् विहाय सुग्धस्थिरं श्रयति मोक्षमरुस्थलीं यः। तस्यात्मनः कथमिवास्तु गुणो विनाशो भोगाभ्ययेऽपि विफला विमुता न यत्ने"ति।

इह रसघनवन्ध्ये कर्णपूरप्रबन्धे विशदपदकदम्बैष्टिप्पणीमादरेण।
व्यरचयदनुमत्या प्राच्यपाश्चात्यविद्यासरणिसरणबन्धो नास्ततन्द्रो नवीनः ॥ १
कौस्तुभे मणिमये वनमाला मौक्तिकावलिरिति प्रथमानाः।
उद्धुरं दधति यन्मयि मोक्षलाघवं किमपि तक्षषु यातु ॥ २
पुमर्थप्राप्तिसमया धिया या न्यस्तैकदा घूर्णनकेन केन।
प्रत्यग्रपुमर्थैकदर्शितेव साऽन्येन कृच्छ्रात् परिगिष्ठिताऽद्य ॥ ३
अप्रकाशानां समुद्दृप्तं ध्रुवं ज्योतिः प्रमाद्यताम्।
अस्तु मे शरणं वस्तु चिदानन्दमयं महत् ॥ ४
भट्टपल्लीनिवासस्य शिव ! श्रीशिवशर्मणः।
कल्याणवल्लिसोमे कृतौ प्रीतिरिहास्तु ते ॥ ५

इति वाशिष्ठान्वयसम्भव श्रीशिवप्रसादभट्टाचार्यकृताया-
मलङ्कारकौस्तुभमौक्तिकावल्या-सुत्तरार्द्धमवसितम्।
समाप्तोऽयं ग्रन्थः। शम्।

# परिशिष्टम् ।



छत्रबन्धः ।

सहसा सहसा राधाजघनीघरिसद्युति ।
इतरासां सुधासिन्धुधारा सा तु ममाशु तत् ॥
(२०१ पृ०)

शंखबन्धः ।

धेयमाधुर्यैरमर्यादा राधा माधवमार सा ।
सारमाऽधमाधारा धेयमाधुर्यशोभना ॥
(२०१ पृ०)






पताकाबन्धः ।

राम संसरसारभ्मे राधा साऽर रमाधवम् ।
वभ्मारररमाधारामेऽरं सारसतमरा ॥
(२०२ पृ)

गदाबन्धः ।

राम संसरसारभ्मे राधा साऽर रमाधवम् ।
वभ्मारररमाधारामेऽरं सारसतसरा ॥
(२०१ पृ)



आराध्यते सत्प्रतिपत्तिमद्भि-
धर्मो यदायं भवने वने वा।
श्रीमन्ति हित्वा भवनान्यतस्त्व
कस्मादरण्येषु मतिं करोपि ॥ ५ ॥
परप्रसादार्जितभैक्षवृत्ति-
रगण्यमानः खलरजनेन।
कुचेलभृद्बन्धुसुहृद्विहीनो
वनान्तभूमावपविद्धकाय. ॥ ६ ॥
मूर्तं दरिद्रत्वमिवोपगुह्य
कथ नु शोकस्य वश प्रयासि।
इमामवस्था हि तवेक्षमाणा
द्विपोऽपि बाष्पापिहितेक्षणाः स्युः ॥ ७ ॥
तदेहि पित्र्य भवन तवेद
श्रुतार्थसार भवतापि नूनम्।
संपादयेथा निर्वेसंस्तरमत्र
धर्मं च सत्पुत्रमनोरथ च ॥ ८ ॥

लोकप्रवादः खल्वपि चैष.—

परकर्मकरस्यापि स्वे निपानसुखा गृहा।
किं पुन· सुखसप्राप्ताः समृद्धिज्वलितश्रियः ॥ ९ ॥

अथ बोधिसत्त्वः प्रविविक्तसुखामृतरसपरिभावितमतिस्तत्प्रणयहृदय. समुपलब्धविशेषो गृहवनवासयो. कामोपभोगनिमन्त्रणाया तृप्त इव भोजनकथायामसुखायमान उवाच—

इद स्नेहोद्गतत्वात्ते काममल्पात्यय वचः।
सुखसंज्ञां तु मा कार्षीः कदाचिद्गृहचारके ॥ १० ॥
गार्हस्थ्य महदस्वास्थ्य सधनस्याधनस्य वा।
एकस्य रक्षणायासादितरस्यार्जनश्रमात् ॥ ११ ॥
यत्र नाम सुखं नैव सधनस्याधनस्य वा।
तत्राभिरतिसमोहः पापस्यैव फलोदय ॥ १२ ॥

यदपि चेष्ट गृहस्थेनापि शक्यमयमाराधयितु धर्म इति काममेवमेतत्। अतिदुष्कर तु मे प्रतिभाति धर्मप्रतिपक्षसबाधत्वाच्छ्रमबाहुल्याच्च गृहस्य। पश्यतु भवान्।

---

१ Mss. तवेक्ष्यमाणा. २ Mss निरसस्त्व°.